# श्रीमद्भीलाप्रवृत्तिः

व्याख्यानसहिता ।

भाष्यते प्रेषितेनेयं
तद्भावभावितात्मना ।

निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥

कलिकातायां
३ संख्यक-रमानाथ-मजुमदार-वर्त्म स्थ-सद्मतः
नवविधानमण्डल्या उपाध्यायेनोद्भासिता ।
मङ्गलगञ्जमिश्नप्रेसे मुद्रिता ।
१८२४ शाके ।

## कृतज्ञतास्वीकारः ।

मयूरभञ्जाधिपः श्रीमन्महाराजश्रीरामचन्द्रभञ्जदेवः पण्डितवर्गाय वितरणार्थं श्रीमद्गीताप्रपूर्त्तेः खण्डानां शतद्वयं गृहीत्वास्मभ्यं सत्वरमस्याः प्रचाराय सामर्थ्यमदात्। अतस्तदनुग्रहोऽयमस्माकं चिरस्मरणीयः सञ्जातः कृतज्ञतापाशेन चास्मानबध्नात्। शमस्तु तस्मायिति नः प्रार्थनम्

प्रकाशकानाम्।

# उपक्रमणिका।

कथमियं सात्वतसंहिता गीताप्रपूर्त्तिरिति नाम्ना सहृदयसन्निधौ प्रत्युपस्थापिता, तत्कारणप्रदर्शनं कर्त्तव्यमित्युपलभ्योपक्रमणिकायां दिङ्मात्रेण प्रपूरणानि प्रदर्श्यन्ते, सुधीभिरन्यानि च मूलपर्य्यालोचनयो-ह्याव्यानि। प्रथमन्तावत् निवृत्तिमूलकप्रवृत्तियोगपरेयमिति कुतो लभ्यते श्रीमद्गीतायाः प्रपूर्त्तिरूपेण तदेव विवेचनीयम्।

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्॥ २।४१।
त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्॥ २।४५।
श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि॥ २।५३।
विषया विनिवर्त्तन्ते निराहारस्य देहिनः।
रसवर्ज्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते॥ २।५९।
तानि सर्व्वाणि संयम्य युक्त आसीत मत्परः।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता॥ २।६१।
एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्व्वाणमृच्छति॥ २।७२।
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्य्यं न विद्यते॥ ३।१७।

इत्यादिषु निवृत्तियोगस्य प्राधान्यमुपलभ्यते। प्रवृत्तियोगस्य तु—

कर्म्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्म्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्म्मणि॥
योगस्थः कुरु कर्म्माणि सङ्गं त्यक्त्वा धनञ्जय।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते॥ २।४७।४८।

नियतं कुरु कर्म्म त्वं कर्म्म ज्यायो ह्यकर्म्मणः ।
शरीरयात्रापि च ते न प्रसिध्येदकर्म्मणः ॥
यज्ञार्थात्कर्म्मणोऽन्यत्र लोकोऽयं कर्म्मबन्धनः ।
तदर्थं कर्म्म कौन्तेय मुक्तसङ्ग. समाचर ॥ ३।८ ९ ।
कर्म्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात्सर्व्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ ३।१५ ।
तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर ।
असक्तो ह्याचरन् कर्म्म परमाप्नोति पूरुषः ॥ ३ १९ ।
मयि सर्व्वाणि कर्म्माणि सन्न्यस्याध्यात्मचेतसा ।
निराशीर्निर्म्ममो भूत्वा युध्यस्व विगतज्वरः ॥
ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनुसूयन्तो मुच्यन्ते तेऽपि कर्म्मभिः ॥
ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्व्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥ ३ ३०—३२ ।
ब्रह्मण्याधाय कर्म्माणि सङ्गं त्यक्त्वा करोति य. ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ ५।१० ।
मन्मना भव मद्भक्त. मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ९ ३४ ।
ये तु सर्व्वाणि कर्म्माणि मयि सन्न्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥
तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ १२।६।७ ।
एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ १८ ६ ।
यतः प्रवृत्तिर्भूतानां येन सर्व्वमिदं ततम् ।
स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ १८।४६ ।

इत्यादिषु सुष्ठु प्रचारः । प्रपूर्त्तावनयोरेवमेकत्र सन्निवेशोऽभिव्यक्तिश्च

अत: पुंभिर्द्विजश्रेष्ठा वर्णाश्रमविभागश: ।
स्वनुष्ठितस्य धर्मस्य संसिद्धिर्हरितोषणम् ॥ ८।८ ।

यदत्र क्रियते कर्म्म भगवत्परितोषणम् ।
ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम् ॥
कुर्व्वाणा यत्र कर्म्माणि भगवच्छिक्षयाऽसकृत् ।
गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च ॥ ८।२१।२२ ।

सा श्रद्धया भगवद्धर्म्मचर्य्यया जिज्ञासयाध्यात्मिकयोगनिष्ठया ।
योगेश्वरोपासनया च नित्यं पुण्यश्रव:कथया पुण्यया च ॥
अर्थेन्द्रियारामसगोष्ठ्यतृष्णया तत्सम्मतानामपरिग्रहेण ।
विविक्तरुच्या परितोष आत्मनि विना हरेर्गुणपीयूषपानात् ॥
अहिंसया पारमहंस्यचर्य्यया स्मृत्या मुकुन्दाचरिताग्र्यसीधुना ।
यमैरकामैर्नियमैरनिन्दया निरीहया द्वन्द्वतितिक्षया च ॥
हरेर्मुहुस्तत्परकर्णपूरगुणाभिधानेन विजृम्भमाणया ।
भक्त्या ह्यसङ्ग: सदसत्यनात्मनि स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रति: ॥ ८।८३-८६ ।

आस्तीर्य्य दर्भै: प्रागग्रै: कार्त्स्न्येन क्षितिमण्डलम् ।
स्तब्धो बृहद्वधात् मानी कर्म्म नावैषि यत्परम् ।
तत्कर्म्म हरितोषं यत् सा विद्या तन्मतिर्यया ॥ ८।८९ ।

यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखा: ।
प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्व्वार्हणमच्युतेज्या ॥ ८।९९ ।

अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूय: ।
मन: स्मरेतासुपतेर्गुणानां गृणीत वाक् कर्म्म करोतु काय: ॥ ८।१०७ ।

वाणीगुणानुकथने श्रवणौ कथायां हस्तौ च कर्म्मसु मनस्तव पादयोर्न: ।
स्मृत्यां शिरस्तव निवासजगत्प्रणामे दृष्टि: सतां दरशनेऽस्तु भवत्तनूनाम् ॥ ८।१३० ।

कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वानुसृतस्वभावात् ।
करोति यद्यत्सकलं परस्मै नारायणायेति समर्पयेत् तत् ॥ ८।१४३ ।

ज्ञानं यदा प्रतिनिवृत्तगुणोर्म्मिचक्रमात्मप्रसाद उभयत्र गुणेष्वसङ्ग: ।
कैवल्यसम्मतपथस्त्वथ भक्तियोग: को निर्वृतो हरिकथासु रतिं न कुर्य्यात् ॥ १२।३ ।

य एतान् मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान् ।
क्षुद्रान् कामान् चलै: प्राणैर्जुषन्त. संसरन्ति ते ॥ १२।२२ ।

इत्यादिषु। एकस्याद्दयस्य तत्त्वस्य ब्रह्म परमात्मा भगवानिति संशब्दनस्यान्वर्थता प्रपूर्वावध्यायत्रितयेन विशिष्टतया प्रदर्शिता, गीतायां पुनस्तन्निवचनमेतेषु दृश्यते—

ब्रह्म—ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते॥
सर्व्वतः पाणिपादं तत् सर्व्वतोऽक्षिशिरोमुखम्।
सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति॥
सर्व्वेन्द्रियगुणाभासं सर्व्वेन्द्रियविवर्ज्जितम्।
असक्तं सर्व्वभृच्चैव निर्गुणं गुणभोक्तृ च॥
बहिरन्तश्च भूतानामचरं चरमेव च।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत्॥
अविभक्तञ्च भूतेषु विभक्तमिव च स्थितम्।
भूतभर्त्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च॥
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्व्वस्य धिष्ठितम्॥ १३।१२—१७।

परमात्मा—उपद्रष्टानुमन्ता च भर्त्ता भोक्ता महेश्वरः।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः॥ १३।२२।
अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते॥ १३।३१।

भगवान्—पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया।
यस्यान्तःस्थानि भूतानि येन सर्व्वमिदं ततम्॥ ८।२२।
पिताहमस्य जगतो माता धाता पितामहः।
वेद्यं पवित्रमोङ्कार ऋक् साम यजुरेव च॥
गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृत्।
प्रभवः प्रलयः स्थानं निधानं वीजमव्ययम्॥ ९।१७,१८।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्त्यव्यय ईश्वरः॥

वाक्यानामेतेषां प्रवृत्तिर्विशेषाभिव्यक्त्याकरे सुधीभिर्द्रष्टव्या। विषयिविषयाभिधेययोरध्याययोर्जीवस्य प्रकृतेश्च तत्त्वं प्रवृत्तौ यथायथं निर्दिष्टं सृष्टेर्जीवगतेश्च। सृष्ट्या स्रष्टुः सम्बन्धस्य रहस्यं यद्गीतायामभिहितमेतेषु—

मया ततमिदं सर्व्वं जगदव्यक्तमूर्त्तिना।
मत्स्थानि सर्व्वभूतानि न चाहं तेष्ववस्थितः॥
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्।
भूतभृन्न च भूतस्थो भूतात्मा भूतभावनः॥
यथाकाशस्थितो नित्य वायुः सर्व्वत्रगो महान्।
तथा सर्व्वाणि भूतानि मत्स्थानीत्युपधारय॥ ९ ४—६।

तत्पुनस्तत्त्वदृष्ट्या प्रत्यपीपददभिव्याञ्जीचासौ। तया च सर्व्वेषां वेदान्तवादिनां मतसामञ्जस्यमभूत्। विवर्त्त-परिणाम-कार्य्यकारणानन्य-भूतार्थत्वादिवादिनां सन्निवेशोऽत्र चारुतयैव प्रतिभाति।

यो मां पश्यति सर्व्वत्र सर्व्वञ्च मयि पश्यति।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति॥ ६।३०।
समं सर्व्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति॥
समं पश्यन् हि सर्व्वत्र समवस्थितमीश्वरम्।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम्॥ १३।२७।२८।

इत्यादिषु दर्शनं यथा स्फुटं न तथा श्रवणम्।

मच्चित्तः सर्व्वदुर्गाणि मत्प्रसादात्तरिष्यसि।
अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि॥ १८।५८।

इत्यत्र यदपि श्रवणं ध्वनितं, तदपि "ये मे मतमिदं नित्यमनुतिष्ठन्ति" इत्यादिषु गणयितुं शक्यम्। अन्तरालोकसंक्रामणन्तु निःसन्दिग्धम्।

तेषां सततयुक्तानां भजतां प्रीतिपूर्व्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ १०।१०।११ ।
सर्व्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनञ्च ।
वेदैश्च सर्व्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ १५।१५ ।

दर्शनादप्यधिको हि संस्पर्शः । प्रपूर्त्तौ तस्य सर्व्वत्राभिव्यक्तिर्या दृश्यते, मूलन्तस्या गीतायामेव । यथा—

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ ६।२८ ।

दर्शनश्रवणनिर्द्देशाध्याये स्फुटमस्फुटं सर्व्वं स्फुटतामापदिति स्यादेव सर्व्वेषां गोचरः । साधननिर्द्देशाध्याये स्मरणकीर्त्तनवन्दनादि-साधनानामतिविस्तृतिः, गीतायान्तु पद्येष्वेषु दिङ्मात्रनिदर्शनम्—

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ ८।१४ ।
सततं कीर्त्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ ९।१४ ।
अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ ९।२२ ।
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ ९।२६।२७ ।
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ १०।९ ।

प्रपूर्त्तौ विषयविषयिसम्बन्धप्रदर्शनमतिविस्तृतम्, गीतायां स्फुट-तया तद्विरलत्वेऽपि—

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ १०।९ ।

इत्यादिषु ;

कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १०।१७ ।

इत्यस्य प्रश्नस्योत्तरभूते विभूतियोगे ;

समं सर्व्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ १३।२७ ।

इत्यत्र च तन्मूलमन्वेष्टव्यम् ।

भक्तिर्गीतातः प्रवर्त्तिता प्रोल्लासमाप्ता सात्त्वतसंहितायामिति अपूर्त्तिरेव विशिषेण प्रतिपादयिष्यति । गीतोपनिषदि—

योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥ ६।४७ ।
सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १२।१४ ।
माञ्च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ १४।२६ ।
यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्व्वविद्भजति मां सर्व्वभावेन भारत ॥ १५।१९ ।

इत्यादिभिर्भक्तिरुद्भासिता ।

"निहत्य धार्त्तराष्ट्रान् नः का प्रीतिः स्याज्जनार्द्दन।" (१।३५) इति सन्तोषार्थे प्रीतेर्व्यवहारो गीतोपनिषदि दृश्यते, न पुनः प्रेमपर्य्यायत्वेन। एवमपि "भक्तोऽसि मे सखा चेति" (४।३) ; "प्रियो हि ज्ञानिनोऽत्यर्थम्" (७।१७) ; "मय्यर्पितमनोबुद्धिः" (८।७) ; "पिताहमस्य जगतो माता धाता पितामहः" (९।१७) ; "मच्चित्ता मद्गतप्राणाः" (१०।९) ; "पितासि लोकस्य चराचरस्य" (११।४३

"पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम्" (११।४४) इत्यादिषु प्रीतेर्यन्मूलमुपन्यस्तं संहितायां, सातिसमृद्धिमाप्ता प्रपूर्त्तिमिमामलङ्कृतवती।

असक्तबुद्धिः सर्व्वत्र जितात्मा विगतस्पृहः।
नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति॥
सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा॥ १८।४९।५०।
ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति।
समः सर्व्वेषु भूतेषु मद्भक्तिं लभते पराम्॥
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥ १८।५४।५५।

इत्येते कथमस्याः पारमहंस्यसंहितायाः सूत्रभूता, द्रष्टव्यन्तदाकरे। इत्यलं पल्लवितेन।

---

# श्रीमद्गीताप्रपूर्त्तिः

## प्रथमोऽध्यायः।

### वस्तुनिर्द्देशः।

यो निवृत्तशिरोरत्नव्याससूनोर्हृदम्बुजम्।
आपादयद्विकचतां तं परं पुरुषं भजे॥
व्यासहृत्‌क्षेत्रमासाद्य गीताबीजं विशुष्कवत्।
आसिञ्चयन् बोधवारि पुनः प्रारोहयद्विभुः॥
¹ सात्त्वतसंहितोत्थेयं गीताप्रपूर्त्तिरुन्नता।
निवृत्तसम्प्रवृत्तानां योगिनां चित्तचन्द्रिका॥
प्रवर्त्तनास्य योगस्य सप्तवारानभूत्पुरा।
स नवद्वीपचन्द्रस्योन्नतौ संस्फीततां गतः॥
वैष्णवाचार्य्यपादानां पदवीमनुगच्छतः।
दासस्यास्यास्तु हृत्पद्मं श्रीचैतन्यपदास्पदम्॥
श्रीमच्छङ्करपादानां तेन सम्मेलनं पुनः।
पश्यन् धन्योऽस्म्यविच्छिन्ना विधातुः कीर्त्तिरुत्तमा॥

१। जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरयः।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि॥१।१।१॥

१। फलकामप्रणोदितकर्म्मप्रचुरवैदिकसमयोक्तगायत्रीसम्मत-ध्यानप्रेरणे न जातूपनिषद्भ्यां चित्तान्यहरताम्। अतस्ते निर्व्विसा ध्यानापरनाममननपरायणा मौनिलमवलम्ब्यारण्ये वासमकल्पयन्नारण्यकाश्चेत्याख्यामगमन्। तेषु केचित् तमपि परिहाय प्रव्रज्यामेवाश्रयन्। यथा हि श्रीमच्छुकः सुतानुत्पाद्य, कन्याञ्च राजगृहे राज्ञा परिणयबन्धनेन संयोज्य, स्वपितरं व्यासञ्च शोकमहोदधौ निक्षिप्य प्रव्रज्यामकरोत्। स च पुनः कालेऽन्तर्भगवत्सौन्दर्य्यं सम्पश्यंस्तद्गुणैराक्षिप्तमतिः प्रव्रज्यातः स्वपितरमुपागमत्। द्वैपायनश्चाचिरसमाधि-लब्धां श्लोकचतुष्टयविस्फाररूपां सात्वतसंहितां तमध्यापयत्। ताञ्च स परिक्षितः सभायां व्याकृत्य स्फीततामापादयत् सूतश्च शौनकादीनाम्। एवञ्च सम्प्रदायपरम्परयोच्छ्वासं प्राप्ता श्रीमद्भागवताख्यया संहितेयमस्माकं करगताऽभूत्। योगिजनहृत्पद्मकोरकविकाशिनी रुचिरसौ पुनर्निखिलवेदेषु सकलकालोपयोगिन्या गायत्र्या एवाभ्यर्हितार्थत्वात् तस्या ग्रहणे सर्व्ववेदार्थग्रहणसिद्धत्वाच्च, तत्सम्मतध्यानप्रेरणे क्रोडीकृत्य निवृत्तसम्प्रवृत्तयोगव्याख्यानमूलं श्लोकमिममादिमं प्रोद्भासयते जन्मादीति। "श्रीशुकादीनामपि तल्लीलाश्रवणे रागतः प्रवृत्तिर्युज्यते" इत्युक्तदिशा ग्रन्थेऽस्मिन् निवृत्त्यनन्तरं प्रवृत्तियोगस्य प्रवृत्तिः प्रदर्श्यते। अतः श्लोकस्यास्य प्रथमपादद्वये प्रवृत्तियोगस्य द्वितीयपादद्वये निवृत्तियोगस्योल्लेखः। तत्र वैदिकप्रवृत्तिमत् कर्म्म परिहाय निवृत्तिसिद्ध्यनन्तरं भगवत्प्रेरणया तत्तोषणार्थां प्रवृत्तिरुत्पद्यते। अतो व्याख्याने गायत्र्यां यथाग्रे ध्यानं पश्चात् प्रेरणा तथैवात्र व्याख्यायते। सत्यं सत्तामात्रं सर्व्वातीतं सत्स्वरूपं, सर्व्वसत्ताप्रदं—श्रीमज्जीवः, सर्व्वकालदेशवर्त्तिनं—श्रीमद्विश्वनाथः, परं परमेश्वरं धीमहि ध्यायेम मननविषयं कुर्य्याम। 'पाण्डित्यञ्च निर्व्विद्याथ मुनिः' इति श्रुतेः। 'सत्तामात्रं निर्व्विशेषं निरीहम्' (२।३९*) इत्यत्र परमपुरुषस्यैव

---

* ग्रन्थस्यास्य द्वितीयाध्यायगत ऊनचत्वारिंशश्लोकः। एवमन्यत्र बोध्यम्।

सत्तामात्रत्वेन ग्रहणमनुमोद्यते, अतो निवृत्तिमार्गे तादृगेव बोध्यम्। न खलु विषयजातमविलोप्य परब्रह्मणः सत्तामननं साक्षात्करणञ्च सम्भवत्यतस्तदेव दर्शयति—स्वेन धाम्ना ज्ञानप्रकाशेन सदा निरस्त-कुहकं निरस्तं तिरोहितं कुहकं व्याकृतनामरूपावरणं यस्मिंस्तम्। "न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्" (गी, ९।५) इत्यनया रीत्या जगत्सम्बन्धवर्ज्जितचिन्मात्रतया तत्सत्ता ध्यायते निवृत्तयोगिभि-रिति फलितार्थः। एवं जगत्सम्पर्कविवर्ज्जितचिन्मात्रसत्ताध्याने जगत् किमिव प्रतीयते? यत्र चिन्मात्रे परब्रह्मणि त्रिसर्गः सत्त्वरजस्तमसां सर्गो मृषाऽपरमार्थभूतः प्रतीयते। आश्रयसत्यत्वात् तदाश्रितस्य जगतः सत्यत्वं भवितुमर्हति, तत्कथं तन्मिथ्याभूतं प्रतीयते? योगप्रलय-सामर्थ्यात्। प्रलयस्तु प्रागवस्थाप्राप्तिरेव। वस्तुतस्तु मृषाप्यमृषा, अन्यथा 'सत्यस्य योनिं निहितञ्च सत्ये' (२।३७) इति स्वोक्ति-विरोधः, अत्रापि 'अर्थेष्वि'ति न सिद्ध्यति। तत्र दृष्टान्तः, तेजोवारि-मृदां यथा विनिमयो व्यत्यासः। तेजसि वारि वारिणि मृत्काचादि यथा व्यत्ययेन प्रतीयते तथा। विना तेजो न तस्मिन् वारिणी, विना वारि न तस्मिन् काचादेश्च प्रतीतिरुत्पद्यते; काचादेरपि क्वचा-प्यदृष्टचरत्वे वारिणि तस्य व्यत्यासो न प्रत्ययविषयः। अतः सद्वस्तुनि प्रतीयमानं जगत् सदेव भवितुमर्हति। ततो हि श्रुतिसिद्धतेजो-ऽबन्नानामत्र दृष्टान्तत्वेन ग्रहणम्। ननु सदेव सत्यं तत्सृष्टतेजोऽबन्नानि विकारमात्रत्वात् नामधेयानि, तत्त्रिवृत्करणेन सृष्टं जगच्चासत्यमेव। नामधेयान्यपि नानृतानि, 'नामरूपे व्याकरवाणीति' प्रतिज्ञा ज्ञान-स्वरूपस्य तस्य ज्ञेयरूपत्वमेव तेषां व्यनक्ति। अतएव चाह श्रुतिः 'त्रीणि रूपाण्येव सत्यम्' इति। उक्तञ्च श्रीमच्छङ्करेण 'सर्व्वञ्च नाम-रूपादि सदात्मनैव सत्यं विकारजातं स्वतस्त्वनृतमेव' (छा, उ, भा,) इति। योगप्रलयेन यत् मिथ्यात्वप्रतिपादनं तत् सतो व्यतिरेकात्। 'किं पुनस्तत् कर्म्म यत् प्रागुत्पत्तेरीश्वरज्ञानस्य विषयो भवतीति?

तत्त्वान्यत्वाभ्यामनिर्व्वचनीये नामरूपे अव्याकृते व्याचिकीर्षिते इति ब्रूमः ( वे, सू, भा, )' इति श्रीमच्छङ्करानुसारेण नामरूपयोर्द्वयत्वे सिद्धे तयोर्मिथ्यात्वे स्वीकृते पुनर्मिथ्याज्ञानत्वमेवेशितुः प्रसज्यते। ज्ञेयमथ च मिथ्येति विप्रतिषिद्धम्। 'अनेन जीवेनात्मनानुप्रविश्य' इत्यत्र श्रीमच्छङ्करो जीवस्य सत्यत्वमपि स्वीकृतवान्। यथा 'ननु वाचारम्भणमात्रश्चेज्जीवो मृषैव प्राप्तः, तथा परलोकेहलोकादि च कथं तस्य ? नैष दोषः। सदात्मना सत्यत्वाभ्युपगमात्।' इति। एवं सति केषाञ्चिद्वैष्णवाचार्य्याणां मतमुद्दिश्य श्रीमज्जीवेन यदुक्तम् 'अत्राय-मप्येकेषां पक्षः। परमेश्वरस्य शक्तिद्वयमस्ति, स्वरूपाख्या मायाख्या चेति। पूर्व्वया स्वरूपवैभवप्रकाशना, अपरया त्विन्द्रजालवत् तयैव मोहितेभ्यो जीवेभ्यो विश्वसृष्ट्यादिदर्शनम्। दृश्यते चैकस्य नानाविद्यावतः कस्यापि तथा व्यवहारः। न चैवमद्वैतवादिनामिवेद-मापतितम्। सत्येनैव कर्त्रा सत्यमेव द्रष्टारं प्रति सत्ययैव तया शक्त्या वस्तुस्फोरणात्' इति तद्योगप्रलयपक्षपातिनः श्रीमच्छङ्करस्याभिप्राया-पर्य्यालोचनात इति स्थितम्। निवृत्तियोगविषयव्याख्यानानन्तर-मादिमपादद्वयगतप्रवृत्तियोगसङ्गतवाक्यानि व्याख्यायन्ते। तत्र प्रथमम्—'तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरयः' इति। यत् यत्र ब्रह्मणि वेदे सूरयः पण्डिता आत्मतत्त्वविदो वर्त्तमाने मुह्यन्ति मोहं प्राप्नुवन्ति, तद्ब्रह्म वेदं भूतकाले आदिकवये ब्रह्मणे हृदा तदन्तःकरणयोगेन यस्तेने प्रकाशितवान्। अत्रायमभिप्रायः— यदा हि निवृत्तियोगिनः सर्व्वनिवृत्तौ परब्रह्मणि विलीनभावेन तिष्ठन्ति, तदा तेनालिङ्गिता नात्मानं ते विजानन्ति। अस्यामवस्थायां तेषां विलीनप्रायेऽन्तःकरणे 'अहं ब्रह्मास्मी'ति वाक् स्फुरति, ततो लब्धप्रबोधा स्वेभ्योऽन्यतम इव तं परमेश्वरं स्वे महिम्नि प्रतिष्ठितं स्वरूपसौन्दर्य्येणाप्रतिमं पश्यन्तस्ते मोहं प्राप्नुवन्ति विच्छिन्नमतयो भवन्ति, तदाज्ञापालने कृतसङ्कल्पाश्च यथाभूद्ब्रह्मणः पितामहस्यादि-

सृष्टौ। तस्य च व्यामोहं प्राप्तवतः 'तप तप' इति वाक् श्रुतिपथं गता। तया च प्रचोदितस्तपश्चरणेन सर्व्वैश्वर्य्यपूर्णं भगवन्तं प्रत्यक्षीकृत्य स स्वाधिकारे सामर्थ्यं लब्धवान्। एवं यदा ते निवृत्तियोगिनो लब्धप्रबोधास्तदा कोऽसौ तेषां प्रत्यक्षविषयोऽभूत्? यः स्वराट् स्वे महिम्नि स्वरूपे विराजमानः, अभिज्ञः ज्ञानैश्वर्य्यपूर्णः। अर्थेषु नामरूपेष्वन्वयात् सम्बन्धात् इतरतः व्यतिरेकाच्च तेभ्योऽस्य जगतो यतो जन्मादि। जन्मस्थिती अन्वयात् भङ्गः स्वकारणे लयो व्यतिरेकादिति यथायोग्यं बोध्यम्। एवं निवृत्तियोगे विलुप्तं जगत् पुनर्भगवत्प्रेरणया प्राप्तप्रबोधानां योगिनां सन्निधौ तेनैवापूर्णं तल्लीलास्थानत्वेनाविर्भवति, न तेन चापरोक्षदर्शनं तिरोधत्ते स्वच्छत्वापादनात्तस्य पूर्व्वाभ्यस्तयोगेन। तत्रापि स्वराट्त्वेनाभिज्ञत्वेन च भासमानत्वात् सर्व्वान्तर्भावकत्वं सर्व्वगतत्वमस्यानावृतमेवास्ते। यद्यपि निवृत्तिप्रवृत्तियोगयोर्विषयभेदप्रदर्शनाय व्युत्क्रमेण व्याख्यातमिदं पद्यं तथाप्यस्मिन् प्रवृत्तियोगे प्रवृत्तानामपि न निवृत्तियोगान्निवृत्तिः प्रत्युत तन्मूले निवृत्तियोगस्य चिरप्रतिष्ठेति प्रवृत्तिनिवृत्तियोगयोरेकत्र सन्निवेश एव वचनसौष्ठवं दर्शयति। न हि सर्व्वावरणासंस्पृष्टब्रह्मवस्तुसाक्षात्करणं विना योगः सिद्ध्यति, सुतरां तदेव निवृत्तिप्रवृत्तियोगयोर्मूलम्। अतएव 'धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि' इत्येषा द्वयोः साधारणभूमिः। तामिमामाश्रित्य साधने प्रवृत्ते प्रथममावरकस्य जगतो विलयनमेव कर्त्तव्यम्। तद्विलयने तु जगन्मिथ्याभूतं योगिदृष्टितोऽपसरति योगी च सर्व्वविलये स्वयमपि ब्रह्मणि विलीय वर्त्तते। नेयं विलीनावस्था नित्यकालिकी। तत्रान्तः स्फुरति हि ब्रह्मवाणी 'अहं ब्रह्मास्मी'ति। तच्छ्रवणेन लब्धजागरः सर्व्वान्तर्भावके तस्मिन् परब्रह्मणि सर्व्वं स पश्यति, पश्यंश्च तत्प्रेरणया संसारे विचरति। एवं प्रवृत्तियोगे प्रवृत्तस्यापि साक्षात्सम्बन्धेन परमपुरुषप्रत्यक्षीकरणान्न तस्मिन्निवृत्तियोगस्य निवृत्तिः। 'तेने ब्रह्म हृदा य

२ । धर्म्मः प्रोज्झितकैतवोऽत्र परमो निर्म्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।
श्रीमद्भागवते महामुनिकृते किं वापरैरीश्वरः
सद्यो हृद्यवरुद्ध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात् ॥१।१।२

आदिकवये' इत्यत्र कोऽयमादिकविरिति जिज्ञासायामत्रेदं विचार्य्यम् —यद्यपि मोक्षधर्म्मपर्व्वणि प्रद्युम्नो मनः अनिरुद्धोऽहङ्कार इत्युक्तं तथापि संहितायामस्यां मनोऽनिरुद्ध ( ३।२६।२८) इति निर्णयात् तद्-विलासो ब्रह्मा—"अनिरुद्धात्तथा ब्रह्मा" ( शा,प,३३९अ,७२श्लो, ) इति प्रतिजीवगतमन एवेति पर्य्यवस्यति ; योगवाशिष्ठोऽप्येतदेवानुमोदते। ब्रह्मणो जगत्स्रष्टृत्वं वेदप्रकाशकत्वञ्च पौराणिकैर्यद्गीयते न खलु तत् भगवन्निरपेक्षम् । प्रतिजीवमनःसन्निधौ तदनुरूपा सृष्टिः प्रकाश्यते स्वयं भगवता सङ्कल्पमात्रेण। तन्मनस्तामनुभवति स्वानुरूपामिति तस्मिंस्तत्प्रतिस्रष्टृत्वारोपः। यथा सृष्टिस्तथा वेदोऽपि तत्सन्निधौ प्रादुर्भवति भगवज्ज्ञानात् "ब्रह्मचारी जनयन् ब्रह्म" ( अ,वे, ११।२४प्र,५।७) "वेदोऽसि" (बृ, आ, ८।४।२६) इति च श्रवणात्। एवमादौ यत्सन्निधौ यद्गदा—"कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच, हृदयेन हि सत्यं जानाति, हृदये ह्येव सत्यं प्रतिष्ठितं भवति" ( बृ, आ, ५।८।२३ ) इति श्रुत्यनुसारतः—वेदप्रादुर्भावोऽभवत् स आदिकविरिति तत्त्वम्। 'सत्यमेकाक्षरं श्रुतम्' (शा,प, १९९ अ, ६३ श्लो,)इति सत्यस्य वेदत्वम्।

यानि प्रमाणितान्यङ्ग गीताभाष्ये समन्वये ।
सिद्धवस्तुतया तानि गृहीतान्यत्र सर्व्वतः ॥
श्रीमच्छ्रीधरपादस्य व्याख्यानं हि समुद्धृतम् ।
प्रायः सर्व्वत्र सुव्यक्तिविशेषवचनादृते ॥
पुरीवन्न वयं क्षन्तुं चापल्यं नोऽर्थयामहे ।
सिद्धान्तः कोऽपि चेच्छास्त्रविरुद्धोऽत्र विहन्यताम् ॥

२। निवृत्तियोगपरिपुष्टप्रवृत्तियोगविषयेऽस्मिन् शास्त्रे किं वक्तव्यं किं ज्ञातव्यं किं वा फलं तत्राह संहितेयं धर्म्म इति। अत्र महामुनिकृते स्वयं भगवता 'नित्यं स्थितस्ते हृद्येष पुण्यपापेक्षिता मुनिः' इत्युक्तदिशा हृद्यधिष्ठात्रा प्रोक्ते श्रीमद्भागवते निर्म्मत्सराणां मत्सरदोषरहितानां सर्व्वभूतानुकम्पिनां सर्व्वत्र भगवद्भाववशात् मैत्रीयुक्तानां सतां साधूनां भगवत्साक्षाद्दर्शनतदाज्ञापालनतः स्थिरत्वमुपागतानां परमः श्रेष्ठः प्रोज्झितकैतवः सर्व्वथा परित्यक्तं कैतवं फलान्तरवासनारूपं कपटं यस्मिन् सः, अव्यवहितभावेनेश्वराराधनलक्षणो धर्म्मो विद्यत इति शेषः। अत्र शिवदं परममङ्गलप्रदम्, आध्यात्मिकादितापत्रयोन्मूलनं वास्तवं परमार्थभूतं साक्षादपरोक्षदर्शनप्रत्यक्षं न तु कल्पनाप्रसूतं वस्तु परं ब्रह्म वेद्यं ज्ञातव्यम्। अपरैः साधनैः किं वा, अत्र शुश्रूषुभिः श्रोतुमिच्छुभिः कृतिभिर्निवृत्तियोगशोधितचेतोभिः सद्यस्तत्क्षणादेव ईश्वरो हृदि अवरुद्ध्यतेऽन्तर्द्धानविमुखो नित्यमवतिष्ठते। निवृत्तियोगपरिशोधितचित्तत्वलाभात् प्राक् भगवानाह श्रीनारदम्—'अविपक्वकषायाणां दुर्द्दर्शोऽहं कुयोगिनाम्' (७।१४) इति। श्रीमज्जीव आह—'ते जीवा ये केचिन्नीनतदर्थानुभवसंसारवन्तो, ये च तदैव वा लब्धमहत्कृपातिशयदृष्टिप्रभृतयस्तेषां तादृशपरतत्त्वलक्षणसिद्धवस्तूपदेशश्रवणारम्भमात्रेणैव तत्कालमेव युगपदेव तत्साम्मुख्यं तदनुभवोऽपि जायते। यथोक्तम्—"किं वा परैरीश्वरः सद्यो हृद्यवरुद्ध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्"' इति (भ, स,)। सत्यप्येवमपरिशोधितचित्तत्वात् परक्षणमेव दर्शनानुभवप्रतिरोध उपतिष्ठते, यथा श्रीनारदस्य। एतदभिप्रेत्यैव स पुनराह 'तच्छ्रवणमात्रेण तादृशत्वं वीजायमानमपि कामादिवैगुण्येन तदितरदोषेण प्रतिहतं तिष्ठति' इति (भ, स,)। वस्तुतस्त्वभिलाषवर्द्धनाय भजनारम्भे साक्षात्कारदानं, तदनन्तरं वासनानिवृत्त्यर्थं विच्छेदसागरे निक्षेपः, निवृत्त्यनन्तरम् 'आहूत इव मे शीघ्रं दर्शनं याति चेतसि' (७।१८) इत्यनुरूपमविच्छेदेन दर्शनदानमिति क्रमो ज्ञेयः।

३ । निगमकल्पतरोर्गलितं फलं
शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं
मुहुरहो रसिका भुवि भावुकाः ॥ १।१।३ ॥

४ । श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं
यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं गीयते ।
यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्म्यमाविष्कृतं
तच्छृण्वन्विपठन्विचारणपरो भक्त्या विमुच्येन्नरः॥१२।१३।१८

३ । निवृत्तियोगनिरतस्य श्रीमच्छुकस्य भगवद्गुणानुभवेनाक्षिप्त-चित्तस्य तत्प्रचाराय च महाप्रवृत्तिमतो वक्तृत्वं निखिलवेदसारत्व-ञ्चास्य प्रदर्शयन्तो भगवद्गुणश्रवणरसिकान् प्रोत्साहयति भागवतरसपाने निगमेति। शुकमुखाद्गलितं भ्रष्टम्, अमृतद्रवसंयुतं तद्भक्तिरसामृत-मधुरं, निगमकल्पतरोर्वेदरूपस्य कल्पद्रुमस्य रसं रसमात्रोपादानं फलम् आलयं देहबन्धनमुक्तिं व्याप्य भुवि अहो भावुकाः भक्तिविगलित-हृदया रसिका भक्तिरसज्ञाः पिबत ।

४ । अस्य श्रीभागवतस्य सूत्रभूतानां गीतान्तिमवाक्यानां विवृतिभूतस्यात्याश्रमिणां परमधर्म्मप्रदर्शकस्य निवृत्तिप्रवृत्तियोगपरत्वं विवृणोति श्रीमद्भागवतमिति। यत् श्रीमद्भागवतं पुराणं वैष्णवानां 'यस्यान्तःस्थानि भूतानि येन सर्व्वमिदं ततम्' (गी, ८।२२) इति परमपुरुषोपासकानां प्रियम् अमलं भगवत्साक्षात्कारप्रधानत्वादति-विशुद्धम्; यस्मिन् पारमहंस्यं परमहंसानां परमात्मनिष्ठानां तत्साक्षा-त्कारकृतार्थानां प्राप्यम् अमलं परं ज्ञानं गीयते कीर्त्त्यते, यत्र ज्ञान-विरागभक्तिसहितं ज्ञानं परमात्मानुसन्धानं विरागो वैराग्यं भक्तिर्भजनं तैः सहितं नैष्कर्म्म्यं भगवद्भाववर्ज्जितकर्म्माकरणं—ज्ञानादिसहित-

५। कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा
तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा।
योगीन्द्राय तदात्मनाऽथ भगवद्राताय कारुण्यत-
स्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ॥१२।१३।१९

मित्युक्तेर्भगवत्प्रेरणया तत्सर्व्वानुसरणं द्योततेऽतः परमित्यनुसज्यते अन्यथा भजनादिशून्यत्वमेवापतेत्, नैष्कर्म्म्यसिद्धेरभिहितं 'बुद्ध्या विशुद्धया युक्तः' (गी, १८।५१—५३) इत्यादि च नानुसज्येत ; अपि-चानन्तमधिकृत्यानुष्ठीयमानत्वाज्ज्ञानादिसाधनानां नित्यत्वं यदापतति तदपि न सिद्ध्येत्, 'महामुनीनां भक्तिज्ञानवैराग्यलक्षणं पारमहंस्य-धर्म्मम्' (५।५।२८) इत्यादेश्च विषयो नानुवर्त्तेत, ततः—परम-नैष्कर्म्म्यम् आविष्कृतं प्रादुष्कृतं प्रथमत्वेन प्रवर्त्तितम्, तत्पुराणं शृण्वन् पठन् विचारणपरः तन्निहितनिवृत्तिमूलकप्रवृत्तियोगविवेकपरायणः भक्त्या परया भक्त्या—एकत्र भक्तिशब्दोल्लेखादनन्तरं पुनर्भक्तिशब्द-प्रयोगः परमित्यस्य लिङ्गव्यत्ययेनानुषङ्गं घटयते—नरो विमुच्येत् विमुक्तो भवति। 'असक्तबुद्धिः सर्व्वत्र जितात्मा विगतस्पृहः। नैष्कर्म्म्य-सिद्धिं परमां सन्न्यासेनाधिगच्छति॥ सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे। समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा॥' (गी, १८।४९।५०); 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समः सर्व्वेषु भूतेषु मद्भक्तिं लभते पराम्॥' (गी, १८।५४) इत्येषां शास्त्रे-ऽस्मिन् विस्तृतिर्विवृतिश्चास्तीति पद्येनानेन प्रदर्श्यते।

योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥ (गी ६।४७)

इत्येष श्लोको निवृत्तियोगेन साक्षात्सम्बन्धसम्पन्नानां रागतः प्रवृत्तिमत्त्वं तेन च तेषां श्रेष्ठत्वं ख्यापयति।

५। सम्प्रदायपरम्परया निवृत्तिप्रवृत्तियोगयोर्मूलभूतस्य ज्ञानस्य

प्रवर्त्तना प्रदर्श्यते कस्मै इति। तत् शुद्धं पुण्यं विमलं निर्दोषं विशोकं शोकेनास्पृष्टम् अमृतं नित्यं सत्यं सत्स्वरूपं परं तत्त्वं धीमहि ध्यायेम, येन पुराऽयमतुलोऽनुपमो ज्ञानप्रदीपः कस्मै ब्रह्मणे आदिकवये विभासितः प्रकाशितः। तद्रूपेण तत्स्वरूपाविर्भूतेन ब्रह्मणा नारदाय, तद्रूपेण तत्स्वरूपाविर्भूतेन नारदेन कृष्णाय मुनये कृष्णद्वैपायनाय, तदात्मना तत्स्वरूपाविष्टेन द्वैपायनेन योगीन्द्राय शुकाय, तदात्मना तत्स्वरूपाविष्टेन शुकेन कारुण्यतः कृपावशात् भगवद्रातय परीक्षिते विभासितः। विभासित इति वचनेन न रचित इति तत्त्वविदः। तद्रूपेण तदात्मनेत्युक्त्या भगवत्स्वरूपाविर्भावेन तन्निश्वसितेन चोत्तरोत्तरसंहिताविस्तारः प्रतीयते। अतएवोक्तम्—

तस्मिन् स आश्रमे व्यासो बदरीषण्डमण्डिते।
आसीनोऽप उपस्पृश्य प्रणिदध्यौ मनः स्वयम्॥
भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले।
अपश्यत् पुरुषं पूर्णं मायाञ्च तदपाश्रयाम्॥
यया सम्मोहितो जीव आत्मानं त्रिगुणात्मकम्।
परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते॥
अनर्थोपशमं साक्षात् भक्तियोगमधोक्षजे।
लोकस्याजानतो विद्वांश्चक्रे सात्वतसंहिताम्॥ (१।७।३—६) इति।

अत्र 'चक्रे' इति पदं 'विभासितः' इति पदविरोधीति प्रतीतिमात्रम्। व्यासहृदये प्रतिभातमलेखनसाधनं तज्ज्ञानं तत्रैव संहिताकारमलभतेति तत्त्वम्। अतएवोक्तं स्कान्दे—

'व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित्।
अन्ये व्यवहरन्त्येतान्युरीकृत्य गृहादिव॥ इति।

अत्र श्रीमज्जीवेनोक्तं—'तद्रूपेणेत्यादिभिस्त्रिभिः पदैर्न केवल चतुःश्लोक्येव तेन प्रकाशिता, किन्तर्हि तत्र तत्राविष्टेनाखण्डमेव पुराणमिति द्योतितम्। अत्र मद्रूपेण च युष्मभ्यमिति सङ्कोचेनानुक्तोऽपि श्रीसूतवाक्यशेषोऽवगम्यते' इति। अल्पल्पमिदमुक्तम्, श्रीमद्गीकर्णेन

६। अहमेवासमेवाग्रे नान्यद्यत् सदसत्परम्।
पश्चादहं यदेतच्च योऽवशिष्यते सोऽस्म्यहम्॥

तदनन्तरं स्वरूपाविर्भूतैर्ब्रह्मसुतैः प्रकाशितोऽयं ज्ञानप्रदीपः। अतएवोक्तं पद्मपुराणे—

आकृष्णनिर्गमात्त्रिंशद्वर्षाधिकगते कलौ।
नवमीतो नभस्ये च कथारम्भं शुकोऽकरोत्॥
परिक्षिच्छ्रवणान्ते च कलौ वर्षशतद्वये।
शुद्धे शुचौ नवम्याञ्च धेनुजोऽकथयत्कथाम्॥
तस्मादपि कलौ प्राप्ते त्रिंशद्वर्षे गते सति।
ऊचुरूर्जे सिते पक्षे नवम्यां ब्रह्मणः सुताः॥ इति।

अत्र कथेत्युपलक्षणात् विस्मृतिर्व्यज्यते। द्रविड़भूमावस्य भक्त्याख्यस्य विशेषप्रकाशोऽभूत्—

उत्पन्ना द्रविडे साहं वृद्धिं कर्णाटके गता।
क्वचित् क्वचित् महाराष्ट्रे गुर्ज्जरे जीर्णतां गता॥

इति पद्मपुराणे भक्तिः श्रीनारदम्। भक्तिप्रकाशे द्रविड़स्याभ्यर्हितत्वमप्येकादशे—

कृतादिषु प्रजा राजन् कलाविच्छन्ति सम्भवम्।
कलौ खलु भविष्यन्ति नारायणपरायणाः॥
क्वचित् क्वचित् महाराज द्रविडेषु च भूरिशः।
ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी॥
कावेरी च महापुण्या प्रतीची च महानदी।
ये पिबन्ति जलं तासां मनुजा मनुजेश्वर।
प्रायो भक्ता भविष्यन्ति वासुदेवेऽमलाशयाः॥ (११।५।३८—४५) इति।

६। आदिकवये ब्रह्मणे यज्ज्ञानं भगवतोपदिष्टं तत् चतुःश्लोक्या निरूपयति अहमिति। भवदन्तर्यामितया प्रकाशमानः अहमेवाग्रे सृष्टेः प्राक् आसमेव। यत् सत् स्थूलं, यत् असत् सूक्ष्मं, यत् तयोः परं कारणं शक्तिरूपं, तत् न मत्तोऽन्यत् पृथक्। पश्चात् सृष्ट्यभिव्यक्तौ यत् एतत् स्थूलसूक्ष्मादिकं तदहम् मदभिन्नं, ब्रह्मणोऽप्रपञ्चस्वभावत्वेति

७। ऋतेऽर्थं यत् प्रतीयेत न प्रतीयेत चात्मनि।
तद्विद्यादात्मनो मायां यथाभासो यथा तमः॥

स्वभावत्वात् प्रपञ्चस्य ततः पृथक्करणासामर्थ्यात्। पृथक्करणे तु तेषामसत्त्वात् तदनुगतैव तेषां स्थितिर्न च पुनस्तेषां स्थितौ तस्य। स्थूलसूक्ष्मयोः कारणं या ब्रह्मशक्तिस्तस्या ब्रह्मणाभिन्नत्वात् तत्कार्य्याणामपि तथात्वम्। अतएव हि योगिदृष्टौ स्वच्छत्वापादितानां तेषामनावरकत्वम्। सर्व्वत्व भगवद्भावसाधनायास्या उक्तेः प्रयोजनम्। अत्र प्रवृत्तियोगस्य मूलं विन्यस्तम्। 'ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेत्—अहं ब्रह्मास्मीति। तस्मात् तत् सर्व्वमभवत्।' इति श्रुतावात्मानमेवेत्येवकारेण तदन्यत् न किञ्चनासीत् यत् सृष्टेः प्राक् तज्ज्ञानविषयं भवेत्, अतः 'अहं ब्रह्मास्मी'त्येतावन्मात्रं तस्य ज्ञानविषयमभवत्। तस्मात् सृष्ट्यभिव्यक्तौ तत् ब्रह्मैव 'सर्व्वं समाप्नोषि ततोऽसि सर्व्वः' (गी ११।४०) इति न्यायात् सर्व्वमभवत्। अत्र शक्तिशक्तिमतोरभिन्नत्वमेवाभिप्रेत्य श्रुतौ व्यक्ततया शक्तेरनुल्लेखः अन्यथा शक्तिं विना सृष्ट्यभिव्यक्तिरेव न सम्भवति। नामरूपयोरपि तथैव ज्ञेयं ज्ञानाभिन्नत्वात्। 'अहं ब्रह्मास्मी'त्यनेन ज्ञानं सर्व्वमभवदिति सूचनात्तेन शक्तिरपि द्योतते। प्रलये सृष्टिविलये योगप्रलये च योऽवशिष्यते सोऽहमस्मि। अत्र निवृत्तियोगस्य मूलं विन्यस्तम्। 'अहमादिश्च मध्यञ्च भूतानामन्त एव च' (गी १०।२०) इत्यत्र द्रष्टव्यम्। 'यथा कटकादिष्ववस्थात्रयेष्वपि सुवर्णत्वमेव सत्यम्, तथा जगदादिमध्यान्तेष्वनुस्यूतं सत्तामात्रं भगवत्स्वरूपम्' इति मुक्ताफलव्याख्या कैवल्यदीपिका।

सर्व्वेषामपि वस्तूनां भावार्थो भवति स्थित।
तस्यापि भगवान् कृष्णः किमतद्वस्तु रूप्यताम्॥ (१०।१४।५७)

इत्यत्र सर्व्वकारणकारणादतिरिक्तं न किञ्चन भवितुमर्हतीति ध्वनितम्।

७। कथमेवं भवति तत्कारणमभिधत्ते ऋतइति। अर्थं स्वातन्त्र्येण वस्तुत्वम् ऋते विना यत् स्थूलसूक्ष्मादिकम् आत्मनि मयि अन्वयात्

८। यथा महान्ति भूतानि भूतेषूच्चावचेष्वनु ।
प्रविष्टान्यप्रविष्टानि तथा तेषु न तेष्वहम् ॥
९। एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनः ।
अन्वयव्यतिरेकाभ्यां यत् स्यात् सर्व्वत्र सर्व्वदा ॥

२।९।३२—३५ ।

प्रतीयेत व्यतिरेकात् न प्रतीयेत च; तत् आत्मनो मम मायाम् अघटन-घटनपटीयसीं प्रज्ञाशक्तिं विद्यात् जानीयात् । तत्र दृष्टान्तः, यथा आभासः तेजसि वारिप्रतीतिः; यथा तमः सूर्य्यकिरणतिरोधाने तमिस्रायां सर्व्वविषयविलोपः ।

८। यद्येवं भगवत्सत्ताया विकारित्वमेवायातम्, नेत्याह यथेति । यथा महान्ति भूतानि देहस्यारम्भकानि तेजोऽबन्नानि उच्चावचेषु वरावरेषु भूतेषु अनु तेषामुत्पत्त्यनन्तरं प्रविष्टान्यनुपलभ्यमानत्वादप्रविष्टानि लक्ष्यन्त इति शेषः—प्राक् कारणे कार्य्यस्यानुपलभ्यमानत्वेन स्थितिः पश्चात् कार्य्याभिव्यक्तौ तस्मिन् कारणस्यानुपलभ्यमानत्वेन स्थितिरिति तत्त्वम्—तथा तेषु अहमनुप्रविष्टः, न तेषु प्रविष्टोऽहम् । कारणे कार्य्यस्य स्थितौ यथा कार्य्येण कारणस्य विकारो नोपतिष्ठते कार्य्यस्य कारणव्याप्यत्वात्, तथा कार्य्याभिव्यक्तौ कारणस्यानुपलभ्यमानत्वेन स्थितौ न तस्य विकारित्वं मेघाद्यैर्द्रष्टृदृक्शक्तेर्बाधायामुपस्थितायां यथा सूर्य्यस्य ।

९। ततः साधनार्थिना किं कर्त्तव्यं तदाह एतावदिति । आत्मनो मम तत्त्वजिज्ञासुना एतदेव जिज्ञास्यं विचार्य्यम् । अन्वयः कार्य्येषु कारणत्वेन सम्बन्धः, व्यतिरेकः कार्य्येभ्यः कारणस्य पृथक्करणं, ताभ्यां यत् स्यात् यत्तत्त्वं साधकसन्निधौ प्राकट्यं भजेत् सर्व्वदा सर्व्वस्मिन् काले सर्व्वत्र सर्व्वस्मिन् देशे तत् तत्त्वम् अहमेवेति शेषः ।

श्लोकचतुष्टयेन यदत्राभिहितं तदेव भागवतपुराणस्य मत्म ।

१० । न यद्वचश्चित्रपदं हरेर्यशो
जगत्पवित्रं प्रगृणीत कर्हिचित् ।
तद्वायसं तीर्थमुशन्ति मानसा
न यत्र हंसा निरमन्त्युशिक्क्षयाः ॥

११ । तद्वाग्विसर्गो जनताघविप्लवो
यस्मिन् प्रतिश्लोकमबद्धवत्यपि ।
नामान्यनन्तस्य यशोऽङ्कितानि
यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥

यतोऽन्तर्वहिर्भगवत्साक्षात्कारेण तत्प्रेरणया जीवनधारणमेवास्य प्रतिपाद्यम् । व्यतिरेकेण निवृत्तियोगं संसाध्य, तल्लिब्धमपरोक्षज्ञानं क्रोड़ीकृत्यान्वयेन प्रवृत्तियोगे प्रवेशः सम्भवतीति तत्प्रतिपादिकेयं चतुःश्लोकी । निवृत्तिमूलकप्रवृत्तियोगएव श्रीमद्भागवते सर्व्वत्र प्रदर्शितः ।

१० । महाभारतप्रणेतारमन्तःखेदवन्तं महर्षिकृष्णद्वैपायनं भगवद्यशोवर्णने प्रोत्साहयन् देवर्षिनारद उपदिशति नेति । चित्रपदम् अद्भुतरचनाकौशलयुतं यत् वचः जगत्पवित्रं जगत्पावनं हरेः यशः न कर्हिचित् कदापि प्रगृणीत प्रकर्षेण केनाप्यंशेन न स्तौति, तत् मानसाः मनस्यात्मनि वर्त्तमानाः उशिक्क्षयाः कमनीयब्रह्मनिलयाः हंसाः यतयः भगवत्यर्पितात्मानः वायसं तीर्थं काकतुल्यानां संसारासक्तानां रतिस्थानम् उशन्ति मन्यन्ते, यत्र काकतीर्थे न ते निरमन्ति न मोदन्ते ।

११ । एवं व्यतिरेकेण तद्यशः सुत्वान्वयेनापि स्तौति तदिति । तद्वाग्विसर्गः स च वाक्प्रयोगः जनताघविप्लवः जनसमूहानां पापविनाशकः ; यस्मिन् वाक्प्रयोगे अबद्धवत्यपि असम्यगर्थबोधकेऽपि अपशब्दादिजशैथिल्ययुक्तेऽपि प्रतिश्लोकम् अनन्तस्य यशोऽङ्कितानि यशोवर्णनलेशयुक्तानि नामानि सन्ति न तु वर्णनाचातुर्य्याणीति भावः, तानि साधवः

१२ । नैष्कर्म्म्यमप्यच्युतभाववर्ज्जितं
न शोभते ज्ञानमलं निरञ्जनम् ।
कुतः पुनः शश्वदभद्रमीश्वरे
न चार्पितं कर्म्म यदप्यकारणम् ॥

१३ । अथो महाभाग भवानमोघदृक्
शुचिश्रवाः सत्यरतो धृतव्रतः ।
उरुक्रमस्याखिलबन्धमुक्तये
समाधिनानुस्मर तद्विचेष्टितम् ॥

शृण्वन्ति वक्तृमुखात्, गृणन्ति स्तुवन्ति श्रोतृसन्निधौ, गायन्ति कीर्त्तयन्ति स्वयञ्च तयोरविद्यमाने ।

१२ । ननु भारते सत्यपि काम्यकर्म्मणामुपदेशे प्रधानतया ज्ञानमुपदिष्टं तत्कथं ममासम्पन्नत्वं तत्राह नैष्कर्म्म्यमिति । निष्क्रियब्रह्मैकाकारतालाभाय कर्म्माकरणरूपं नैष्कर्म्म्यं, निरञ्जनम् उपाधिशून्यं ज्ञानमपि अच्युतभाववर्ज्जितं भगवद्भक्तिशून्यम् अलमत्यर्थं न शोभते सम्यगपरोक्षज्ञानलाभाय न कल्पते । शश्वत् नियतम् अभद्रं दुःखकरं यत् काम्यं कर्म्म, यदपि अकारणं कामनाशून्यं कर्त्तव्यतयानुष्ठितं नित्यं वा कर्म्म ईश्वरे न अर्पितं कुतः पुनः शोभते चित्तनैर्म्मल्याय कल्पते ।

१३ । तत् किं कर्त्तव्यं तदाह अथो इति । हे महाभाग, अथो अतएव अमोघदृक् सत्यदृष्टिः शुचिश्रवाः निर्म्मलयशाः सत्यव्रतः सत्यानुरक्तः धृतव्रतः व्रतधारी भवान् अखिलबन्धमुक्तये सर्व्वजनबन्धनविमोचनाय उरुक्रमस्य भगवतः तत् विचेष्टितं विविधलीलां समाधिना चित्तैकाग्र्येण अनुस्मर स्वयं प्रत्यक्षीकृत्य प्रचारय । तदानीमुपदेष्टॄणां वस्तुप्रत्यक्षकरणप्ररोचनैवासीदुपदेश्यान् प्रति, न तु स्वस्य सर्व्वज्ञत्वापादनम् ।

१४ । ततोऽन्यथा किञ्चन यद्विवक्षतः
पृथग्दृशस्तत्कृतनामरूपभिः ।
न कर्हिचित् क्वापि च दुःस्थिता मति-
र्लभेत वाताहतनौरिवास्पदम् ॥

१५ । जुगुप्सितं धर्म्मकृतेऽनुशासतः
स्वभावरक्तस्य महान् व्यतिक्रमः ।
यद्वाक्यतो धर्म्म इतीतरः स्थितो
न मन्यते तस्य निवारणं जनः ॥

१६ । विचक्षणोऽस्यार्हति वेदितुं विभो-
रनन्तपारस्य निवृत्तितः सुखम् ।

१४ । भगवल्लीलावर्णनमकृत्वान्यविषये वाग्विन्यासे दोषमाह ततइति । तत उरुक्रमवेष्टितात् पृथग्दृशः तल्लीलादर्शनविमुखस्य यत्किञ्चन अन्यथा प्रकारान्तरेण विवक्षतः वक्तुमिच्छतः तत्कृतरूपनामभिः तद्विवक्षास्फुरितविषयैः दुःस्थिता अनवस्थिता मतिः कर्हिचित् कदापि क्वापि च कुत्रापि च वाताहतनौरिव आस्पदं स्थिरभूमिं न लभेत ।

१५ । भगवल्लीलावर्णनकृते भारते साधारणधर्म्मोपदेशो जनानां विमतिवर्द्धनायाभूत्, ततस्तद्विरुद्धमेव जातमित्याह जुगुप्सितमिति । धर्म्मकृते धर्म्मार्थं स्वभावरक्तस्य स्वभावतः रक्तस्य विषयरागिणः जुगुप्सितं निन्दितं काम्यकर्म्मादि अनुशासतः तव महान् व्यतिक्रमः अन्यायः । कथम्? इतरो जनः पृथग्जनः यद्वाक्यतः धर्म्म इति—अयमेव परोधर्म्म इति—स्थितः स्थिरनिश्चयः तस्य धर्म्मस्य निवारणं—नायं परमधर्म्म इति ततो निवृत्त्युपदेशः—जनः न मन्यते यथार्थत्वेन गृह्णाति ।

१६ । साधारणधर्म्मोपदेशेन विपरीतं जातम् । किं पुनः सम्प्रति कर्त्तव्यं येन निवृत्तलक्षणानां पृथग्जनानाञ्च कुशलं भवेदितप्रे-

प्रवर्त्तमानस्य गुणैरनात्मन-
स्ततोभवान् दर्शय चेष्टितं विभो ॥

१७। त्यक्त्वा स्वधर्म्मं चरणाम्बुजं हरे-
र्भजन्नपक्कोऽथ पतेत्ततो यदि ।
यत्र क्व वाभद्रमभूदमुष्य किं
कोवार्थआप्तो भजतां स्वधर्म्मतः ॥

त्वया तदाह विचक्षण इति । अनन्तपारस्य देशतः कालतोऽपरिच्छिन्नस्य अस्य विभोः सुखं ब्रह्मानन्दं निवृत्तितः निवृत्तिमार्गाश्रयणेन विचक्षणो ज्ञाननिष्ठः विवेकी वेदितुम् अर्हति । गुणैः प्रवर्त्तमानस्य हरेर्गुणैराक्षिप्त-मतेः अतएव अनात्मनः आत्मवशेऽनवस्थितस्य—

यथा भ्राम्यत्ययो ब्रह्मन् स्वयमाकर्षसन्निधौ ।
तथा मे भिद्यते चेतश्चक्रपाणेर्यदृच्छया ॥ (७।३८)

इत्युक्तदिशा विभ्रान्तचित्तस्य, ततः कारणात्, हे विभो समर्थ, चेष्टितं लीलां भवान् दर्शय। हरेर्गुणैराक्षिप्तमतीनामन्यतस्तृप्तिमलभमानानां सर्व्वथात्माभिमानं परिहाय भगवच्चरणे समर्पितचित्तानां तल्लीलाश्रवण-मृते न स्वस्थत्वमायाति, अतः भगवच्चेष्टितवर्णने समर्थस्त्वं समाधिना तच्च प्रत्यक्षीकृत्य वर्णयेति भावः। न केवलं निवृत्ततृष्णानामेतेन तृप्ति-र्भवेत् पृथग्जनानामपि कृतार्थता स्यादिति पक्षान्तरे दर्शयति। गुणैः सत्त्वादिभिः प्रवर्त्तमानस्य अनात्मनः देहाद्यभिमानिनः ततः कारणात्, चेष्टितं भगवल्लीलां दर्शय वर्णय। मनोरमलीलाश्रवणेनाकृष्टमतय-स्तेऽपि सहजेनैव तरिष्यन्तीति भावः।

१७। भगवद्गुणश्रवणेनाकृष्टानां तदन्यत्र विरतिः स्यात्, ततोन ते स्वधर्म्ममपि पालयेयुः। एवं सम्भाव्यमाने कथं लीलावर्णने मां प्रवर्त्तय-सीत्यपेक्षयाह त्यक्त्वेति। स्वधर्म्मं स्वभावविहितं धर्म्मं त्यक्त्वा परित्यज्य हरेः चरणाम्बुजं भजन् अथ यदि अपक्वः अपरिणतानुरागः ततो

१८। तस्यैव हेतोः प्रयतेत कोविदो
न लभ्यते यद्भ्रमतामुपर्य्यधः ।
तल्लभ्यते दुःखवदन्यतः सुखं
कालेन सर्व्वत्र गभीररंहसा ॥

१९। न वै जनो जातु कथञ्चनाव्रजे-
न्मुकुन्दसेव्यन्यवदङ्ग संसृतिम् ।

भजनात् पतेत्, यत्र क्व वा यस्यां कस्यामवस्थायां वा किम् अमुष्य भजन-शीलस्य अभद्रम् अमङ्गलं अभूत् ? 'अहं त्वां सर्व्वपापेभ्यो मोचयिष्यामि मा शुच' ( गी १८।६६ ) इत्यन्तर्यामिप्रतिज्ञा तमुद्धरति सर्व्वतइति न तस्य कुत्राप्यपायः । न त्वेवं तस्मिन् परात्मनि वैषम्यमुपतिष्ठते ; यतो भजनशीलः पतितोऽपि न तं सर्व्वथा विस्मर्त्तुं शक्यते, ततस्तमनुतापयन् स क्षिप्रमेव तमुद्धरति । विना तद्भजनं स्वधर्म्मरतावपि न कृतार्थते-त्याह—अभजतां स्वधर्म्मतः स्वभावविहितधर्म्मानुसरणात् को वा अर्थः आप्तः प्राप्तः ? भगवद्भावविरहितानां स्वधर्म्मानुसरणं केवलं परिश्रमाय भवति, न ततो भगवज्ज्ञानलाभ इति भावः ।

१८। न हि धर्म्माचरणं कदाप्यफलं भवितुमर्हति, यतस्तदीश्वरादेव प्रवर्त्तितम्, तत्कथमुक्तं 'कोवार्थ आप्त' इति ? तदुत्तरमाह तस्येति । उपर्य्यधः दिव्यलोकान् पार्थिवलोकांश्च भ्रमतां यत् न लभ्यते, तस्यैव हेतोः कोविदः विचक्षणो विवेकी प्रयतेत । अन्तवत्-फललाभाय स्वधर्म्मानुष्ठानन्तु विफलं, यतः अन्यतः विना प्रयत्नं स्वभावादेव तत् सुखं विषयसम्पर्कीयं दुःखवत् सर्व्वत्र गभीररंहसा अबोध्यगतिना कालेन दैवेन लभ्यते ।

१९। भजनशीलस्य कथं नामङ्गलं भवति तत्कारणं स्वयमुपन्यस्यति नेति । अंग हे व्यास, अन्यवत् भगवद्भाववर्ज्जितकर्म्मानुष्ठायिवत् मुकुन्दसेवी मुक्तिदभगवद्भजनशीलः जनः न वै जातु कदाचित् कथञ्चन

स्मरन् मुकुन्दांघ्र्युपगूहनं पुन-
र्विहातुमिच्छेन्न रसग्रहोजनः ॥

२० । इदं हि विश्वं भगवानिवेतरो
यतो जगत्स्थाननिरोधसम्भवाः ।
तद्धि स्वयं वेद भवांस्तथापि वै
प्रादेशमात्रं भवतः प्रदर्शितम् ॥

२१ । त्वमात्मनात्मानमवेह्यमोघदृक्
परस्य पुंसः परमात्मनः कलाम् ।

संसृतिम् आव्रजेत् आविशेत् । कथं न स संसारी भवेत् ? मुकुन्दांघ्र्युपगूहनं मुक्तिदभगवच्चरणालिङ्गनं स्मरन् रसग्रहः तद्रसास्वादवशीभूतः जनः न पुनः तत् विहातुं त्यक्तुम् इच्छेत् अभिलषेत् । अतएवाह भगवान् श्रीनारदम्—'सकृद्यद्दर्शितं रूपमेतत् कामाय ते ऽनघ । (७।१५)।' इति । 'धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह' (११।२।३५) इत्यस्य च तदेव कारणम् ।

२० । कोऽयं भगवानिति चेन्न जानीयात्कथं वा तस्य लीलावर्णनं सम्भवेत्, अतएव भगवज्ज्ञानस्य तस्मिन् विद्यमानत्वं दर्शयति इदमिति । इदं विश्वं भगवानिव तत्सदृशमेव 'ब्रह्मस्वभावो हि प्रपञ्चः' इति न्यायात्, भगवांस्तु इतरः अन्यः 'न हि प्रपञ्चस्वभावं ब्रह्म' इति न्यायात्, यतो भगवतो जगतः स्थानं स्थितिः, निरोधः भङ्गः, सम्भवः जन्म, अतएव जगति प्रकाशमाना तस्य प्रतिनियतक्रिया लीलेति ज्ञातव्यम् । तत् हि औपनिषदं ज्ञानं भवान् स्वयं वेद, तथापि भवतः प्रदर्शितं यत् भारते तत् प्रादेशमात्रम् एकदेशमात्रं, न सम्यक् तत्तल्लोपवर्णितमिति भावः ।

२१ । जानतापि कथं मया तथाकृतमित्यस्योत्तरे पुनराह, स्वप्र-

अजं प्रजातं जगतः शिवाय त-
न्महानुभावाभ्युदयो ऽधिगण्यताम् ॥
२२ । इदं हि पुंसस्तपसः श्रुतस्य वा
स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः ।
अविच्युतोऽर्थः कविभिर्निरूपितो
यदुत्तमश्लोकगुणानुवर्णनम् ॥ १।५।१०-२२ ।

भावाज्ञानात् तत्र समाधिर्नानुष्ठितः, अतस्तत्र स्फूर्त्तिमापत् । अधुना स्वप्रभावं जानन् भगवल्लीलासमुवर्णयेत्यभिप्रायेण भूयो वदति त्वमिति । हे अमोघदृक् सफलदर्शिन्, त्वम् आत्मानम् आत्मना परस्य परमात्मनः पुंसः कलां स्वरूपांशम् अजम् आधिकारिकत्वेन सन्त जगतः शिवाय कल्याणाय जातम् अवेहि जानीहि । तत् तस्मात् महानुभावस्य निरतिशयप्रभाववतः हरेः अभ्युदयः विक्रमः त्वया अधि अधिकं गण्यतां निरूप्यताम् ।

२२ । महाभारते तप आदि यन्निरूपितं न तेषां व्यर्थत्वं किन्तर्हि भगवद्गुणकीर्त्तनेन तेषां पूर्णत्वसम्पादनमेव कर्त्तव्यमित्याह इदमिति । पुंसः पुरुषस्य तपसः श्रुतस्य वेदाध्ययनस्य स्विष्टस्य यागादेः सूक्तस्य मन्त्रादेः वाक्कौशलस्य वा बुद्धिदत्तयोः बुद्धेः धर्मबुद्धेः दत्तस्य दानस्य वा इदमेव अविच्युतः नित्यः अर्थः फलं कविभिः क्रान्तदर्शिभिः निरूपितः निर्णीतः यत् उत्तमश्लोकगुणानुवर्णनं ।

योगगतिमनुसृत्य शुकस्याभिपतनं श्रीकृष्णस्य तिरोधानादतिपूर्व्वमेव तस्य कलेवरत्यागं दर्शयतीति मन्वानाः परिच्छिन्नभायां तस्य भगवत्कथाव्याख्यानं न बहुमन्यन्ते, प्रत्युत महाभारताख्यानस्यापर्य्यालोचनातएव तस्य परिच्छिन्नसमयपर्य्यन्तस्थितिर्व्याख्याता भागवते स्वकपोलकल्पनयेति तेषां सिद्धान्तः । अत्रोद्धृतेषु श्लोकेषु महाभारताख्यानसम्मतविशयाणां सन्निवेशस्तेषां सिद्धान्तस्य भ्रान्तिं प्रतिपादयते । ये पुनस्तदा

शुकस्य देहत्यागोऽभूदिति मन्यन्ते, ते 'गुणान् सन्त्यज्य शब्दादीन् पदमभ्यागमत्परम्' इत्येतत्, व्यासस्य विलापः, धूर्ज्जटेः सान्त्वनादानञ्च तथानुमाने प्रमाणत्वेन दर्शयन्ति। श्रीमच्छङ्करस्त्वाह—'ननु गतिरपि ब्रह्मविदः स्मर्य्यते "शुकः किल वैयासकिर्मुमुक्षुरादित्यमण्डलमभिप्रतस्थे पित्रा चानुगम्याहूतो भो इति प्रतिशुश्राव" इति। न। सशरीरस्यैवायं योगबलेन विशिष्टदेशप्राप्तिपूर्व्वकः शरीरोत्सर्गइति द्रष्टव्यम्, सर्व्वभूतदृश्यत्वाद्युपन्यासात्। न ह्यशरीरं गच्छन्तं सर्व्वभूतानि द्रष्टुं शक्नुयुः। तथा च तत्रैवोपसंहृतम् "शुकस्तु मारुताच्छीघ्रां गतिं कृत्वान्तरिक्षगः। दर्शयित्वा प्रभावं स्वं सर्व्वभूतगतोऽभवत्" इति (वे, सू, भा)। उत्क्रान्तिविषये श्रीमच्छङ्कररामानुजयोर्मतभेदमनुसृत्य रामानुजीयशारीरकमीमांसाभाष्यस्य व्याख्याता श्रीमत्सुदर्शनसूरी तत्कृतश्रुतप्रकाशे पुनरलिखत्—'यत्तु शुकोत्पतनं विशिष्टदेशे देहत्यागाय न तु मुक्तौ मार्गापेक्षयेति तदप्ययुक्तम्, "दृष्टोमार्गः प्रवृत्तोऽस्मि" इति गतिचिन्तायां मार्गस्य दृष्टत्त्वाभिधानात्; "भूतैः समभिवाह्यत" इत्यातिवाहिकैरभिवहनस्योक्तत्वाच्च; स्थूलदेहेनासूर्य्यमण्डलगमनं योगप्रभावज्ञापनार्थमित्युक्तम् "दर्शयित्वा प्रभावं स्वम्" इति; "सर्व्वभूतगतोऽभवत्" इति च ज्ञानेन सर्व्वभूतव्याप्तिरुक्ता "सर्व्वं ह पश्यः पश्यति सर्व्वमाप्नोति सर्व्वशः" इति श्रुतेः।' अत्रेदं वाच्यम्—'भूतैः समभिवाह्यत' इति पाठः शङ्कास्पदमसार्व्वत्रिकत्वात्, यदि वायं स्वीक्रियते तथापि न दोषो भूतजयपरत्वेनास्य समञ्जसत्वात्। 'दृष्टो मार्गः' इति च स यदब्रवीत् श्रीमन्नारदं तेन च प्रतिपन्नो भवत्यस्य शरीरात्यागएव, यतः स आत्मदर्शनान्तयोगं प्रत्यक्षीकृत्य 'दृष्टो मार्गः' इत्युक्तवान्। अस्मिन् प्राथमिके योगे 'स ददर्श तदात्मानं सर्व्वसङ्गविनिःसृतम्' इत्युक्तत्वात् 'गुणान् संत्यज्य शब्दादीन्' इत्येतत् पञ्चत्वप्राप्तिं न दर्शयति किन्तर्हि तेषां सङ्गत्यागएव। 'विशिष्टदेशप्राप्तिपूर्व्वकः शरीरोत्सर्गः' इति यत् श्रीमच्छङ्करेणाभिहितं तत्तूत्क्रान्त्या देहत्यागो नाभवदिति

२३ । यं प्रव्रजन्तमनुपेतमपेतकृत्यं
द्वैपायनो विरहकातर आजुहाव ।
पुत्रेति तन्मयतया तरवोऽभिनेदु-
स्तं सर्व्वभूतहृदयं मुनिमानतोऽस्मि ॥

२४ । यः स्वानुभावमखिलश्रुतिसारमेक-
मध्यात्मदीपमतितितीर्षतां तमोऽन्धम् ।

प्रदर्शनपरम् । महाप्रस्थाने पुनः सर्व्वसम्बन्धत्यागो घटते, अतएव हि व्यासस्य शोकः, शङ्करस्य च सान्त्वनादानमिति सर्व्वं निरवद्यम् ।

२३ । यमिति । विरहकातरः द्वैपायनः व्यासः प्रव्रजन्तं देह-गेहममतां विहायोत्तमां गतिमन्विष्य गच्छन्तम् अनुपेतम् एकाकिनम् अपेतकृत्यं त्यक्तसर्व्वकर्म्माणं यं पुत्रेति भो पुत्र इति आजुहाव ; तरवः तन्मयतया शुकस्वरूपतया अभिनेदुः भो इति शब्देनोत्तरमदुः, तं सर्व्वभूतहृदयं सर्व्वभूतहृद्गतं 'स हि तदा ध्यानावेशेन प्राप्तसर्व्वान्तर्यामि-तादात्म्यः' इति श्रीमज्जीवः—मुनिं शुकं आनतोऽस्मि, कथारम्भे प्रण-मामि इति सूतः । महाभारते तु—

ततः शुकेति दीर्घेण शब्देनाक्रन्दितस्तदा ।
स्वयं पित्रा स्वरेणोच्चैस्त्रीँल्लोकाननुनाद्य वै ॥
शुकः सर्व्वगतो भूत्वा सर्व्वात्मा सर्व्वतोमुखः ।
प्रत्यभाषत धर्म्मात्मा भोःशब्देनानुनादयन् ॥
तत एकाक्षरं नादं भोरित्येव समीरयन् ।
प्रत्याहरज्जगत् सर्व्वमुच्चैः स्थावरजङ्गमम् ॥

इत्युक्तम् । ततः शुकएव स्वयमुत्तरमदादित्यायाति, न तु तरवः ।

पिता यद्यनुगच्छेन्मां क्रोशमानः शुकेति वै ।
ततः प्रतिवचो देयं सर्व्वैरेव समाहितम् ॥

इति शुकप्रार्थनमनुसृत्य प्रतिध्वनिनिह्नवेन प्राधान्यतः 'तरवः' इत्याह ।

२४ । तस्य निवृत्तशिरोरत्नत्वं व्यनक्ति यइति, अन्धं गाढ़ं तमः

संसारिणां करुणयाह पुराणगुह्यं
तं व्याससूनुमुपयामि गुरुं मुनीनाम् ॥१।२।२।३

२५ । दृष्ट्वानुयान्तमृषिमात्मजमप्यनग्नं
देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम् ।
तद्वीक्ष्य पृच्छति मुनौ जगदुस्तवास्ति
स्त्रीपुंभिदा न तु सुतस्य विविक्तदृष्टेः ॥ १।४।५

मोहं अतितितीर्षतां अतितर्तुमिच्छतां करुणया अनुकम्पया स्वानुभावं भगवत्साम्मुख्यसाधकनिजासाधारणप्रभावम् अखिलश्रुतिसारं निखिल-श्रुतिसारभूतम् एकं तुलनाविरहितम् अध्यात्मदीपं साक्षादात्मतत्त्व-प्रकाशकं पुराणगुह्यं पुराणानां मध्ये गोप्यं य आह, तं मुनीनां मननशीलानां निवृत्तिमार्गमाश्रितानां गुरुं पथप्रदर्शकं व्याससूनुं शुकम् उपयामि शरणं व्रजामि इति सूतः ।

२५ । निवृत्तिमार्गमाश्रितानां गुरुत्वद्योतकं निर्व्विकल्पत्वं तस्य प्रतिपादयति यथोद्दिष्टं शौनकवाक्येन दृष्ट्वेति । आत्मजं शुकम् अनु-यान्तम् अनुपतन्तम् अनग्नमपि, न तु पुत्रवत् विवसनमिति भावः, दृष्ट्वा देव्यः मन्दाकिनीतीरे क्रीड़न्त्यः अप्सरसः ह्रिया लज्जया परिदधुः वसन-परिधानं कृतवत्यः, न सुतस्य नग्नस्येति शेषः ह्रिया, तच्चित्रम् आश्चर्य्यं वीक्ष्य पृच्छति ता जिज्ञासति मुनौ व्यासे, ताः जगदुः उत्तरम् अदुः,— स्त्रीपुंभिदा इयं स्त्री अयं पुमान् इति भेदः तव अस्ति विविक्तदृष्टेः पवित्रदृष्टेः सुतस्य तु न । अत्र महाभारतम्—

महिमानन्तु तं दृष्ट्वा पुत्रस्यामिततेजसः ।
निषसाद गिरिप्रस्थे पुत्रमेवान्वचिन्तयत् ॥
ततो मन्दाकिनीतीरे क्रीडन्तोऽप्सरसां गणाः ।
आसाद्य तमृषिं सर्व्वाः संभ्रान्तागतचेतसः ॥
जले निलिल्यिरे काश्चित् काश्चिद्गुल्मान् प्रपेदिरे ।
वसनान्याददुः काश्चित् तं दृष्ट्वा मुनिसत्तमम् ॥

**२६। आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।**
**कुर्व्वन्त्यहैतुकीम्भक्तिमित्थम्भूतगुणो हरिः॥**
**२७। हरेर्गुणाक्षिप्तमतिर्भगवान् बादरायणिः।**
**अध्यगान्महदाख्यानं नित्यं विष्णुजनप्रियः॥ १।७।१०।११**

तां मुक्ततान्तु विज्ञाय मुनिः पूचस्य वै तदा।
सक्तताममात्मनश्चैव प्रीतोऽभूद्वीडितश्च ह॥ इति।

२६। निवृत्तिपरस्य तस्य हृदयाम्बुजविकाशनमुद्दिशति आत्मारामाइति।

स वै निवृत्तिनिरतः सर्व्वत्रोपेक्षको मुनिः।
कस्य वा बृहतीमेतामात्मारामः समभ्यसत्॥

इति शौनकप्रश्नोत्तरे सूतआह, आत्मारामा आत्मरतयः च मुनयः मननशीलाः सर्व्वकर्म्मविरताः निर्ग्रन्था अपि श्रोतव्यश्रुतविषये निर्व्वेदप्राप्ता अपि यद्वा निवृत्तहृदयग्रन्थयः अपि उरुक्रमे भगवति अहैतुकीं निष्कारणां फलान्तराकाङ्क्षावर्ज्जितां भक्तिं कुर्व्वन्ति ; हरिः साधकचित्तहरणः भगवान् इत्थम्भूतगुणः ईदृग्गुणविशिष्टः। निवृत्तिनिरता अपि सर्व्वत्रोपेक्षका अपि परमात्मनि स्वरूपसौन्दर्य्यं प्रत्यक्षीकृत्यापहृतचित्तास्तद्गुणानुकीर्त्तने प्रवृत्तिमन्तो भवन्तीति भावः।

२७। निवृत्तिनिरतोऽपि शुकः कथं प्रवृत्तिमानभवत् तत्कारणमभिदधाति हरेरिति। हरेः साधकचित्तहरणस्य भगवतः गुणाक्षिप्तमतिः गुणापहृतचित्तः भगवान् ज्ञानाद्यैश्वर्य्यवान् विष्णुजनप्रियः भगवद्भक्तानुरक्तः, अतएव निःसङ्गोऽपि तेषां तेषां सङ्गमोत्सुकः बादरायणिः शुकः नित्यं महत् आख्यानं भगवद्गुणगाथारूपं पुराणम् अध्यगात् अधीतवान् पितुर्मुखादग्रहीत्। 'श्रीव्यासदेवस्तु तं (शुकं) वशीकर्त्तुं तदनन्यं साधनं श्रीभागवतमेव ज्ञात्वा तद्गुणातिशयप्रकाशमयांस्तदीयपद्यविशेषान् कथञ्चिच्छ्रावयित्वा तेनाक्षिप्तमतिं कृत्वा तदेव पुनर्मध्यापयामास' इति श्रीमज्जीवः।

२८ । प्रायेण मुनयो राजन् निवृत्ता विधिषेधतः ।
नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः ॥
२९ । इदं भागवतं नाम पुराणं ब्रह्मसम्मितम् ।
अधीतवान् द्वापरादौ पितुर्द्वैपायनादहम् ॥
३० । परिनिष्ठितोऽपि नैर्गुण्य उत्तमश्लोकलीलया ।
गृहीतचेता राजर्षे आख्यानं यदधीतवान् ॥

२८। स्वयं शुकोऽपि निवृत्तितः प्रवृत्तौ प्रवेशं सहेतुकमाह प्रायेणेति। हे राजन्, प्रायेण विधिषेधतः विधिनिषेधाभ्यां निवृत्ताः मुनयः मननशीलाः नैर्गुण्यस्थाः निर्गुणे ब्रह्मणि स्थिता अपि हरेः साधक-चित्तहरणस्य भगवतो गुणानुकथने तल्लीलावर्णने रमन्ते मोदन्ते। स्म इति प्रसिद्धे।

२९। स्वस्यापि तादृशत्वं कथयति इदमिति। ब्रह्मसम्मितं वेदतुल्यम् इदं भागवतं नाम पुराणं द्वापरादौ द्वापरस्य कलेश्च सन्धि-काले—'द्वापर एवादिर्यस्य तत्र, तदीयान्ते सन्ध्यंशे' इति श्रीमज्जीवः।—पितुर्द्वैपायनात् व्यासात् अहम् अधीतवान् पितुर्मुखादग्रहीत्। दृश्यते हि महाभारते शुकाभिपतनवर्णनारम्भे निवृत्तिपथसमुचितोपदेशमिव नारदात्प्राप्य प्रव्रज्यामकरोत् सः। अतएव तदनन्तरं भागवतधर्म्माधि-गमोऽभूदस्येति सुष्ठ्वनुमानम्।

त्यज धर्म्ममधर्म्मञ्च उभे सत्यानृते त्यज।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज॥

इति सर्व्वनिवृत्तिपरोऽयं धर्म्मस्तदाधिगतस्तेन, तमधिगम्य च नैर्गुण्ये स्थितिमलभत स इति तत्त्वम्। न खलु वक्तव्यम् 'सर्व्वधर्म्मान् परित्यज्य' इत्यनुरूपा शरणापत्तिरेवेति। तथा सति 'येन त्यजसि तं त्यज' इति न सिद्ध्यति।

३०। आत्मनोऽग्रे नैर्गुण्ये स्थितिः पश्चाद्भगवद्गुणैश्च चित्तापहृति-

३१ । तदहं तेऽभिधास्यामि महापौरुषिको भवान् ।
यस्य श्रद्दधतामाशु स्यान्मुकुन्दे मतिः सती ॥ २।१।७—१०

३२ । स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावो
ऽप्यजितरुचिरलीलाकृष्टसारस्तदीयम् ।

वर्ण्यते परिनिष्ठित इति । हे राजर्षे, नैर्गुण्ये ब्रह्मणि परिनिष्ठितः अपि लब्धस्थिरस्थितिकोऽपि उत्तमश्लोकलीलया भगवत्प्रेमप्राकट्येन गृहीतचेताः अपहृतचित्तः यत् आख्यानं भगवद्गुणगाथारूपं पुराणम् अधीतवान् पितुर्मुखाज्जग्राह । परेणान्वयः ।

३१ । तस्य तत्पुराणाभिधानमाह तदिति । भवान् महापौरुषिकः महापुरुषो भगवान् तदीयः, अतः ते तुभ्यं तत् पुराणम् अभिधास्याभि भगवत्प्रेरणयैव कथयिष्यामि, न तु वाचयामि इतिभावः, अतएव हि प्रस्तुतकथारम्भकाले सएवं प्रार्थयामास—

प्रचोदिता येन पुरा सरस्वती वितन्वताजस्य सतीं स्मृतिं हृदि ।
स्वलक्षणा प्रादुरभूत् किलास्यतः स मे ऋषीणामृषभः प्रसीदताम् ॥ (२।४)
भूतैर्महद्भिर्य इमाः पुरी विभुर्निर्म्माय शेते यदमूषु पूरुषः ।
भुङ्क्ते गुणान् षोडश षोडशात्मकः सोऽलङ्कृषीष्टाखिलविद् वचांसि मे ॥ इति (२।८)

यस्य यस्मिन् पुराणे श्रद्दधतां मुकुन्दे मुक्तिदे भगवति सती अहैतुकी मतिः मनोभिनिवेशः स्यात् । द्वादशे स पुनराह—

पुराणं संहितामेतामृषिर्नारायणोऽव्ययः ।
नारदाय पुरा प्राह कृष्णद्वैपायनाय सः ॥
स वै मह्यं महाराज भगवान् वादरायणः ।
इमा भागवतीं प्रीतः संहितां वेदसम्मिताम् ॥
एतां वक्ष्यत्यसौ सूतऋषिभ्यो नैमिषालये ।
दीर्घसत्रे कुरुश्रेष्ठ संपृष्टः शौनकादिभिः ॥ इति (१२।४।४०।४२) ।

३२ । भगवल्लीलाकृष्टचित्तेन तेनाभिहितमिदं पुराणमित्याह नमस्कारमुखेन स्वसुखेति । स्वसुखनिभृतचेताः स्वसुखेनैव निभृतं पूर्णं चेतो यस्य, तद्व्युदस्तान्यभावः तेनैव व्युदस्तः अपगतः अन्यस्मिन् भावः

व्यतनुत कृपया यस्तत्त्वदीपं पुराणं
तमखिलवृजिनघ्नं व्याससूनुं नतोऽस्मि ॥
१२।१२।६८ ।

३३ । वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥१।२।११

यस्य तथाभूतः अपि, अजितरुचिरलीलाकृष्टसारः अजितस्य भगवतः रुचिराभिः लीलाभिः आकृष्टः आदत्तः सारः स्वसुखगतं स्थैर्य्यं यस्य, एवंभूतः यः तत्त्वदीपं परमार्थप्रकाशकम्, अखिलवृजिनघ्नं निखिल-भक्तिप्रतिकूलपापविनाशकं तदीयं तेन अजितेन प्रोक्तं पुराणं श्रीभागवतं व्यतनुत विस्तारितवान्, तं व्याससूनुं नतः अस्मि अहं सूतइति शेषः । 'श्रीशुकादीनामपि ब्रह्मनिष्ठापरित्यागेनापि रागतः प्रवृत्तिः' इति श्रीमज्जीवः । वस्तुतस्तु न ब्रह्मनिष्ठापरित्यागेन किन्तर्हि पूर्व्वमननु-भूतं सौन्दर्य्यं तस्मिन्नेव ब्रह्मणि प्रत्यक्षीकुर्व्वतस्तस्य तेनानुरागोदयः, अन्यथा वस्त्वैक्याभावात् स्वसिद्धान्तहानिः ।

३३ । निवृत्तिमूलकप्रवृत्तियोगस्य प्रवर्त्तनाप्रकारेण तदभिधेयं प्र-घट्टकेनोद्घाटितम् । सम्प्रति वेदवेदान्तपुराणसाधारणतत्त्वं सन्दर्शयन् वस्तु-निर्द्देशाध्यायं समापयति वदन्तीति । 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इत्यंशमुद्दिश्य श्रीमज्जीव आह—'अत्र श्रीमद्भागवताख्य एव शास्त्रे क्वचिदन्यत्रापि तदेकं त्रिधा शब्द्यते, क्वचित् ब्रह्मेति, क्वचित् परमात्मेति, क्वचित् भगवानिति च ।······तत्र ब्रह्मभगवतोर्व्याख्यातयोः परमात्मा स्वयमेव व्याख्यातो भवतीति प्रथमतस्तावेव प्रस्तूयेते । मूले तु क्रमादैशिष्ट्यद्योतनाय तथा विन्यासः । अयमर्थः—तदेकमेवाखण्डा-नन्दरूपं तत्त्वं थुत्कृतपारमेष्ठ्यादिकानन्दसमुदायानां परमहंसानां साधनवशात् तादात्म्यमापन्ने सत्यामपि तदीयस्वरूपशक्तिवैचित्र्यां तद्-ग्रहणासमर्थे चेतसि यथा सामान्यतो लक्षितं तथैव स्फुरद्वा तद्वदेवावि-

विक्तशक्तिशक्तिमत्ताभेदतया प्रतिपाद्यमानं वा ब्रह्मेति शब्द्यते। अथ तदेव तत्त्वं स्वरूपभूतयैव शक्त्या कमपि विशेषं धर्तृ परासामपि शक्तीनां मूलाश्रयरूपां तदनुभवानन्दसन्दोहान्तर्भावितताद्दशब्रह्मानन्दानां भागवतपरमहंसानां तथानुभवैकसाधकतमतदीयस्वरूपानन्दशक्तिविशेषात्मकभक्तिभावितेष्वन्तर्वहिरपीन्द्रियेषु परिस्फुरद्वा तद्देव विविक्तताद्दशशक्तिमत्ताभेदेन प्रतिपाद्यमानं वा भगवानिति शब्द्यते। एवमेवोक्तं श्रीजड़भरतेन—"ज्ञानं विशुद्धं परमार्थमेकमनन्तरन्त्वबहिर्ब्रह्म सत्यम्। प्रत्यक् प्रशान्तं भगवच्छब्दसंज्ञं यद्वासुदेवं कवयोवदन्ति॥" (२।१५) इति। श्रीध्रुवं प्रति श्रीमनुरुवाच—"त्वं प्रत्यगात्मनि तदा भगवत्यनन्ते आनन्दमात्र उपपन्नसमस्तशक्तौ" (४।२६) इति। एवञ्च आनन्दमात्रं विशेष्यम्, समस्ताः शक्तयो विशेषणानि, विशिष्टोभगवानित्यायातम्। 'तथा चैवं वैशिष्ट्ये प्राप्ते पूर्णाविर्भावत्वेनाखण्डतत्त्वरूपोऽसौ भगवान्, ब्रह्म तु सामान्यसत्ताकारत्वेन तस्यैवासम्यगाविर्भाव इत्यागतम्।' इति (भ—त्, स,) 'सर्व्वान्तर्य्यामी पुरुषएव "ब्रह्मेति परमात्मेति" इत्यादौ परमात्मत्वेन निर्द्दिष्ट इति स्थितम्' इति च। (प, स)। सिद्धान्तमिमं मूलतोऽनुसृत्य व्याख्यानमेव वरम्।

तत्त्वविदः तत्त्वप्रत्यक्षकरणेन तदभिज्ञाः यत् अद्वयं द्वैतविरहितं ज्ञानं चित्स्वरूपं, तत् तत्त्वं वदन्ति। तत् तत्त्वं ब्रह्मेति सर्व्वातीतत्वात्, परमात्मेति सर्व्वगतत्वात्, भगवानिति सर्व्वान्तर्भावकत्वात् शब्द्यते अभिधीयते। न खलु वाच्यं शक्त्यालिङ्गितं ज्ञानं कथमद्वयं भवितुमर्हति। न हि शक्तिर्ज्ञानात् भिन्ना; ज्ञानमेव क्रियोन्मुखं चिच्छक्तित्वेनाभिहितं भवति। स्वपरप्रकाशएव ज्ञानधर्म्मः। तेनैव तस्य शक्तित्वमायाति। तत्त्वमितिपदेन ज्ञानस्य सुखरूपत्वं गोस्वामिपादैः साधितं तत्त्वस्य परमपुरुषार्थसाधकत्वात्। वस्तुतस्तु ज्ञानस्य दुःखरूपाज्ञानाविमिश्रत्वात् सुखस्वरूपत्वं स्वतः सिद्धम्। ज्ञानस्वरूपादेव सर्व्वाणि स्वरूपाणि सिद्ध्यन्ति, एकस्य तस्यैव सम्बन्धभेदेन दर्शनात्। अतोऽत्र ज्ञानव्यतिरिक्तं

स्वरूपान्तरं ब्रह्मतत्त्वे नाभ्यधात् सूतः । प्रदर्शितमेतत् समन्वयभाष्ये । औपनिषदं ब्रह्म सत्त्वामात्रत्वेन गृहीतं निवृत्तिमार्गपरायणैः, शक्तिमात्रत्वेन वेदवादिभिः प्रकृत्यैकार्थत्वेन । सत्तामात्रेण गृहीतं ब्रह्म ज्ञानस्वरूपमेव तैः स्वीकृतं, सत्तातो ज्ञानस्य व्यतिरेकासम्भवात् । अतएव सत्तामात्रत्वेन चिन्मात्रं ब्रह्म निवृत्तिमार्गपरायणानां, सर्व्वगतत्वेन शक्तिज्ञानादिविशिष्टप्रकृत्यैकार्थं ब्रह्म वेदवादिनामिति द्रष्टव्यम् । द्वयोरेतायोरेकत्रसन्निवेशात् भगवत्त्वं सर्व्वान्तर्भावकत्वञ्च तस्य । यद्यपि ब्रह्मेति परमात्मेति भगवानित्येवं भेदो दृश्यते, तथापि परवस्तुनि न विद्यते भेदः । जीवानां दृक्तारतम्यात् शास्त्रे बोधसौकर्य्यार्थं भिन्नत्वेनैकमद्वयं ज्ञानवस्तु गृहीतम् । अतएव 'क्रमाद्वैशिष्ट्यद्योतनाय तथा विन्यासः' इत्यत्र न तावद्वस्तुवैशिष्ट्यवशात् किन्तर्हि दृग्वैशिष्ट्यहेतोस्तथा विन्यास इति चिन्तनीयम् । प्रक्रमोऽयं साधकेष्ववश्यम्भावी । न हि जातु योगप्रलयं विना ब्रह्मवस्तु साक्षात्प्रत्यक्षं भवति, अतः सर्व्वातीतत्वेन तस्य ग्रहणं प्रथमम् । ततस्तत्प्रेरणानुभवेन लब्धजागरः साधकः प्रथमतोऽन्तर्यामितया ततः सर्व्वगतत्वेन तद्वस्तु प्रत्यक्षीकरोति । तदनन्तरं जगज्जीवावात्मन्यैश्वर्य्यत्वेनान्तर्भाव्य स्वरूपविभववद्भगवद्रूपेण तद्वस्तु साधकसन्निधावात्मप्रकाशं करोति ।

प्रथमन्तावद्व्यतिरेकेण निवृत्तियोगस्यान्वयेन च प्रवृत्तियोगस्य मूलं प्रदर्शितम्; तदनन्तरमस्य शास्त्रस्य प्रतिपाद्यन्तद्योगद्वयं वक्तृपरम्परया कथं प्रवर्त्तितम्, कस्य वा जीवने सर्व्वाग्रे तदात्मक्रियां प्रादर्शयत्, कथं वा तत्त्वमेकं ग्राहकभेदेन भिन्नत्वेन गृहीतमित्येतान्यध्याये ऽस्मिन् संगृहीतानि ।

इति श्रीसात्त्वतसंहितोत्थायां व्याख्यानसहितायां
श्रीमद्गीताप्रपूर्त्तौ वस्तुनिर्द्देशोनाम
प्रथमोऽध्यायः ।

# द्वितीयोऽध्यायः।

## ब्रह्मनिर्द्देशः।

१। तमिममहमजं शरीरभाजां
हृदि हृदि धिष्ठितमात्मकल्पितानाम्।
प्रतिदृशमिव नैकधार्कमेकं
समधिगतोऽस्मि विधूतभेदमोहः॥१।६।४२

१। वेदवेदान्तप्रतिपाद्यवस्तुतया ब्रह्मनिरूपणायायमादिमः श्लोकः तमिति। 'पुरस्थितेऽमीलितदृक् व्यधारयत्' (१।६।३०) इत्युक्तेः 'नेदं पद्यं ब्रह्मपरं व्याख्येयम्' इति यच्छ्रीमच्छ्रीस्वामिपादैनोक्तं तस्य वेदवेदान्तयोःसमाधानपरवाक्यत्वेनास्य पद्यस्य समाधानं सुकरम्। तथा सति 'सम्पद्यमानं विज्ञाय भीष्मं ब्रह्मणि निष्कले' (१।६।४४) इति वचनस्यापि सफलत्वं साध्यते। वेदे वहिर्ब्रह्मदर्शनं वेदान्तेऽन्तरित्यनयोः

> कृष्ण एवं भगवति मनोवाग्दृष्टिवृत्तिभिः।
> आत्मन्यात्मानमावेश्य सोऽन्तःश्वासउपारमत्॥ (१।६।४३) इति

परवर्त्तिना पद्येन तथैवैकत्वमापादितम्; अन्यथा भगवत्यात्मनि चेति पदद्वयं निरर्थकं स्यात्। कथं वेदवेदान्तसमुचितवहिरन्तर्दृष्टियुग-पत्सिद्ध्यतीति जिज्ञासायां साधकानुभूतिरत्रैवं द्रष्टव्या। वहिर्वस्तुना-भेदेन दर्शनं वेदसिद्धं वेदान्तोऽपाकरोति सर्व्वस्मिन्नात्मतया दर्शनाद्वस्तु-तिरोधानेन। तत्र यदि केचिद्यस्मिन्नात्मस्वरूपाविर्भावोऽनुभूयते तमपि तत्स्वरूपेणाभिन्नतया गृह्णन्ति, तेषु तदा वेदवेदान्तयोरैक्यं भवति। एवमासीत्पुनर्भीष्मे। ततएव हि स आह 'मम दृशिगोचर एष आविरात्मा' (१।६।४१) इति; शिशुपालस्यैवमुपालम्भभाजनत्वाभूत्—

२। स वै किलायं पुरुषः पुराणो
य एक आसीदविशेष आत्मनि।
अग्रे गुणेभ्यो जगदात्मनीश्वरे
निमीलितात्मन्निशि सुप्तशक्तिषु॥

कथं भीजस्य पुरुषे वर्गपाले दुरात्मनि।
समाविश्यसे सर्व्वं जगत् केवलकाम्यया॥ (स, प, ४४अ, २६श्लो) इति।

स्वरूपाविर्भावादर्शनेन शिशुपालस्य कृष्णे पुरुषसामान्यबुद्धिरघटत; एवमन्येष्वपि। अधुना प्रकृतमनुसरामः। आत्मकल्पितानां स्वयं निर्म्मितानां शरीरभाजां प्राणिनां हृदि हृदि प्रतिहृदयं धिष्ठितम्—प्रतिदृशं दृशं दृशं प्रति एकं नैकधा अनेकधा प्रतिभातम् अर्कम् सूर्य्यम् इव—अजं जन्मरहितं तम् इमम् एकम् विधूतभेदमोहः अपगतभेदविमतिः अहं भीष्मः समधिगतोऽस्मि सम्यक् प्राप्तोऽस्मि। यद्यपि पुरोवर्त्तिन्याविर्भूतस्वरूपे विशेषतयाऽन्येषु चाविशेषेण परात्माधिष्ठानभेदादनेकधा प्रतिभाति, तथापि नासावनेकः, किन्त्वखण्डब्रह्मस्वरूपएवेति फलितार्थः।

२। पुनरपि वेदवेदान्तोभयप्रतिपाद्यं ब्रह्मतत्त्वं प्रस्तौति स इति। स वै एव किल अयं पुरोवर्त्ती पुराणः पुरुषः, यः गुणेभ्यः गुणक्षोभात् अग्रे सृष्टेः प्राक् निशि प्रलये च जगदात्मनि जगताम् आत्मनि प्रेरयितरि ईश्वरे सुप्तशक्तिषु शक्तिषु सुप्तासु सतीषु निमिलितात्मन् निमीलिते लीने आत्मन् आत्मनि जीवे सति अविशेषे निष्प्रपञ्चे आत्मनि नित्यस्वरूपे एकः अद्वितीयः आसीत्। सृष्टेः प्राक् प्रलये च सर्व्वाः प्रकाशप्रकाशक्रियात्मिकाः सृज्यशक्तयः प्रसुप्ताः, जीवश्च तस्मिन् परे विलीन आसीत्, अतएव तेषां ज्ञानानतिरिक्तानां ज्ञेयानां ज्ञानस्वरूपेऽभिन्नतया स्थितिनिबन्धनमविशेषतया स एकएवासीत्। पूर्व्वश्लोके यथाऽखण्डवस्तुग्रहणं प्रदर्शितं, तथात्रापि।

३। स एव भूयो निजवीर्य्यचोदितां
स्वजीवमायां प्रकृतिं सिसृक्षतीम्।
अनामरूपात्मनि रूपनामनी
विधित्समानोऽनुससार शास्त्रकृत्॥
१।१०।२१।२२।

४। विशुद्धं केवलं ज्ञानं प्रत्यक् सम्यगवस्थितम्।
सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम्॥२।६।३८।

३। सृष्टेः प्राक् प्रलये च निष्प्रपञ्चावस्थानमुक्त्वा तयोर्मध्ये सप्रपञ्चावस्थानमुच्यते स इति। शास्त्रकृत् सृष्टानां जीवानामनुशासनाय विधिप्रणेता—वेदादिशास्त्राविर्भावकारी—श्रीमद्विश्वनाथः, स एव भूयः पुनः अनामरूपे नामरूपहीने जीवे रूपनामनी विधित्समानः विधातुमिच्छन् निजवीर्य्यचोदितां स्वशक्तिप्रेरितां स्वजीवमायां स्वानाम् आत्मभूतानां जीवानां मायां निर्म्माणकौशलेन मुग्धकरीं सिसृक्षतीं स्रष्टुमिच्छतीं सृष्ट्युन्मुखां प्रकृतिं स्वशक्तिम् अनुससार अनुसृतवान् अधिष्ठितवान् तामाहृत्य सृष्टिविस्तारं कृतवान्। अत्रेदं तत्त्वं द्रष्टव्यम्। प्रकृतिर्हि नामरूपात्मिका। नामरूपे च ज्ञानस्य ज्ञेयरूपे तदभिन्ने। ज्ञानज्ञेयनामरूपात्मकं जगत् जीवज्ञानएव प्रस्फुरति, तस्य च तत् भोगाय भवति, अतो जीवसन्निधावेव तस्य प्रकाशः। तेन च दृश्येन मोहं प्राप्तवतो जीवस्य तत्सम्पर्कीणयथायथज्ञानसम्पादनायात्मसात्करणाय च स एव स्वयं शास्त्रप्रणेता पथप्रदर्शकः। यद्यपि शास्त्रकृदित्येकं विशेषणमनुसृत्य पद्यस्यास्य परमात्मतत्त्वनिर्द्देशाध्याये स्थापनं युज्यते तथापि नामरूपप्रकाशकार्य्यप्राधान्यत्वादस्यात्र सन्निवेशः।

४। अधुनौपनिषदं ब्रह्म प्रस्तूयते विशुद्धमिति। विशुद्धम् अज्ञानविमिश्रणरहितं, केवलं सहायान्तरशून्यं, प्रत्यक् सर्व्वान्तरं, सम्यक् सर्व्वतोव्याप्तम्, अवस्थितं स्थिरं, सत्यं 'सर्व्वसत्ताप्रदस्वरूपत्वात् सत्य-

५। शश्वत्प्रशान्तमभयं प्रतिबोधमात्रं
शुद्धं समं सदसतः परमात्मतत्त्वम्।
शब्दो न यत्र पुरुकारकवान् क्रियार्थो
माया परैत्यभिमुखे च विलज्जमाना॥

६। तद्वै पदं भगवतः परमस्य पुंसो
ब्रह्मेति यद्विदुरजस्रसुखं विशोकम्।
सध्र्यङ् नियम्य यतयो यमकर्त्तहेतिं
जह्युः स्वराड़िव निपानखनित्रमिन्द्रः॥

२।७।४७।४८

पदार्थानां मुख्यम्' इति श्रीमज्जीवः, पूर्णं वृद्ध्यादिरहितम्, अनाद्यनन्तं जन्मनाशवर्ज्जितम्, निर्गुणं गुणकार्य्यचाञ्चल्यादिशून्यम्, नित्यं चिरस्थायि, अद्वयं द्वैतविरहितं ज्ञानं ब्रह्मेति शेषः। 'तच्च सुखस्वरूपमेव— विज्ञानमानन्दं ब्रह्मेति श्रुतिः'—इति श्रीमज्जीवः।

५।६। वेदवेदान्तयोर्वस्तुसाम्यमुक्त्वा सम्प्रति पुराणसिद्धस्यापि सर्व्वान्तर्भावकस्य परमपुरुषस्य तत्साम्यं दर्शयति द्वाभ्यां शश्वदिति तदिति। शश्वत् नित्यं प्रशान्तं क्षोभरहितम्, अभयं भयशून्यं, प्रतिबोधमात्रं ज्ञानैकरसं, शुद्धम् अविमिश्रं दोषरहितम्, समं वैषम्यशून्यम्, सदसतः परं कार्य्यकारणातीतम्, आत्मतत्त्वं ज्ञातृस्वरूपम्, विशोकं शोकरहितम्, अजस्रसुखं नित्यसुखं यत् ब्रह्म इति विदुः तत्त्वज्ञाः, यत्र ब्रह्मणि क्रियार्थः यज्ञार्थः पुरुकारकवान् बहुकर्त्तृकर्म्मादियुक्तः शब्दः न— प्रवर्त्तते किन्तर्हि 'सत्यं ज्ञानमनन्तम्' इत्यादिस्वरूपद्योत्यौपनिषदशब्दः स्वतः सिद्धस्य तस्य स्वरूपवर्णनपरः प्रवर्त्तत इति भावः—यस्य च अभिमुखे माया भोग्यनिर्व्वाहकर्त्री विलज्जमाना परैति पलायते निरस्तकुहकं यदिति यावत्, यं प्रति सध्र्यङ् सहचरं मनः नियम्य यस्मिन्

७। ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् ।
दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते ॥
८। एतावानेव योगेन समग्रेणेह योगिनः ।
युज्यतेऽभिमतोह्यर्थो यदसङ्गस्तु कृत्स्नशः ॥

स्थिरीकृत्य यतयः यत्नशीलाः साधकाः—स्वराट् स्वयं पर्ज्जन्यरूपेण विराजमानः इन्द्रः निपानखनित्रं निपानस्य कूपस्य खनित्रं खनन-साधनमिव—अकर्त्तृहेतिम् अभेदसाधनं जह्युः त्यजेयुः, ब्रह्मसम्पन्नतया कृतार्थत्वादितिभावः, तत् वै परमस्य पुंसः पुरुषस्य भगवतः पदं स्वरूपम् ।

७। ज्ञानस्याद्वयस्य 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' इति चिन्तनप्रकारैस्त्रिधा गृहीतस्यैकत्वं प्रदर्श्यते ज्ञानमात्रमिति। ज्ञानमात्रम् एव दृश्यादिभिः दृशिर्ज्ञानं तदादिभिः ज्ञानकर्म्मभक्तिभिः—भावो भावना—भावैः चिन्तनप्रकारैः परं ब्रह्म, ईश्वरः प्रेरयिता परमात्मा, पुमान् परमपुरुष इति एकः भगवान् युगपत् सर्व्वातीतसर्व्वगतसर्व्वान्त-र्भावकत्वेन प्रकाशमानः पृथक् ईयते प्रतीयते। परं ब्रह्म ज्ञानेन, प्रेरयिता परमात्मा कर्म्मणा, परमपुरुषोभक्त्या साधकैराराध्यते, अतएव पृथक् प्रतीयते, वस्तुत एकमेव ज्ञानवस्तु ।

८। कथं साधकैरेकमेव वस्तु त्रिधा त्रिभिर्य्योगपथैराराध्यते ? यदि न फले साम्यं स्यात् किं वा तेषां श्रमेण ? यदि वस्तुसाक्षात्कारएव योग-फलं तदा किमेभिस्त्रिभिः स साध्यते इत्यपेक्षयाह एतावानिति। इह साधने समग्रेण ज्ञानकर्म्मभक्त्यात्मकेन योगेन योगिनः एतावान् एव अभिमतः सम्मतः अर्थः अभिप्रायः युज्यते प्राप्यते, यत् यस्मात् कृत्स्नशः असङ्गः प्रपञ्चसङ्गव्युदासः भवतीति शेषः। प्रपञ्चव्युदासे सति पुनः निरस्तकुहकं सत्यं परं ब्रह्म साक्षात्प्रत्यक्षं भवति। एतदेव परवर्त्तिना पद्येन स्फोरयिष्यति ।

९। ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम्।
अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्म्मिणा॥

३।३२।२६—२८।

९। प्रपञ्चसङ्गव्युदासेन किं भवति तदाह ज्ञानमिति। पराचीनैः पराङ्मुखैः संसारप्रवणैः इन्द्रियैः निर्गुणं गुणातीतं अतएव चर्म्मचक्षुराद्यगोचरो ब्रह्म शब्दादिधर्म्मिणा नामरूपयुक्तेन अर्थरूपेण भ्रान्त्या भ्रमवशात् तदेकत्वेन न तु 'शान्तं शिवमद्वैतम्' इत्याद्यनुरूपप्रपञ्चातीतत्वेन अवभाति, सुतरां न साक्षाद्दर्शनं भवति। साक्षाद्दर्शनसिद्धय एव प्रपञ्चव्युदासः सर्व्वेषां साधकानां कर्त्तव्यः। यत्तु श्रीमज्जीवेनोक्तम्—'ननु ब्रह्मणो ज्ञानमात्रत्वेऽपि नित्यतदाश्रयकस्य प्रपञ्चस्य ज्ञानमात्रेण कथं व्युदासः स्यात्; सति तस्मिन् भगवत्तायाः कथं न स्यात्? उच्यते,—उभयस्य तदाश्रयकत्वेऽपि भगवत्ताया नित्यमेव स्वरूपशक्तिसिद्धत्वात् स्वरूपवदेवात्मारामाणां पुरुषार्थत्वाच्च न व्युदासं कर्त्तुं शक्यते कर्त्तुमिष्यते। ब्रह्म च जीवानां शब्दगोचरः—"तत्त्वौपनिषदं ब्रह्म पृच्छामि" इति श्रुतेः "शास्त्रयोनित्वात्" इति न्यायाच्च तच्च तत्कार्य्यस्य प्रपञ्चस्य सम्बन्धश्च शब्देनैव व्युदस्यते—"एकमेवाद्वितीयं ब्रह्म" इत्यादिना "धाम्ना स्वेन सदा" इत्यादिना च' इति—तच्चेदं विवेच्यम्—'ब्रह्मस्वभावो हि प्रपञ्चो न प्रपञ्चस्वभावं ब्रह्म' इत्येष न्यायः सर्व्वेषां वादिनां समानः। न हि स्वरूपशक्तिसम्पन्नो भगवान् प्रापञ्चिक इति भक्ता अपि वदन्ति तस्य सर्व्वथाऽप्राकृतिकत्वात्। सुतरां प्रथमं सर्व्वेषां योगेन प्रपञ्चविलयसाधनं युज्यते। यदा हि प्रपञ्चविलयेन साक्षात् सम्बन्धः स्थिरतामुपैति तदा प्रपञ्चमालम्ब्यन्तर्भाव्य स्वशक्त्या तमाप्याय्य च विद्यमानं भगवन्तं भक्ताः प्रत्यक्षीकुर्व्वन्ति। अयं पक्षः भिन्नभिन्नवैष्णवसम्प्रदायानां मतसामञ्जस्यं विदधातीति गोस्वामिपादानामप्यभिमतः स्यादित्यलं पल्लवितेन। अध्या-

१० । यस्मिन्विरुद्धगतयो ह्यनिशं पतन्ति
विद्यादयो विविधशक्तय आनुपूर्व्यात् ।
तद्ब्रह्म विश्वभवमेकमनन्तमाद्य-
मानन्दमात्रमविकारमहं प्रपद्ये ॥४।६।१६।

११ । निमित्तमात्रं तत्रासीन्निर्गुणः पुरुषर्षभः ।
व्यक्ताव्यक्तमिदं विश्वं यत्र भ्रमति लोहवत् ॥४।११।१७ ।

योऽयं क्रमसन्दर्भे पञ्चदशभिः श्लोकैर्न्यूनः । चतुर्थस्कन्धोद्वादशभिरध्यायैर्हीनः सम्बन्धोक्ति मते । तत्र एव श्रीमज्जीवेन दशमाध्यायव्याख्यानानन्तरमुक्तं 'सम्बन्धोक्तिमते त्वत्राध्यायोनास्ति—'चतुर्थस्कन्धश्चोनविंशत्यध्यायात्मक इति ।' इति । एवमन्यत्रापि ज्ञेयं न्यूनाधिक्यदर्शने ।

१० । शक्तिं विना न हि ब्रह्मणः कारणत्वं सिद्ध्यति, तामृते च विरुद्धगतीनां सृज्यशक्तीनां नियमनं च न भवति । अतएव शक्तिमयत्वलक्षणेनाविकारि ब्रह्मवस्तु सस्वरूपं निरूपयति यस्मिन्निति । विद्यादयः विद्याविद्यादयः विविधशक्तयः विरुद्धगतयः नियामकाभावे सति विपरीतपथगामिन्यः यस्मिन् हि अनिशं आनुपूर्व्यात् अनुक्रमेण पतन्ति प्रवर्त्तन्ते स्वस्वव्यापारं कुर्व्वन्ति, तत् विश्वभवं विश्वस्य भवो यस्मात् विश्वकारणम्, एकम् अखण्डम्, आद्यम् अनादि, अनन्तम् अशेषम्, अविकारं विकाररहितम् आनन्दमात्रं रसस्वरूपं ब्रह्म अहं ध्रुवः प्रपद्ये श्रये । अस्य पूर्व्ववर्त्तिनि पद्ये 'भगवान् पूर्णशक्त्याश्रयवस्तुलक्षणरूपत्वात्; अधीशः त्रिगुणशक्तेर्नियामकः तदतिरिक्तस्वरूपशक्त्यात्मकत्वात् तस्मात्तव रूपस्य च प्रकृत्यतीतशक्तिमयत्वात् एकात्मकत्वेनान्याभ्यां रूपिरूपाभ्यां विशेष एव' इति गोस्वामिपादेनोक्तत्वात्, उपरिष्टाद्यदुक्तं 'गोस्वामिपादानामप्यभिमतः स्यात्' इति तत् प्रतिपन्नमेव ।

११ । स्वशक्त्या ब्रह्मणः कारणत्वे सति कार्य्यभूतस्य प्रपञ्चस्य

१२ । यत्रेदं व्यज्यते विश्वं विश्वस्मिन्नवभाति यत् ।
तत्त्वं ब्रह्म परं ज्योतिराकाशमिव विस्तृतम् ॥४।२४।६० ।

१३ । एतत् पदं तज्जगदात्मनः परं
सकृद्विभातं सवितुर्यथा प्रभा ।
यथाऽसवोऽजाग्रति सुप्तशक्तयो
द्रव्यक्रियाज्ञानभिदाभ्रमात्ययः ॥

दोषैः कथं न तस्य संसृष्टिस्तदाह निमित्तमात्रमिति। तत्र सर्गे निर्गुणः गुणातीतः पुरुषर्षभः पुरुषोत्तमः निमित्तमात्रं सान्निध्यमात्रात् क्रियानिष्पादकः। यत्र पुरुषोत्तमे व्यक्ताव्यक्तं कार्य्यकारणात्मकं विश्वं लोहवत् भ्रमति परिवर्त्तते। यथायस्कान्तसन्निधौ लोहं प्रवर्त्तते तथा सृज्यशक्तिमयं जगत् तत्सान्निध्यात्। दृष्टान्तोऽयमविकारित्वप्रदर्शनपरः 'मत्स्थानि सर्व्वभूतानि न चाहं तेष्ववस्थितः' ( गी ९।४।५ ) इत्यादि-सिद्धः।

१२। ब्रह्मणि विश्वस्य प्रकाशात् विश्वे तत्प्रकाशो न विकारायाकाशवन्निर्लिप्तत्वात्तस्येत्याह यत्रेति। यत्र ब्रह्मणि इदं विश्वं व्यज्यते, विश्वस्मिन् यद् ब्रह्म आभाति, तत् तत्त्वम् अविकारि ब्रह्म परं ज्योतिः स्वप्रकाशम् आकाशम् इव विस्तृतं सर्व्वतोव्याप्तम्।

१३। तदेवाविकारित्वं प्रकारान्तरेण साधयति एतदिति। एतत् जगत् आत्मनः ज्ञानस्वरूपस्य पदं ज्ञेयं प्रकाशस्थानम्, सुतरां परं ततः पृथक्। सकृत् एकदा सृष्टिकाले सवितुः सूर्य्यस्य यथा प्रभा तथा जगत् विभातं ज्ञानस्वरूपस्य तस्य ज्ञेयत्वात् ततः स्फुरितम्; प्रलये तु अजाग्रति सुषुप्तौ यथा असवः प्राणाः सुप्तशक्तयः विलीनशक्तयः, तथा द्रव्यज्ञानक्रियाभिदाभ्रमात्ययः द्रव्यज्ञानक्रियाभेदरूपस्य भ्रमस्य अत्ययः विरामः यतः। द्रव्यज्ञानक्रियादिकं शक्तिमात्रं; शक्त्यतिरिक्तस्थूलादि-प्रतीतिस्त्वतस्मिंस्तद्बुद्धितया भ्रमविजृम्भिता, सा पुनर्गतः शक्त्यवशेष-

१४ । यथा नभस्यभ्रतमःप्रकाशा
भवन्ति भूपा न भवन्त्यनुक्रमात् ।
एवं परे ब्रह्मणि शक्तयस्त्वमू
रजस्तमः सत्त्वमिति प्रवाहः ॥४।३०।१६।१७ ।

१५ । ज्ञानं विशुद्धं परमार्थमेक-
मनन्तरन्त्ववहिर्ब्रह्म सत्यम् ।
प्रत्यक् प्रशान्तं भगवच्छब्दसंज्ञं
यद्वासुदेवं कवयोवदन्ति ॥५।१२।११ ।

प्रलये तिरोहिता भवतीति तत्त्वम् । चक्षुराद्यवस्थासम्भूतस्थूलादिप्रतीते-स्त्रिषु कालेष्वनवच्छेद्यमानत्वादापेक्षिकसत्यत्वम् ।

१४ । परे ब्रह्मणि तदात्मभूतायाः शक्तेरात्मभूताः शक्तयः स्फुरन्ति, तस्मिन्नेव ता विलीयन्ते, कथं न ताभिस्तस्य संसृष्टिः ? तदेव दृष्टान्तेन दर्शयति यथेति । हे भूपाः प्रचेतसः, यथा नभसि आकाशे अनुक्रमात् यथाक्रमम् अभ्रतमःप्रकाशाः मेघजनितं तमः अन्धकारः प्रकाशाश्च सूर्य्य-किरणाश्च भवन्ति, न भवन्ति च ; एवं परे ब्रह्मणि रजः तमः सत्त्वं तदात्मिका अमूः शक्तयः सृज्यशक्तयः भवन्ति व्यज्यन्ते न भवन्ति लीयन्ते च । इति एवं प्रवाहः जगत इति शेषः ।

१५ । शक्त्यतिरिक्तं प्रपञ्चस्य सत्यत्वमपाकृत्य किं सत्यं तद्दर्शयति प्रपञ्चविपरीतधर्म्मैः, 'वासुदेवः सर्व्वम्' (गी ७।१९) इति तस्य ब्रह्मतत्त्व-त्वञ्च स्फोरयति ज्ञानमिति । ज्ञानं—सत्यं, विशुद्धम् अज्ञानाविमिश्रम्—गुणातीतं—श्रीमद्विश्वनाथः, परमार्थं स्थिरतरतत्त्वम्—परमोऽर्थो मोक्षादिकोयस्मात्तत्—श्रीमद्विश्वनाथः, एकम् अद्वयं नानात्ववर्ज्जितम्, अनन्तरं तु अवहिः बाह्याभ्यन्तरशून्यं व्यापकं, ब्रह्म परिपूर्णम्, प्रत्यक् स्वप्रकाशं, प्रशान्तं निर्व्विकारं, भगवच्छब्दसंज्ञम् ऐश्वर्य्यमत्तया भगव-

१६ । उत्पत्तिस्थितिलयहेतवोऽस्य कल्पाः
सत्त्वाद्याः प्रकृतिगुणा यदीक्षयासन् ।
यद्रूपं ध्रुवमकृतं यदेकमात्मन्
नानाऽधात् कथमु ह वेद तस्य वर्त्म ॥५।२५।६

१७ । यं वै न गोभिर्मनसासुभिर्व्वा
हृदा गिरा वासुभृतो विचक्षते ।
आत्मानमन्तर्हृदि सन्तमात्मनां
चक्षुर्य्यथैवाकृतयस्ततः परम् ॥६।३।१६ ।

च्छब्दवाच्यम्, यत् च ज्ञानं कवयः तत्त्वदर्शिनः सर्व्वभूताश्रयं वासुदेवं वदन्ति ।

१६ । तासां सृज्यशक्तीनां तत्परत्वम्, तस्य चैकत्वेऽपि भूमत्वं बोधातीतत्वञ्चाह उत्पत्तीति । अस्य जगतः उत्पत्तिलयस्थितिहेतवः सत्त्वादयः प्रकृतिगुणाः सृज्यशक्तयः यदीक्षया यस्य दृष्ट्या कल्पाः स्व स्व कार्य्ये समर्थाः आसन्, यद्रूपं यस्य रूपं ध्रुवम् अनन्तम्, अकृतम् अनादि —अकृत्रिमं चिन्मयत्वादिति श्रीमद्विश्वनाथः, यत् एकं सत् आत्मन् आत्मनि नानाकार्य्यम् अधात् दधार, तस्य वर्त्म तत्त्वं कथमु ह जनः वेद ? न वेदेत्यर्थः ।

१७ । सम्प्रति ब्रह्मणः सर्व्वातीतत्वं वक्तुं प्रस्तौति यमिति । यम् आत्मनां जीवानाम् आत्मानं द्रष्टारम् असुभृतः प्राणिनः गोभिः इन्द्रियैः, मनसा चित्तेन, असुभिः प्राणैः वा, हृदा हृदयेन, गिरा वाचा वा न विचक्षते न पश्यन्ति न विषयीकुर्व्वन्ति, यथा आकृतयः रूपाणि ततः परं ताभ्यः आकृतिभ्यः परम् अतीतं तासामाकृतीनां प्रकाशकमिति यावत् चक्षुः न विषयीकुर्व्वन्तीति शेषः । य एष आत्मन आत्मा स हि सर्व्वप्रकाशकः, तं कोवा प्रकाशयेदिति भावः ।

१८। यदोपरामो मनसो नामरूप-
रूपस्य दृष्टस्मृतिसंप्रमोषात्।
य ईयते केवलया स्वसंस्थया
हंसाय तस्मै शुचिसद्मने नमः॥

१९। मनीषिणोऽन्तर्हृदि संनिवेशितं
स्वशक्तिभिर्नवभिश्च त्रिवृद्भिः।
वह्निं यथा दारुणि पाञ्चदश्यं
मनीषया निष्कर्षन्ति गूढ़म्॥

२०। स वै ममाशेषविशेषमाया-
निषेधनिर्व्वाणसुखानुभूतिः।

१८। तस्य सर्व्वातीतत्वे प्रतीते न सर्व्वशून्यत्वं, किन्तर्हि शुद्ध-स्वरूपत्वेन स्वप्रकाशत्वेन प्रतीतिरित्याह यदेति। यदा दृष्टस्मृतिसंप्रमोषात् दर्शनस्मृतितिरोधानात् नामरूपरूपस्य तदात्मकस्य मनसः उपरामः उपरतिः सर्व्वथा निवृत्तिः समाधिः, तदा यः केवलया स्वसंस्थया केवलेन स्वरूपज्ञानेन—निर्व्विशेषज्ञानगम्यतया वस्तुमात्रत्वेन—श्रीमद्विश्वनाथः, ईयते प्रतीयते, तस्मै शुचिसद्मने शुचि निर्म्मलं चित्तं सद्म प्रतीतिस्थानं यस्य तस्मै हंसाय शुद्धस्वरूपाय नमः।

१९। एवं प्रतीतौ न पुनः स निःशक्तिकएवेत्याह मनीषिण इति। मनीषिणः विवेकिनः त्रिवृद्भिः त्रिगुणात्मिकाभिः नवभिः प्रकृतिपुरुष-महदहङ्कारपञ्चतन्मात्ररूपाभिः स्वशक्तिभिः—पाञ्चदश्यं पञ्चदशसामधेनीमन्त्रैः प्रकाश्यं दारुणि गूढ़ं प्रच्छन्नं वह्निम् अग्निम् इव—अन्तर्हृदि सन्निवेशितं निश्चलीकृतं तं मनीषया बुद्धियोगेन निष्कर्षन्ति विविच्य प्रत्यक्षविषयं कुर्व्वन्ति।

२०। केवलस्वरूपज्ञानेन तदनुभूतिः सशक्तिकत्वेन चेत्युभयमभि-

स सर्व्वनामा स च विश्वरूपः
प्रसीदतामनिरुक्तात्मशक्तिः ॥

२१ । यद्यन्निरुक्तं वचसा निरूपितं
धियाक्षभिर्वा मनसा वोत यस्य ।
मा भूत् स्वरूपं गुणरूपवृंहितं
स वै गुणापायविसर्गलक्षणः ॥६।४।२६—२८ ।

धाय तयोस्तत्त्वमाह स वै इति । स वै एव अशेषविशेषमायानिषेध-निर्व्वाणसुखानुभूतिः अशेषाः विशेषाः यस्याः तस्याः मायायाः जगद्विधायिन्याः शक्तेः निषेधेन प्रत्याख्यानेन यत् निर्व्वाणसुखम् उपतिष्ठते तस्मिन् अनुभूतिः साक्षादुपलब्धिः यस्य सः—'बाणा हृद्विदारका आध्यात्मिकादिदुःखशराः केऽपि न सन्ति यत्र तस्मिन्नेव सुखे' इति श्रीमद्विश्वनाथः—मायाया अनिषेधावस्थायाम्—स सर्व्वनामा, स च विश्वरूपः । यद्येवं कथं तस्या निषेधः ?—अनिरुक्तात्मशक्तिः अनिरुक्ता अनिर्व्वाच्या आत्मनि शक्तिः माया यस्य,—'न प्रपञ्चस्वभावं ब्रह्म' इति न्यायात् तस्मिन् तत्कृततत्तद्रूपत्वाभावात् । एवम्भूतः स मम प्रसीदताम् मह्यं प्रसन्नो भवतु ।

२१ । मायाकृतरूपप्रत्याख्याने हेतुमाह यत् यदिति । यस्य आत्मनामात्मनः यत् यत् वचसा वाक्येन निरुक्तं वचनविषयीकृतं, यत् यत् धिया बुद्ध्या निरूपितं बुद्धिविषयीकृतं, यत् यत् अक्षभिः इन्द्रियैः वा, उत वा अपि वा मनसा निरूपितं व्यवसितं, गुणरूपवृंहितं गुणैः सत्त्वादिभिः रूपैः ग्राह्यैः वृंहितं वर्द्धितं तत् तत् तस्य स्वरूपं मा भूत् । कथम् ? स वै एव गुणापायविसर्गलक्षणः गुणानाम् अपायः विलयः विसर्गः अभिव्यक्तिः ताभ्यां लक्ष्यते तर्क्यते न तु साक्षादनुभूयते ; ततो न गुणरूपवर्द्धितस्य तस्य तस्य रूपेण गुणातीतस्य विसर्गापाय-

२२। अहमेवासमेवाग्रे नान्यत् किञ्चान्तरं बहिः।
संज्ञानमात्रमव्यक्तं प्रसुप्तमिव विश्वतः॥६।४।४७॥

२३। वचस्युपरतेऽप्राप्य यएको मनसा सह।
अनामरूपश्चिन्मात्रः सोऽव्यान्नः सदसत्परः॥

२४। यस्मिन्निदं यतश्चेदं तिष्ठत्यप्येति जायते।
मृण्मयेष्विव मृज्जातिस्तस्मै ते ब्रह्मणे नमः॥

वर्ज्जितस्य तस्य स्वरूपैक्यं भवितुमर्हति। 'यः सृष्टिप्रलयौ करोति स ईश्वरइत्यतः सृष्टेः पूर्व्वञ्च प्रलयात् परएव तस्य सत्त्वसिद्धेः' इति श्रीमद्विश्वनाथः।

२२। यद्यप्येवं सर्व्वथा बुद्ध्यादिभिरग्राह्योऽयमात्मनामात्मा, कथं वामी योगिभिः साक्षात् क्रियते, तद्दर्शयति सृष्टेः प्रागवस्थास्मारणेन अहमिति। अग्रे सृष्टेः प्राक् अव्यक्तम् इन्द्रियवृत्तिभिरलक्षितम्, अतएव विश्वतः सर्व्वतः प्रसुप्तम् अजाग्रत् इव संज्ञानमात्रं चैतन्यमात्रम् अहम् आत्मनामात्मा एव आसम्, आन्तरं ग्राहकरूपं बहिः ग्राह्यरूपम् अन्यत् किञ्चन न आसीत्। योगप्रलयेन योगिनः सर्व्वं विलुप्य चैतन्यसत्तामात्रत्वेन तं साक्षात् कुर्व्वन्ति।

२३। इतः साक्षात्काररीतिर्विव्रियते वचसीति। मनसा सह अप्राप्य वचसि उपरते सति अनामरूपः नामरूपविरहितः एकः असहायः सदसत्परः कार्य्यकारणयोः कारणम् चिन्मात्रः यः प्रकाशते स नः अस्मान् अव्यात् रक्षेत् ब्रह्मस्वरूपादर्शनादिति शेषः।

२४। यस्मिन्निति। यस्मिन् इदं कार्य्यकारणं तिष्ठति, अप्येति विशति, यतश्च जायते—मृण्मयेषु घटादिषु मृज्जातिः मृण्मात्रम् इव सर्व्वानुस्यूतं—यत्, तस्मै ब्रह्मणे नमः साक्षात्कृत्य तन्नमामि।

२५। यन्न स्पृशन्ति न विदुर्मनोबुद्धीन्द्रियासवः।
अन्तर्बहिश्च विततं व्योमवत्तं नतोऽस्म्यहम्॥

२६। देहेन्द्रियप्राणमनोधियोऽमी
यदंशविद्धाः प्रचरन्ति कर्म्मसु।
नैवान्यदा लोहमिवाप्रतप्तं
स्थानेषु तत् द्रष्टपदेशमेति॥६।१६।२१—२४।

२७। उभयं स्मरतः पुंसः प्रस्वापप्रतिबोधयोः।
अन्वेति व्यतिरिच्येत तज्ज्ञानं ब्रह्म तत् परम्॥६।१६।५६

२५। यमिति। मनोबुद्धीन्द्रियासवः यं न स्पृशन्ति न जानन्ति, अन्तर्बहिश्च व्योमवत् विततं तम् आत्मनामात्मानं अहं नतोऽस्मि प्रणमामि।

२६। देहेति। अमी देहेन्द्रियप्राणमनोधियः यदंशविद्धा यस्य अंशेन चैतन्यांशेन विद्धा आविष्टाः कर्म्मसु स्वस्वक्रियासु प्रचरन्ति प्रवर्त्तन्ते, अन्यदा जाग्रत्स्वप्नव्यतिरिक्तसुषुप्तिमूर्च्छादौ अस्मिन् विलीयावस्थानात् अप्राप्तम् अग्निसन्तापायुक्तम् अतएव दहनाक्षमं लोहमिव न प्रचरन्ति, तत् ततः स्थानेषु जाग्रदादिषु जीवः द्रष्टपदेश्यं द्रष्टृसंज्ञाम् एति प्राप्नोति। जीवस्यापि द्रष्टृत्वं ततएव न स्वतः। अतएव—

अन्तः प्रविश्य मम वाचमिमां प्रसुप्तां सञ्जीवयत्यखिलशक्तिधरः स्वधाम्ना।
अन्यांश्च हस्तचरणश्रवणत्वगादीन् प्राणान्नमो भगवते पुरुषाय तुभ्यम्॥ (४।९।६)

इति श्रीमद्ध्रुवोक्तिरीत्या सर्व्वेन्द्रियाणामात्मनश्च प्रवृत्तौ तं साक्षात्कुर्व्वीत जीव इति भावः। अतएवाह श्रुतिः—'प्रतिबोधविदितं मतम्' इति।

२७। उभयमिति। प्रस्वापप्रतिबोधयोः उभयं स्मरतः अनुसन्दधतः पुंसः यत् ज्ञानम् अन्वेति स्वापञ्च प्रतिबोधञ्च प्रकाशकतया अनुगच्छति, व्यतिरिच्यते ताभ्यां व्यतिरेकतया अवतिष्ठते तत् ज्ञानं शुद्ध-

२८। आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः ।
अविक्रियः स्वदृग्घेतुर्व्यापकोऽसङ्ग्यनावृतः ॥७।७।१९

२९। स्वर्णं यथा ग्रावसु हेमकारः
क्षेत्रेषु योगैस्तदभिज्ञ आप्नुयात् ।
क्षेत्रेषु देहेषु तथात्मयोगै-
रध्यात्मविद्ब्रह्मगतिं लभेत ॥७।७।२१ ।

जीवस्येति शेषः । परं जीवज्ञानाश्रयत्वेन आनन्त्येन च श्रेष्ठं ब्रह्म । एवं सत्यपि ब्रह्म तत् ज्ञानमेव न त्वन्यदिति भावः । सर्व्वविलोपे यज्ज्ञानास्तित्वमवशिष्यते तत् प्रपञ्चासंस्पृष्टशुद्धजीवस्येति सिद्धावपि यत्तस्मिन्नानन्त्यं स्फुरति न तत् जीवस्य, तस्याणुत्वात् आनन्त्योपयोगित्वान्नानन्त्यवत्त्वाच्च, किन्तर्हि ब्रह्मण एव । एवमानन्त्यस्फूर्त्तौ ज्ञानस्यैवानन्त्यमिति 'ब्रह्म तत्' ज्ञानमेवेत्युक्तम् ।

२८। एवमात्मनामात्मनोऽपरोक्षदर्शनसिद्धौ किंस्वरूपोऽयं प्रतिभाति तदेव वक्तुमुपक्रमते आत्मेति । आत्मा आत्मनामात्मा नित्यः अविनाशी, अव्ययः अपक्षयशून्यः, शुद्धः निरवद्यः, एकः अद्वितीयः, क्षेत्रज्ञः विज्ञाता, आश्रयः सर्व्वाधारः, अविक्रियः निष्कलः विकारहीनः, स्वदृक् आत्मज्योतिः, हेतुः सर्व्वकारणम्, व्यापकः अनन्तः, असङ्गः स्वे महिम्नि विद्यमानः, अनावृतः सर्व्वावरणशून्यः पूर्णः ।

२९। शास्त्रतः स्वरूपज्ञाने जायमाने न तेन वस्तुसाक्षात्कारो भवति तथा सति सर्व्वेषां शास्त्राध्यायिनां स्यात् सः । अतो दर्शनोपायग्रहणं कर्त्तव्यमित्युच्यते स्वर्णमिति । क्षेत्रेषु स्वर्णाकरेषु ग्रावसु स्फुरत्स्वर्णकणशिलाखण्डेषु योगैः खननाद्युपायैः यथा अभिज्ञः उपायज्ञः हेमकारः स्वर्णकारः स्वर्णम् आप्नुयात् लभेत, तथा अध्यात्मवित् अध्यात्मतत्त्वाभिज्ञः क्षेत्रेषु देहेषु आत्मयोगैः आत्मप्राप्त्युपायैः ब्रह्मगतिं ब्रह्मणैकात्मतां तदपरोक्षज्ञानम् आप्नुयात् ।

३० । एकस्त्वमेव जगदेतदमुष्य यत्त्व-
माद्यन्तयोः पृथगवस्यसि मध्यतश्च ।
सृष्ट्वा गुणव्यतिकरं निजमाययेदं
नानेव तैरवसितस्तदनुप्रविष्टः ॥७।९।३० ।

३१ । न यस्याद्यन्तौ मध्यञ्च स्वः परो नान्तरं बहिः ।
विश्वस्यामूनि यत् यस्माद्विश्वञ्च तदृतं महत् ॥
८।१।१२ ।

३० । अपरोक्षज्ञाने सिद्धे साक्षाद्दर्शनेन जगदादि सर्व्वं तन्मयं दृश्यते, तदतिरिक्तं न किञ्चित् प्रतिभातीति दर्शयति प्रह्लादवाक्येन एकइति । एतत् जगत्, हे आत्मनामात्मन्, एकः त्वम् एव, यत् यतः अमुष्य जगतः आद्यन्तयोः आदावन्ते च पृथक् अवस्यसि विरामं करोषि सन्मात्रतया पर्य्यवस्यसि, सुतरां मध्यतः च त्वम् एव । यद्येवमेव ततः कुतएषा जगत्प्रतीतिः ? निजमायया निजप्रज्ञया गुणव्यतिकरं सृज्य-शक्तिसन्निवेशपरम् इदं जगत् सृष्ट्वा तदनुप्रविष्टः तैः गुणैः सृज्यशक्तिभिः नानाइव त्वम् अवसितः प्रतीतः । गुणरूपाणां सृज्यशक्तीनां चिच्छक्त्यात्मभूतानां तच्छक्त्यात्मभूतेन ब्रह्मणैक्यदर्शनात् सर्व्वं ब्रह्मैव भातीति एतत् जगत् त्वमेवेत्युक्तम्, कथं तथा भातीति तत्कारणञ्च प्रदर्शितम् । एतेनान्यैश्च संगृहीतत्वात् प्रागिदं पद्यं परित्यक्तम् ;

यस्मिन् यतो येन च यस्य यस्मै यद्यो यथा कुरुते कार्य्यते च ।
परावरेषां परमं प्राक् प्रसिद्धं तद्ब्रह्म तद्धेतुरनन्यदेकम् ॥६।४।३० इति ।

'न प्रपञ्चस्वभावं ब्रह्म' इति न्यायात् न तु ब्रह्म जगत् ।

३१ । 'जगत् त्वमेव' इत्युक्ते जगत्स्वभावं ब्रह्मेत्यायाति वेति तन्निवारयति नेति । न यस्य आद्यन्तौ मध्यञ्च स्वः परः, न आन्तरं बहिः, विश्वस्य अमूनि आद्यन्तादीनि यस्मात्, विश्वं यत् यत्स्वभावं—'ब्रह्मस्वभावो हि प्रपञ्चः' इति न्यायात्—तत् ऋतं सत्यं महत् पूर्णं ब्रह्म ।

३२ । तमक्षरं ब्रह्म परं परेश-
मव्यक्तमाध्यात्मिकयोगगम्यम् ।
अतीन्द्रियं सूक्ष्ममिवाति दूर-
मनन्तमाद्यं परिपूर्णमीडे ॥८।३।२१ ।

३३ । अविक्रियं सत्यमनन्तमाद्यं
गुहाशयं निष्कलमप्रतर्क्यम् ।
मनोऽग्रयानं वचसाऽनिरुक्तं
नमामहे देव वरं वरेण्यम् ॥८।५।२६ ।

३२ । इतस्तस्य पृथक् स्वभावत्वं दर्शयति तमिति । तम् आत्मनामात्मानं ईडे स्तौमि । किम्भूतम् ? अक्षरं न तु विश्वमिव क्षरम्, ब्रह्म महतो महीयसम् न तु तदिव क्षुद्रम्, परं सर्व्वश्रेष्ठम् न तु तदिव तारतम्येन विद्यमानम्, परेशं सर्व्वनियन्तारं न तु तदिव नियम्यम्, अव्यक्तं प्रच्छन्नं न तु तदिव व्यक्तम्, आध्यात्मिकयोगगम्यम् आध्यात्मिकोपायेन प्राप्यम् न तु तदिव ऐन्द्रियप्रयासप्राप्यम्, अतीन्द्रियम् इन्द्रियाविषयम् न तु तदिव इन्द्रियग्राह्यम्, सूक्ष्मं न तु तदिव स्थूलम्, अतिदूरमिव निकटस्थमपि दूरस्थमिव न तु तदिव नित्येन्द्रियसन्निकृष्टम्, अनन्तं न तु तदिव सान्तम्, आद्यं न तु तदिव आदिमन्तं, परिपूर्णं न तु तदिव अपूर्णम् । एवमुत्तरेषूह्यम् ।

३३ । अविक्रियमिति । हे देव, अविक्रियं विकाररहितम्, सत्यं नित्यविद्यमानं, अनन्तम्, आद्यम् अनादिम्, गुहाशयं हृद्यधिष्ठितम्, निष्कलं निरुपाधिकम्, अप्रतर्क्यं तर्काग्राह्यम्, मनसोऽग्रयानं मनसोऽपि यविष्ठम्, अनिरुक्तम् अनिर्व्वाच्यम्, वरेण्यं वरणीयम्, वरं सर्व्वेषां श्रेष्ठम् त्वां नमामहे नमस्कुर्म्मः ।

३४ । आद्यन्तावस्य यन्मध्यमिदमन्यदहं बहिः ।
यतोऽव्ययस्य नैतानि तत्सत्यं ब्रह्म चिद्भवान् ॥८।१२।५

३५ । त्वं ब्रह्म पूर्णममृतं विगुणं विशोक-
मानन्दमात्रमविकारमनन्यदन्यत् ।
विश्वस्य हेतुरुदयस्थितिसंयमाना-
मात्मेश्वरश्च तदपेक्षतयाऽनपेक्षः ॥

३६ । एकस्त्वमेव सदसत् द्वयमद्वयञ्च
स्वर्णं कृताकृतमिवेह न वस्तुभेदः ।
अज्ञानतस्त्वयि जनैर्विहितोविकल्पो
यस्माद्गुणैर्व्यतिकरो निरुपाधिकस्य ॥८।१२।७।८

३४ । आदीति । यतः अस्य जगतः आद्यन्तौ मध्यं बहिः भोग्यम्, इदं दृश्यम्, अन्यत् भोक्तृ अहं द्रष्टृ, अव्ययस्य यस्य न एतानि सन्ति भवान् साक्षाद्वर्त्तमानः आत्मनामात्मा सत्यं चित् ब्रह्म ।

३५ । त्वमिति । त्वम् ब्रह्म पूर्णम्, अमृतम् अपरिवर्त्तनीयम्, विगुणं गुणातीतम्, विशोकं शोकरहितम्, आनन्दमात्रं सुखस्वरूपम्, अविकारं निर्व्विकारम्, अनन्यत् सर्व्वात्मकम्, अन्यत् सर्व्वातिरिक्तम्, विश्वस्य हेतुः कारणम्, आत्मा आत्मनामात्मा, स्वयम् अनपेक्षः तदपेक्ष-तया जगदपेक्षतया उदयस्थितिसंयामानाम् ईश्वरः नियन्ता ।

३६ । परस्परविपरीतमेकस्यान्यत्वमनन्यत्वं कथं सम्भवति, तदेव दृष्टान्तेनोपपादयति एकइति । एकः आत्मनामात्मा त्वमेव सदसत् कार्य्यकारणरूपं द्वयम् अद्वयञ्च । कथम् ? कृताकृतं स्वर्णमिव । कृतं कुण्डलादिरूपम् अकृतं स्वरूपेणावस्थितं स्वर्णं यथा एकं सत् कार्य्यञ्च कारणञ्च द्वयञ्च अद्वयञ्च तथा त्वमिति भावः । यद्येवं वस्तुभेदो नास्ति, तत् कुतो भेदप्रतीतिः ? यस्मात् निरुपाधिकस्य जात्यादिविरहितस्य

३७। सत्यव्रतं सत्यपरं त्रिसत्यं
सत्यस्य योनिं निहितञ्च सत्ये।
सत्यस्य सत्यम् ऋतसत्यनेत्रं
सत्यात्मकं त्वां शरणं प्रपन्नाः ॥१०।२।२६।

३८। न नामरूपे गुणकर्म्मजन्मभि-
र्निरूपितव्ये तव तस्य साक्षिणः।

देशकालाद्यवच्छिन्नत्वशून्यस्य च तव गुणैः सृज्यशक्तिभिः व्यतिकरः विविधसन्निवेशः, अज्ञानतः तद्विविधसन्निवेशस्य ज्ञानाभावात् त्वयि जनैः विकल्पः विविधकल्पना नानावस्तुकल्पना विहितः कृतः। अत्रेदं तत्त्वं लक्षयितव्यम्—ब्रह्म स्वर्णमिवैकं वस्तु, तत्समुत्पन्नैः कुण्डलादिस्थानीयैः सृज्यशक्तिसन्निवेशैर्या नानावस्तुकल्पना समुपतिष्ठते, न तैर्ब्रह्मवस्तु भिद्यते। अतो ब्रह्मैव नानावस्तुत्वमुपागतमिति तस्मिन् भेदबुद्धिस्तु भ्रान्ति-विजृम्भिता।

३७। यदि परब्रह्मणि सृज्यशक्तिसन्निवेशकृतनानावस्तुकल्पना भ्रान्तिविजृम्भिता, तत् किं सृज्यशक्तयो मृषैव? नेति दर्शयति सत्येति। सत्यव्रतं सत्यसङ्कल्पं, सत्यपरं सत्यं परं श्रेष्ठं प्राप्तिसाधनं यस्मिन् तम्, त्रिसत्यं त्रिषु कालेषु सत्यम् अव्यभिचारेण वर्त्तमानं, सत्यस्य योनिं सत् प्रत्यक्षेणोपलभ्यं कार्य्यं, त्यत् चक्षुरादेरविषयं असत् कारणम् सृज्यशक्तय इति यावत् तस्य सत्यस्य योनिं कारणम्, सत्ये तस्मिन् सदसत्कार्य्य-कारणे निहितं तन्नियन्तृतया स्थितम्, सत्यस्य तत्कार्य्यकारणरूपापेक्षि-कस्य सत्यं पारमार्थिकं मौलिकमिति यावत्, ऋतसत्यनेत्रम् ऋतञ्च सुनृतावाणी सत्यञ्च समदर्शनं तयोः नेत्रं नेतारम्; एवं सर्व्वप्रकारेण सत्यात्मकं सत्यस्वरूपं त्वाम् आत्मनात्मानं शरणं प्रपन्नाः प्राप्ताः।

३८। सत्यसङ्कल्पस्य सङ्कल्पप्रभवं सर्व्वञ्चेत् सत्यं, तदा नामरूपादि सर्व्वमेव तदवयवत्वेन तत्स्वरूपतयोपास्यमित्यायाति, तन्नेत्याह नेति।

मनोवचोभ्यामनुमेयवर्त्मनो
देव क्रियायां प्रतियन्त्यथापि हि ॥१०।२।३६ ।

३९ । रूपं यत्तत् प्राहुरव्यक्तमाद्यं
ब्रह्म ज्योतिर्निर्गुणं निर्व्विकारम् ।
सत्तामात्रं निर्व्विशेषं निरीहं
स त्वं साक्षाद्विष्णुरध्यात्मदीपः ॥१०।३।२४ ।

गुणकर्म्मजन्मभिः निरूपितव्ये निरूपणार्हे नामरूपे तस्य नामरूपात्मकस्य जगतः साक्षिणः मनोवचोभ्याम् अनुमेयवर्त्मनः मनसो वचसश्चातीतत्वात् ताभ्याम् अनुमेयं वर्त्म मार्गो यस्य तस्य तव न । अथापि, हे देव बहुधाद्योतमान, क्रियायाम् उपासनादिलक्षणायाम् उपासकाः प्रतियन्ति साक्षात्पश्यन्ति हि ।

३९ । मनोवचनातीतस्य तस्य साक्षाद्दर्शनं कथं वा सम्भवति तदाह रूपमिति । यत् रूपम् आहुः श्रुतयः, तत् अव्यक्तं दृश्याकारशून्यम् । यदि दृश्याकारशून्यं, कथं तत्साक्षादनुभवविषयं स्यात् ? आद्यं कारणं —कारणं हि साक्षादनुभवगम्यम् । न हि कार्य्यस्य कारणं दृश्यपदार्थवत्, तथापि बालैरपि कार्य्यस्य कारणं जिज्ञासति, ततश्च तस्य साक्षादनुभवगम्यत्वं प्रतिपन्नं भवत्यात्मकर्त्तृत्ववत् ;—ब्रह्म महतो महीयः, ज्योतिः चिन्मात्रम्, निर्गुणं गुणातीतम्, निर्व्विकारं विकारातीतम्, सत्तामात्रम्, निर्व्विशेषं सर्व्वान्तर्भावकत्वादन्यैस्तुलनाऽयोग्यत्वाद्विशेष इति निर्देशविरहितं, निरीहं प्रयासशून्यम्—स्वतः सामर्थ्याप्रसरात् प्रयास उपतिष्ठते, तत्तु न सम्भवति परे—स एवम्भूतः त्वं साक्षात् विष्णुः सर्व्वान्तर्भावकः, अध्यात्मदीपः आत्मन्यधिष्ठितो ज्ञानदीपः—

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ (गी १०।११)

इति ज्ञानदीपतया मनोवचनातीतस्य तस्य साक्षादुपलब्धिः साधकेन ।

४० । तस्मादिदं जगदशेषमसत्स्वरूपं
स्वप्नाभमस्तधिषणं पुरुदुःखदुःखम् ।
त्वय्येव नित्यसुखबोधतनावनन्ते
मायात उद्यदपि यत् सदिवावभाति ॥

४१ । एकस्त्वमात्मा पुरुषः पुराणः
सत्यः स्वयंजोतिरनन्त आद्यः ।
नित्योऽक्षरोऽजस्रसुखो निरञ्जनः
पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः ॥

१०।१४।२२।२३ ।

४० । सृज्यशक्तिसन्निवेशसमुद्भूतं जगदिदमसदपि ब्रह्मस्वभावतया तदधिष्ठानभूमितया च सदिव नित्यमिव सुखमिव चेतनमिव प्रतिभातीत्याह तस्मादिति । तस्मात् तव क्रीड़नशीलत्वात् इदम् अशेषं समग्रं जगत् असत्स्वरूपम् अव्यभिचारेण वर्त्तमानताहीनं, स्वप्नाभं स्वप्नतुल्यं क्षणस्थायि, अस्तधिषणं तिरोहितचैतन्यप्रतिभासं पुरुदुःखदुःखम् दुःखबहुलं, नित्यसुखबोधतनौ नित्यसुखबोधस्वरूपे अनन्ते त्वयि मायातः प्रज्ञाशक्तितः उद्यत् अपि उद्भवत् अपि सदिव आभाति ॥ 'सदिवेत्युपलक्षणमेतत् नित्यमिव सुखमिव चेतनमिव अधिष्ठानभूतस्य तव गुणैस्तथा तथा भाति' इति श्रीमत्स्वामी ।

४१ । यद्यप्यसदिदं जगदात्मनामात्मनि सदिव प्रतिभाति तथापि न तस्य बहुत्वादिकैः स्वरूपप्रच्छादनमस्येत्युच्यते एक इति । त्वम् एकः, आत्मा आत्मनामात्मा, पुरुषः अव्यक्तकदेहशायी, पुराणः पुरापि नवः चिरनवीनः कार्य्यात् पूर्व्वमपि विद्यमानः, सत्यः अव्यभिचारेण वर्त्तमानः, स्वयं ज्योतिः स्वप्रकाशः, अनन्तः देशकालाद्यपरिच्छिन्नः, आद्यः कारणम्, नित्यः सनातनः, अक्षरः अप्रच्युतस्वभावः, अजस्रसुखः

४२ । आत्मानमेवात्मतयाऽविजानतां
तेनैव जातं निखिलं प्रपञ्चितम् ।
ज्ञानेन भूयोऽपि च तत् प्रलीयते
रज्ज्वामहेर्भोगभवाभवौ यथा ॥१०।१४।२५ ।

४३ । एकं स्वयंज्योतिरनन्यमव्ययं
स्वसंस्थया नित्यनिरस्तकल्मषम् ।

अविच्छिन्नसुखः, निरञ्जनः निष्कलङ्कः, पूर्णः, अद्वयः द्वैतविरहितः, उपाधितः जात्यादिभ्यो देशकालादिभ्यश्च मुक्तः न तैः परिच्छिन्नः, अमृतः अपरिवर्त्तनीयः ।

४२ । जगदसत् ब्रह्माश्रितत्वात् सदिति ज्ञानेन किं भवति तदेव स्पष्टमभिदधाति आत्मानमिति । आत्मानम् एव आत्मतया अविजानतां तेनैव अज्ञानेन निखिलं प्रपञ्चितं प्रपञ्चः जातम् आत्मातिरिक्ततया प्रतिभातम्; ज्ञानेन आत्मज्ञानेन भूयोऽपि च तत्प्रपञ्चितं रज्ज्वाम् अहेः सर्पस्य भोगभवाभवौ शरीरोत्पत्तिविनाशौ यथा तथा प्रलीयते । अत्र दृष्टान्तवशात् जगन्मिथ्यात्वं प्रतीयते । सर्व्वनिवृत्तिसाधनेन निवृत्तियोगी प्रतिष्ठालाभाय रज्ज्वां सर्पस्याध्यासं दृष्टान्तत्वेन गृह्णन्ति योगिन इति नैषोक्तिरापेक्षिकसत्यत्वं जगतोऽपवदति । 'प्रलीयते' इति क्रियापदेन योगप्रलय एवात्र ध्वनितः । ब्रह्मणि दृश्यमानमिदं जगत् तदतिरिक्तत्वेन प्रतिभातं योगे विघ्नमुत्पादयति, तदपसारणाय निरस्तकुहकत्वेन ग्रहीतव्यम् । ततो व्यतिरेकेण जगन्मिथ्यैव प्रतिभाति; तत्र रज्ज्वां सर्पस्याध्यासएव शुद्धचित्स्वरूपग्रहणाय प्रकृष्टदृष्टान्तः ।

४३ । आत्मात्मस्वरूपं शक्तिमद्ब्रह्मैव ध्यानविषयमिति योगाचार्य्यश्रीकृष्णकृतध्यानेन प्रतिपादयति एकमिति ।

ब्राह्मे मुहूर्त्ते उत्थाय वार्य्युपस्पृश्य माधवः ।
दध्यौ प्रसन्नकरण आत्मानं तमसः परम् ॥ ( १०।७०।४ )

ब्रह्माख्यमस्योद्भवनाशहेतुभिः
स्वशक्तिभिर्लक्षितभावनिर्वृतिम् ॥१०।७०।५

४४। वृहदुपलब्धमेतदवयन्त्यवशेषतया
यत उदयास्तमयौ विकृतेर्मृदिवाविकृतात्।
अत ऋषयोदधुस्त्वयि मनोवचनाचरितं
कथमयथा भवन्ति भुवि दत्तपदानि नृणाम् ॥
१०।८७।११।

इति तमसः परं प्रकृतेरतीतम् आत्मानम् आत्मनामात्मानं दध्यौ इति प्राप्तम्, किम्भूतम्? एकम् अखण्डं, स्वयंज्योतिः स्वप्रकाशम्, अनन्यं निरुपाधिकम्, अव्ययं क्षयवृद्ध्यादिशून्यं, स्वसंस्थया स्वप्रभावेन नित्य-निरस्तकल्मषं नित्यं निरस्तं कल्मषं यस्मात् तं नित्यापहतपाप्मानं, ब्रह्माख्यं ब्रह्मेति आख्या प्रसिद्धिः यस्य तम्, अथ विश्वस्य उद्भवनाशहेतुभिः अन्वयव्यतिरेककारणैः स्वशक्तिभिः स्वरूपशक्तिभिः एकस्याः शक्तेर्विविध-प्रकाशैः लक्षितभावनिर्वृत्तिं—भावः सत्ता निर्वृतिरानन्दः—लक्षितो भावश्चासौ निर्वृतिश्चेति यस्य तम्। योगप्रलये विलीनशक्तित्वेऽप्यखण्ड-शक्तिपरिलक्षितसत्तामात्रत्वेन, लीलाभिनिवेशे पुनः शक्त्यभिव्यक्तानन्द-मात्रत्वेन साधकैरनुभूयते सः। निवृत्तियोगिभिः सत्तामात्रत्वेन प्रवृत्ति-योगिभीरसस्वरूपत्वेन तं गृह्णाति स्वरूपशक्तियोगादेवेति तत्त्वम्।

४४। वेदवेदान्तसिद्धब्रह्मवस्तु पूर्व्वमुक्तम्। सम्प्रति वेदेष्वग्न्यादि-भौतिकपदार्थनाम्नैव गृहीतं वस्तु कथं ब्रह्मत्वेन गृहीतं भवेदिति दर्शयति वृहदिति। उपलब्धं दृष्टम् एतत्सर्व्वं वृहत् ब्रह्मस्वरूपमित्येव अवयन्ति जानन्ति। कथम्? वृहत्तएव अवशेषतया प्रलये अवशिष्य-माणत्वेन विकृतेः घटादेः मृत् इव अविकृतात् यतः वृहत्तः उदयास्तमयौ उत्पत्तिप्रलयौ भवतः। सर्व्वप्रलये यदवशिष्यते तदेव परमार्थवस्तु, तत एव पुनरुत्पत्तिस्तस्मिन्नेव पुनः प्रलय इति सिद्ध्यति। अतएव ऋषयः

४५। दृतय इव श्वसन्त्यसुभृतो यदि ते ऽनुविधा
महदहमादयोऽण्डमसृजन् यदनुग्रहतः।
पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः
सदसतः परं त्वमथ यदेष्ववशेषमृतम्॥
१०।८७।१३।

४६। स्वकृतविचित्रयोनिषु विशन्निव हेतुतया
तरतमश्चकास्यनलवत् स्वकृतानुकृतिः।

वैदिकमन्त्रद्रष्टारः अग्न्यादीन् स्तुवाना अपि त्वयि आत्मनामात्मनि मनोवचनाचरितं मनसः वचनस्य च आचरितं तात्पर्य्यमभिधानञ्च दधुः। अर्थान्तरन्यासेन प्रतिपादयत्येतत्—नृणां भूचराणां भुवि दत्तपदानि निक्षिप्तपदानि कथम् अयथा न तत्र दत्तपदानि भवन्ति। ऋषयो यत्र यत्रैव मनो दधुः ब्रह्मस्वरूपारोपेण, तत्र तत्र ब्रह्मैव तेषां चिन्तनीयविषयमभूत् ब्रह्मातिरिक्तपदार्थाभावात्।

४५। ब्रह्मान्वयसमुत्पन्नं सर्व्वं तत्स्वभावमेव व्यनक्ति, ब्रह्म तु तदतीतमित्याह दृतय इति। यदनुग्रहतः यस्य प्रसादात् यस्यानुप्रवेशेन महदहमादयः महान् अहङ्कारः आदिर्येषां ते अण्डं समष्टिव्यष्टिरूपं देहम् असृजन् सृष्टवन्तः; अत्र अन्नमयादिषु कोषेषु यः पुरुषविधः तत्तदाकारः चरमः पुच्छत्वेनोक्तः 'ब्रह्मपुच्छं प्रतिष्ठा' इति वचनेन अन्वयः ब्रह्माकारः, असुभृतः नराः यदि तस्य ते तव अनुविधाः अनुवर्त्तिनः श्वसन्ति जीवन्ति, इतरथा दृतयः भस्त्रा इव वृथाश्वासा इत्यर्थः। यदि केवलमन्वयेन ब्रह्म गृहीतं स्यात् सत्यत्वमसङ्गत्वमस्य व्याहन्येत, अतआह—अथ त्वं सदसतः स्थूलसूक्ष्मादन्नमयादेः परं व्यतिरिक्तम् अशेषम् अबाध्यम्, ऋतं सत्यम् अव्यभिचारेण वर्त्तमानम्।

४६। एवं ब्रह्मान्वयेऽपि न सर्व्वमेव समानं तत्प्रकाशस्थानम्,

अथ वितथास्वमूष्ववितथं तव धाम समं-
विरजधियोऽनुयन्त्यभिविपण्यव एकरसम् ॥
१०।८७।१५ ।

४७। सदिव मनस्त्रिवृत्त्वयि विभात्यसदामनुजात्
सदभिमृशन्त्यशेषमिदमात्मतयात्मविदः ।
न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया
स्वकृतमनुप्रविष्टमिदमात्मतयाऽवसितम् ॥
१०।८७।२२ ।

अथापि समदर्शिनस्तेषु सर्व्वेष्वेकमेव ब्रह्म पश्यन्तीत्याह स्वकृतेति। स्वकृतविचित्रयोनिषु स्वयं कृतासु उच्चनीचमध्यमासु योनिषु अभिव्यक्ति-स्थानेषु हेतुतया कारणतया विशन् इव—इवशब्देन मुख्यप्रवेशं वारयति सर्व्वत्र नित्यविद्यमानत्वात्—स्वकृतानुकृतिः स्वकृताभिव्यक्तिस्थानानुरूपः अनलवत्—अनलो यथा स्वयं तारतम्यविहीनोऽपि इन्धनानुसारेण तथा तथा विभाति तथा—तरतमतः चकास्सि अवभाससे, अथ अथापि वितथासु मिथ्याभूतासु अमूषु योनिषु समम् अविशेषतः अवितथं सत्यम् एकरसं सन्मात्रं तव धाम स्वरूपम् अभिविपण्यवः फलाभिसन्धिरहिताः विरजधियः निर्म्मलमतयः अनुयन्ति जानन्ति ।

४७। त्रिगुणात्मकं यन्मनोविलसितं ह्यसदप्यधिष्ठानसत्यतया सदिव भाति तदात्मतया तस्य ग्रहणमुपदिशति सदिति। आमनुजात् मनुजमभिव्याप्य त्रिवृत् त्रिगुणात्मकं मनः मनोविलसितं—'वितथ-मनोविलासम्' ( १०।८७।३३ ) इत्युपरिष्टादुक्तत्वात्—असत् स्वसत्तया सत्तावत्त्वशून्यमपि त्वयि आत्मनामात्मनि सदिव सत्तावदिव विभाति। आत्मविदः आत्मतत्त्वज्ञाः अशेषं समग्रं इदं विश्वं मनसि प्रतिष्ठितम् आत्मतया आत्मकार्य्यत्वात् सत् अभिमृशन्ति सदिति जानन्ति । दृष्टा-

४८। न यदिदमग्र आस न भविष्यदतो निधना-
दनु मितमन्तरा त्वयि विभाति मृषैकरसे।
अत उपमीयते द्रविणजातिविकल्पपथै-
र्वितथमनोविलासमृतमित्यवयन्त्यबुधाः॥
१०।८७।३३।

नेनैतत् समर्थयति—कनकस्य विकृतिं कुण्डलादिकं तदात्मतया कनकरूपत्वेन न हि त्यजन्ति कनकार्थिन इति शेषः। कथं न त्यजन्ति? स्वकृतं स्वेन कनकेन कृतम् अनुप्रविष्टम् इदं कनकम् आत्मतया कनकरूपेण अवसितं निश्चितम्। ब्रह्मसत्तया मनोविलसितविश्वस्य सत्यत्वमवधार्य्य ब्रह्मैव तत्र तत्र पश्यन्तीति समुदायार्थः।

४८। कथमिदं जगन्मृषात्वेन विमृश्यात्मनामात्मानमेव सत्यत्वेन ग्रहीतव्यं तत्कारणमभिदधाति नेति। यत् यस्मात् इदं विश्वम् अग्रे सृष्टेः प्राक् न आस न आसीत्, न च निधनात् प्रलयात् अनु अनन्तरं भविष्यत् भविष्यति, अतः अन्तरा मध्येऽपि एकरसे केवले त्वयि मृषा मिथ्यारूपमेव विभाति इति मितं निश्चितम्। अतः अतएव द्रविणजातिविकल्पपथैः द्रविणजातीनां मृत्स्वर्णादिद्रव्यमात्राणां विकल्पाः भेदाः घटकुण्डलादयः तेषां पथैः प्रकारैः उपमीयते सदृशतया निरूप्यते जगदिति शेषः। वितथमनोविलासं वितथं मिथ्या मनोविलासं मनसो विचित्रक्रीड़नं तत्सङ्कल्पमात्रसिद्धम् ऋतं सत्यम् इति अबुधाः अज्ञाः अवयन्ति जानन्ति। इदं मनोविलसितं कस्येति जिज्ञासितव्यम्? न हि जीवस्य तत्सम्भवति। जीवमानसात् सृष्टेरुत्पत्तिश्चेत्, एकैकस्य जीवस्य स्रष्टृत्वमेव सिद्ध्येत् व्यष्ट्यनुरूपत्वात् समष्टेः। अतः 'असतोऽधिमनोऽसृजत' इत्याद्याः श्रुतेर्व्याख्यायां श्रीमत्सनातनो यदाह— 'अत्रासच्छब्देन सच्छब्दप्रसिद्धः कार्य्यपरम्परातिरिक्तं सर्व्वकारणं श्रीभगवानुच्यते—"असद्व्यपदेशादिति चेन्न, धर्म्मान्तरेण वाक्यशेषात्" इति

४९ । द्युपतय एव ते न ययुरन्तमनन्ततया
त्वमपि यदन्तराण्डनिचया ननु सावरणाः ।
ख इव रजांसि वान्ति वयसा सह यच्छ्रुतय-
स्त्वयि फलन्त्यतन्निरसनेन भवन्निधनाः ॥
१०।८७।३७ ।

५० । तद्ब्रह्म परमं सूक्ष्मं चिन्मात्रं सदनन्तकम् ।
विज्ञायात्मतया धीरः संसारात् परिमुच्यते ॥१०।८८।७

न्यायात् । अधि-मनःशब्देन सर्व्वाधिकारि तदीयमेव मनः' इति— तदेव वयमनुमोदयामः । ब्रह्ममनोविलासत्वात् विश्वस्य नैकान्तमिथ्यात्वम् । मनो वा शक्तयो वा सत्यस्वरूपस्येति तदुत्पन्नस्य तस्यापेक्षिकसत्यत्वमवश्यम्भावि । योगप्रलये तस्य ब्रह्मणि विलयः, स त्वन्यएव ।

४९ । तस्यानिर्व्वचनीयत्वेऽपि न ज्ञानाविषयत्वमित्याह द्युपतय इति । यदन्तरा यस्य अन्तरा मध्ये ननु अहो सावरणाः उत्तरोत्तरदशगुणसप्तावरणयुक्ताः अण्डनिचयाः ब्रह्माण्डसमूहाः वयसा कालचक्रेण खे आकाशे रजांसि इव सह एकदैव वान्ति प्रवहन्ति, तस्य ते तव अन्तम् अनन्ततया द्युपतयः स्वर्गादिलोकपतयः न ययुः, त्वमपि न अन्तं यासि अन्तस्याविद्यमानत्वात् । यत् यस्मादेवम्, अतः श्रुतयः अतन्निरसनेन न तत् न तत् इति निरसनेन भवन्निधनाः भवति त्वयि निधनं समाप्तिः यासां ताः त्वयि हि फलन्ति पर्य्यवस्यन्ति । न हि निरवधिर्निषेधः सम्भवति, अतः श्रुतयस्त्वयि पर्य्यवस्यन्ति ।

५० । तस्यानिर्व्वचनीयत्वेऽपि तदनुग्रहेणैव तं जानन् जनः संसारात् मुच्यते इत्युच्यते तदिति । 'मत्परैः कृतमैत्रस्य करिष्ये मदनुग्रहम्' ( १०।८८।६ ) इत्यतोऽनुग्रहमाकृष्य तदनुग्रहस्वरूपमेव ब्रह्मेति निर्द्देशोऽत्रेति व्याख्यातारः । वस्तुतस्तु 'करिष्ये मदनुग्रहम्' इत्यनेन-

५१। स्थित्युद्भवप्रलयहेतुरहेतुरस्य
यत् स्वप्नजागरसुषुप्तिषु सद्बहिश्च।
देहेन्द्रियासुहृदयानि चरन्ति येन
संजीवितानि तदवेहि परं नरेन्द्र॥

५२। नैतन्मनो विशति वागुत चक्षुरात्मा
प्राणेन्द्रियाणि च यथाऽनलमर्च्चिषः स्वाः।
शब्दोऽपि बोधकनिषेधतयात्ममूल-
मर्थोक्तमाह यदृते न निषेधसिद्धिः॥

तदनुग्रहलाभादेव दर्शनविघ्नापाये ब्रह्मवस्तूपलब्धिरिति क्रमप्रदर्शनमत्र। तथा सति 'विज्ञायेत्यर्द्धपद्यमधिकमसाम्प्रदायिकम्' इत्यपि वचनमनावश्यकम्। यतोऽनुग्रहादनन्तरं यद्ब्रह्मवस्तु प्रकाशते तज्ज्ञात्वा विमुक्तिरिति सुगमोऽर्थो निष्पद्यते, अनुग्रहस्य ब्रह्मसाम्यज्ञानं नापेक्षते। कोऽयमनुग्रह इति जिज्ञासायां ब्रह्मण आत्मप्रकाशविघ्नापाय एव स इति तदुत्तरम्। अनुग्रहस्तस्य प्रेम्णो विलास एव। अतएव पद्यार्थः—तत् अनुग्राहकं परमं सर्व्वोत्कृष्टं, सूक्ष्मं दुर्ज्ञेयं, चिन्मात्रं ज्ञानस्वरूपं, तत् सत्यम्, अनन्तकं सर्व्वविधपरिच्छेदशून्यं ब्रह्म विज्ञाय दर्शनविषयं कृत्वा धीरः स्थितप्रज्ञः संसारात् परिमुच्यते विमुक्तो भवति, तदनुग्रहादिति शेषः।

५१। पुनस्तद्ब्रह्मतत्त्वं निर्द्दिशति स्थितीति। अस्य विश्वस्य स्थित्युद्भवप्रलयहेतुः स्थित्यादीनां कारणं, स्वयं तु अहेतुः हेतुरहितः, यत् स्वप्नजागरसुषुप्तिषु वहिश्च समाध्यादौ सत् अनुवर्त्तमानं, येन संजीवितानि प्राणितानि देहेन्द्रियासुहृदयानि चरन्ति क्रियावन्ति भवन्ति, तत् परं तत्त्वम् अवेहि जानीहि।

५२। एवं सर्व्वत्रानुवर्त्तमानं ब्रह्म कथं स्वतएव चक्षुरादिविषयं न

५३ । सत्त्वं रजस्तम इति त्रिवृदेकमादौ
सूत्रं महानहमिति प्रवदन्ति जीवम् ।
ज्ञानक्रियार्थफलरूपतयोरुशक्ति
ब्रह्मैव भाति सदसच्च तयोः परं यत् ॥
११।३।७५—३७ ।

५४ । आदावन्ते च मध्ये च सृज्यात् सृज्यं यदन्वियात् ।
पुनस्तत्प्रतिसंक्रामे यच्छिष्येत तदेव सत् ॥११।१९।१६ ।

भवति तदाह नेति। अनलं यथा स्वाः अर्च्चिषः स्फुलिङ्गाः न प्रकाशयन्ति न दहन्तीति शेषः, तथा एतत् परं तत्त्वं—कर्म्म—न विशति विषयीकरोति मनः, उत अपि च वाक्, चक्षुः, आत्मा जीवः, प्राणेन्द्रियाणि च। शब्दः अपि आत्ममूलम् आत्मनि प्रमाणं सन् बोधकनिषेधतया बोध्यविषयाणां स्थूलत्वादीनां मन आदीनाञ्च बोधकतया निषेधतया च अर्थोक्तं अर्थादुक्तं यथा भवति तथा आह, न तु साक्षात् तद्ब्रह्म आह, यत् अवधिभूतं ब्रह्म ऋते विना न निषेधसिद्धिः, सर्व्वस्य निषेधस्य सावधित्वात् ।

५३ । यदि ब्रह्म सर्व्वप्रमाणातीतं तत्कथं तज्ज्ञानं सम्भवति ? कथं सम्भवति तदाह सत्त्वमिति । आदौ एकम् उरुशक्ति विविधशक्ति ब्रह्म एव सत्त्वं रजः तमः इति त्रिवृत् प्रधानम् प्रवदन्ति, क्रियाशक्त्या सूत्रं, ज्ञानशक्त्या महान् अहम् अहङ्कारः इति प्रवदन्ति, जीवं प्रवदन्ति कार्य्यकारणयोरनन्यत्वात् । ज्ञानक्रियार्थफलरूपया ज्ञानं महदादिलक्षणज्ञानशक्तिः, क्रिया सूत्रादिलक्षणा क्रियाशक्तिः, अर्थाः तन्मात्रादिलक्षणाः, फलं सुखादि, एतेषां रूपतया स्वरूपतया प्रकाशकतया सत् स्थूलकार्य्यम् असत् सूक्ष्मकारणं तयोः यत् परं कारणं तद् ब्रह्म एव भाति ।

५४ । पुनश्च कथं तत् ज्ञानविषयं भवति तदेव विवृणोति आदा-

५५ । यथा हिरण्यं सुकृतं पुरस्तात्
पश्चाच्च सर्व्वस्य हिरण्मयस्य ।
तदेव मध्ये व्यवहार्य्यमाणं
नानापदेशैरहमस्य तद्वत् ॥

५६ । विज्ञानमेतत् त्रियवस्थमङ्ग
गुणत्रयं कारणकार्य्यकर्त्तृ ।
समन्वयेन व्यतिरेकतश्च
येनैव तुर्य्येण तदेव सत्यम् ॥११।२८।१९।२० ।

विति। आदौ अन्ते च मध्ये च यत् सृज्यात् कार्य्यात् सृज्यं कार्य्यान्तरम् अन्वियात् अनुगच्छेत्, तत्प्रतिसंक्रमे तेषां प्रलये च यत् शिष्येत अवशिष्येत, तत् सत् ब्रह्म, नित्यकालस्थायि सर्व्वसत्ताकारणम् ।

५५ । सर्व्वकारणतया ब्रह्म ग्रहीतव्यमित्युक्तम्, सुतरां कारणमेव तदिति तस्य साक्षाज्ज्ञानमित्याह यथेति । सुकृतं कुण्डलादिरूपेण निर्म्मितं हिरण्यं यथा हिरण्मयस्य सर्व्वस्य पुरस्तात् कुण्डलादनिर्म्माणात् प्राक् हिरण्यमेव, पश्चात् कुण्डलादिरूपविनाशादर्व्वाक् हिरण्यमेव, मध्ये नानापदेशैः कुण्डलादिनानाभिधानैः व्यवहार्य्यमाणम् अपि तदेव हिरण्यमेव, अस्य विश्वस्य कारणभूतम् अहम् आत्मनामात्मा तद्वत्, आद्यन्तमध्ये एकएवेति शेषः ।

५६ । विज्ञानमिति । अङ्ग हे उद्धव, विज्ञानं मनएव त्रियवस्थं त्र्यवस्थम् त्रिविधावस्थापन्नम् । किन्तत् ? गुणत्रयं सत्त्वं रजस्तम इति त्रयोगुणाः यत्र तत्; कारणकार्य्यकर्त्तृ अध्यात्ममधिभूतमधिदैवमिति त्र्यवस्थम् । एतदवस्थात्रयातीतेन येन एव तुर्य्येण ज्ञानमात्रेण चतुर्थेन समन्वयेन उत्पत्तिः, व्यतिरेकेण प्रलयः, प्रलयेऽपि यदस्ति तत् एव सत्यम्, कारणरूपिब्रह्मेतिशेषः ।

५७। अविद्यमानोऽप्यवभासते यो
वैकारिको राजससर्ग एषः ।
ब्रह्म स्वयंज्योतिरतो विभाति
ब्रह्मेन्द्रियार्थात्मविकारचित्रम् ॥११।२८।२२ ।

५८। यथा जलधरा व्योम्नि भवन्ति न भवन्ति च ।
ब्रह्मणीदं तथा विश्वमवयव्युदयाप्ययात् ॥

५९। सत्यं ह्यवयवः प्रोक्तः सर्व्वावयविनामिह ।
विनार्थेन प्रतीयेरन् पटस्येवाङ्ग तन्तवः ॥१२।४।२५।२६

५७। अविद्यमान इति। एष वैकारिकः विकारसम्भूतः राजससर्गः क्रियात्मकरजोगुणोत्पन्नसृष्टिः अविद्यमानोऽपि स्वयमसत्त्वोऽपि अवभासते ब्रह्मकार्य्यत्वेन प्रकाशते। ब्रह्म तु स्वयंज्योतिः स्वपरप्रकाशकम्, अतः इन्द्रियार्थात्मविकारचित्रं इन्द्रियाणि च अर्थाः तन्मात्राणि च, आत्मा मनश्च, विकाराः पञ्चभूतानि च एवं चित्रं विचित्रतया प्रतिभातं ब्रह्म विभाति प्रतीयते। अविद्यमान इत्युक्त्वा परमार्थसत्यत्वं जगतोऽपनीय ब्रह्माधिष्ठानतया तस्यापेक्षिकसत्यत्वं संस्थाप्य ब्रह्मण्येव सृष्टिवैचित्र्येण वैचित्र्यं प्रकाशत इत्यभिदधाति।

५८। कार्य्यकारणयोरनन्यत्वाभिधानेन ब्रह्मणि विकारारोपणसम्भावनां पश्यंस्तां निराकरोति यथेति। यथा व्योम्नि आकाशे जलधराः धूमज्योतिःसलिलमरुतां सन्निपाताः तेषामवयविनाम् उदयात् भवन्ति दृश्यन्ते, तेषाम् अप्ययात् अन्तर्द्धानात् न भवन्ति न दृश्यन्ते, तथा इदम् अवयवि क्षित्यादिमयं विश्वं तेषां क्षित्याद्यवयविनामुदयात् ब्रह्मणि भवन्ति दृश्यन्ते अप्ययात् अन्तर्द्धानात् न भवन्ति न दृश्यन्ते।

५९। सम्प्रति तदपरोक्षदर्शनं प्रवक्तुमुपक्रमते सत्यमिति। इह सर्व्वावयविनां क्षित्यादीनां सत्यम् अवयवः कारणं प्रोक्तः। अर्थेन अव-

६० । घनो यदार्कप्रभवो विदीर्य्यते
चक्षुः स्वरूपं रविमीक्षते तदा ।
यदाह्यहङ्कारउपाधिरात्मनो
जिज्ञासया नश्यति तर्ह्यनुस्मरेत् ॥१२।४।३२ ।

६१ । अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम् ।
एवं समीक्ष्य चात्मानमात्मन्याधाय निष्कले ॥
दशन्तं तक्षकं पादे लेलिहानं विषाननैः ।
न द्रक्ष्यसि शरीरञ्च विश्वञ्च पृथगात्मनः ॥
१२।५।११।१२ ।

यविना विना, अङ्ग हे राजन्, अवयवाः पृथक् प्रतीयेरन्, यथा पटस्य अवयविनः तन्तवः अवयवाः पृथक् प्रतीयन्ते । पटापायेऽपि तन्तवो यथा स्वतन्त्राः प्रतीयन्ते, तथा चित्यादीनां तिरोधानेऽपि तत् कारणं सत्यं प्रतीतिविषयं भवतीति समुदायार्थः ।

६० । घनइति । अर्कप्रभवः सूर्य्याकृष्टवाष्पैः समुत्पन्नः मेघः यदा विदीर्य्यते द्विधा भवति, तदा स्वरूपं स्वेन रूपेण वर्त्तमानं रविम् ईक्षते पश्यति ; एवं यदा आत्मनः जीवात्मनः स्वाज्ञानेनोत्पन्नः अहङ्कारः उपाधिः जिज्ञासया विचारेण नश्यति तिरोहितो भवति, तर्हि तदा स्वरूपं ब्रह्मणा स्वरूपत ऐक्यम् अनुस्मरेत् स्मरणविषयं कुर्य्यात् तत् पश्यतीति भावः ।

६१ । उपसंहारे परीक्षिते यदुपदिष्टं तेन पुनरैकात्म्यसाधनमुपदिशति अहमिति । अहं परं धाम ब्रह्म, ब्रह्म परमं पदम् अहम् । धाम—ज्ञानम्, पदं—प्रकाशभूमिः । योऽहं स ब्रह्मैव, यद्ब्रह्म तदहमेव, एवं समीक्षन् ईक्षां कुर्व्वन् निष्कले निरुपाधौ आत्मनि आत्मनामात्मनि ब्रह्मणि आत्मानम् आधाय दशन्तं विषाननैः पादे लेलिहानं तक्षकं,

शरीरञ्च विश्वञ्च आत्मनः पृथक् न द्रक्ष्यसि । 'अहं ब्रह्मेति भावनया जीवस्य शोकनिवृत्तिः ब्रह्माहमिति भावनया च ब्रह्मणः पारोक्ष्य-निवृत्तिः'—इति श्रीमत्स्वामी । वस्तुतस्तु 'एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति' इति न्यायात् अहं ब्रह्मेति भावनया जीवस्य ब्रह्मतादात्म्ये सिद्धेऽपि ब्रह्मणस्ततः स्वतन्त्रत्वात् भयहेतो र्न निवृत्तिः, अतो ब्रह्माहमितिभावनया ब्रह्मणोऽपि जीवतादात्म्ये सिद्धे, सर्व्वथा भेदबुद्धेस्तिरोधानात् भयकारणस्य च निवृत्तिः । एवं जीवतादात्म्ये ब्रह्मणो निकर्षः प्रसज्यते । एतदुपलक्ष्य श्रीमच्छङ्कर आह—'नैष दोषः, ऐकात्म्यस्यैवानेन प्रकारेणानुचिन्त्यमानत्वात्' इति । तस्याय-मभिप्रायः—एवं निकर्षे प्रतीयमानेऽपि निकर्षोत्कर्षयोरत्रानभिप्रेतत्वात् केवलैकत्वफलस्याभिलिप्सितार्थत्वात् 'अहं ब्रह्म, ब्रह्माहम्' 'त्वमहमस्मि अहञ्च त्वमसि' इत्येवंरूपव्यतिहारेणैकत्वसिद्धत्वात् स एव व्यतिहार ऐकात्म्यसाधने निःशङ्कमनुसर्त्तव्यः । 'रागात् भयाच्च गाढ़ावेशे सति सोऽहमिति भावोऽभ्युदेति' इति वैष्णवसिद्धान्तः । स्वाभाविकप्रगाढ़ा-भिनिवेशाद्यदुदेति, तत्साधनार्थं व्यतिहारचिन्तनमुपदिशति शास्त्रम् ।

ब्रह्मनिर्द्देशपरेऽस्मिन्नध्याये निवृत्तियोगोपयोगिसर्व्वातीतवस्तूपदेशः प्रधानः, तत्सिद्धौ यद्यद्वक्तव्यं तदिहोक्तम् ।

इति श्रीसात्त्वतसंहितोत्थायां व्याख्यानसहितायां
श्रीमद्गीताप्रपूर्त्तौ ब्रह्मनिर्द्देशो नाम
द्वितीयोऽध्यायः ।

# तृतीयोऽध्यायः।

## परमात्मनिर्द्देशः।

१। भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः।
क्षीयन्ते चास्य कर्म्माणि दृष्टएवात्मनीश्वरे ॥१।२।२१।

१। वेदवेदान्तप्रतिपाद्यब्रह्मवस्तुनिरूपणानन्तरं तस्यैव परमात्माख्यया प्रतिहृदयाधिष्ठातृत्वप्रेरयितृत्वप्रदर्शनपरोऽयमध्याय आरभ्यते। तत्रादौ

'ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति।
भ्रामयन् सर्व्वभूतानि यन्त्रारूढानि मायया॥
तमेव शरणं गच्छ सर्व्वभावेन भारत।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥ (गी १८।६१।६२)।

इत्यत्र मुक्तये प्रेरयितुरीश्वरस्य शरणापन्नत्वं यदभिहितं तस्य फलं 'भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते' (१।२।२०) इति साक्षात्कारमुक्त्वा तत्साक्षात्कारस्यानुषङ्गिकफलमभिदधाति भिद्यत इति। आत्मनि मनसि ईश्वरे प्रेरयितरि दृष्टे साक्षात्कृते सति हृदयग्रन्थिः अहङ्कारः भिद्यते विशीर्य्यते,—साक्षात्कारात् प्रागहमेव सर्व्वं करोमिति साधनादिष्वप्यभिमानोऽनुभूयते। तस्मिन्नीश्वरे दृष्टे पुनः तस्य प्रेरणयैव सर्व्वं सम्पन्नं न तु निजकर्त्तृत्वेनेति विज्ञानात् सोऽन्तर्द्धत्ते ;—सर्व्वसंशयाः—किमहं तस्य प्रसादं लप्स्ये, किमियं शरणापन्नता साक्षात्कारेण पर्य्यवस्येत इत्याद्याः संशयाः छिद्यन्ते छिन्ना भवन्ति ; अस्य साधकस्य कर्म्माणि वासनानुस्यूतानि क्षीयन्ते क्षीणानि भवन्ति, न सर्व्वथा तिरोभवन्ति भजनवासनाया विद्यमानत्वात्। श्रीमद्गीताया-

२। सवा इदं विश्वममोघलीलः
सृजत्यवत्यत्ति न सज्जतेऽस्मिन्।
भूतेषु चान्तर्हित आत्मतन्त्रः
षाड्वर्गिकं जिघ्रति षड्गुणेशः॥

३। न चास्य कश्चिन्निपुणेन धातु-
रवैति जन्तुः कुमनीषऊती:।
नामानि रूपाणि मनोवचोभिः
सन्तन्वतो नटचर्य्यामिवाज्ञः॥१।३।३६।३७।

मीश्वरशब्दस्यान्तर्यामिवाचकत्वात् परमात्मतत्त्वे तच्छब्दस्यात्र ग्रहणम्। एवं सर्व्वत्र।

२। सोऽन्तर्यामीश्वरः सर्व्वभूतानि नियमयन्नपि न तेषु सज्जत इत्याह सइति। अमोघलीलः अनिष्फललीलः कल्याणप्रवर्त्तनाय क्रीड़नशीलः षड्गुणेशः षड़िन्द्रियनियन्ता आत्मतन्त्रः आत्मेच्छानुवर्त्ती सन् इदं विश्वं सृजति, अवति रक्षति, अत्ति संहरते; भूतेषु च अन्तर्हितः प्रच्छन्नः षाड्वर्गिकम् इन्द्रियषड्वर्गविषयं जिघ्रति दूरादेव गन्धवत् गृह्णाति, न अस्मिन् सज्जते आसक्तः भवति।

३। अस्य नियन्तुर्निरवच्छिन्नक्रियया नामरूपादिकं सर्व्वं तत्तद्रूपेण प्रतिभाति, न ह्येतत् तर्ककुशलोऽपि जानाति, अतोऽयं तज्ज्ञानविरहितस्य बुद्धेरगोचर इत्याह नेति। मनोवचोभिः नामानि रूपाणि मनसा रूपाणि वचसा नामानि नटचर्य्यामिव सन्तन्वतः सम्यग्विस्तारयतः अस्य धातुः नियन्तुः ऊतीः लीलाः न कश्चित् कुमनीषः कुबुद्धिः अज्ञः ज्ञानहीनः निपुणेन तर्कादिकौशलेन अवैति जानाति। जीवात्मप्रवेशेन जगत् भिन्नभिन्ननामरूपेण यत् प्रसिद्धं तत् परमात्मप्रेरणयेति 'नामानि रूपाणि मनोवचोभिः सन्तन्वतः' इत्युक्तम्।

४ । तदिदं भगवान् राजन्नेक आत्मात्मनां स्वदृक् ।
अन्तरोऽनन्तरोभाति पश्य तं माययोरुधा ॥१।१३।४६

५ । स सर्व्वधीवृत्त्यनुभूतसर्व्व
आत्मा यथा स्वप्नजनेक्षितैकः ।
तं सत्यमानन्दनिधिं भजेत
नान्यत्र सज्जेद्यत आत्मपातः ॥२।१।३९ ।

४ । यतोहि नियन्तुर्निरवच्छिन्नक्रियैव जगद्रूपेण प्रतिभाति, ततो जगदिदं न ततो भिन्नं कर्त्तुस्तत्क्रियायाश्चाभिन्नत्वात्, अतआह तदिति । आत्मनाम् आत्मा नियन्ता, स्वदृक् आत्मातिरिक्तान्यवस्त्वभावात् जगद्दर्शनमात्मदर्शनमेव यस्य स एकः भगवान् तत् इदं जगत् । कथम् ? अन्तरः प्रत्यक् अनन्तरः पराक् भाति प्रतीयते स स्वयमेक एवेति शेषः । कथमेवं सम्भवति ? हे राजन् युधिष्ठिर, तं स्वसाक्षिणं मायया सर्ज्जनशक्त्या उरुधा बहुधा पश्य । आत्मनामात्मा स जीवसन्निधौ स्वप्रज्ञाशक्त्या स्वज्ञेयनामरूपमयं जगत् व्याकरोति । अतस्तज्ज्ञानशक्त्यनतिरिक्तत्वात् जगत्ततोऽभिन्नम् ।

५ । जगतस्ततोऽभिन्नत्वे विराडुपासनैव सिद्धा भवति । तादृगुपासने वहिर्विषयासक्त्या पतनमेवावश्यम्भावि । अतस्तन्निवारणाय साक्षात्परमात्मोपासनमुपदिशति स इति । आत्मा स्वप्नद्रष्टा जीवः एकः एव यथा स्वप्नजनेक्षिता स्वप्नगतानां जनानाम् ईक्षिता द्रष्टा, तथा सर्व्वधीवृत्त्यनुभूतसर्व्वः सर्व्वाभिः धीवृत्तिभिः अनुभूतं सर्व्वं विराड्गतं येन तथाभूतः स विराड्धारणासिद्धयोगी 'सर्व्वेषां धीवृत्तिभिरनुभूतं सर्व्वं येन स एकएव सर्व्वान्तरात्मा तमिति'—श्रीमत्स्वामी—तं सत्यम् आनन्दनिधिं विराडन्तर्यामिणं भजेत, न अन्यत्र विराड्गतदेहादौ सज्जेत, यतः सज्जनात् आत्मपातः संसारित्वं भवति ।

६ । भगवान् सर्व्वभूतेषु लक्षितः स्वात्मना हरिः ।
दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकैः ॥२।२।३५

७ । प्रचोदिता येन पुरा सरस्वती
वितन्वताऽजस्य सतीं स्मृतिं हृदि ।
स्वलक्षणा प्रादुरभूत् किलास्यतः
स मे ऋषीणामृषभः प्रसीदताम् ॥

६ । देहादौ प्रच्छन्नं तमीश्वरं कथं पश्यन्नुपास्ते साधकः तदाह भगवानिति। स्वात्मना स्वस्य जीवस्य अन्तर्यामितया, दृश्यैः, बुद्ध्यादिभिः, लक्षणैः स्वरूपैः, अनुमापकैः—न हि चेतनं द्रष्टारं विना दृश्यानां जड़ानां बुद्ध्यादीनां दर्शनं सम्भवतीति अनुमापकैः लक्षणैः—सर्व्वभूतेषु द्रष्टा अन्तःसाक्षितयावस्थितः, भगवान् हरिः साधकचित्तहरणः लक्षितः दृष्टः। प्रथमतः जीवान्तर्यामितया स साक्षादनुभवगोचरो भवति, एतदेव मुख्यं दर्शनम्। तदनन्तरं तद्द्वारेणैव दृश्यैः जड़ैः, तेषां स्वात्मकर्त्तृत्वाभावात् तच्छक्त्यैव तेषां जन्मस्थित्यादिविचारेण। तदनन्तरं बुद्ध्यादिभिः, तत्प्रेरणया तेषां क्रियाकारित्वात्। तदनन्तरं लक्षणैः स्वप्रकाशान्तर्यामिलक्षणैः। तदनन्तरम् अनुमापकैः लक्षणैः नैतत् सर्व्वं कर्त्तारं विनोत्पद्यते, अतएव स एव कर्त्तेत्युपपत्त्या।

७। एवं प्रेरयितृत्वेनास्य मुख्यं दर्शनमुद्दिश्य तदेव स्पष्टं दर्शयति पौराणिकवार्त्तया श्रीमच्छुकवाक्येन प्रचोदितेति। अजस्य पितामहस्य हृदि पुरा जीवसृष्ट्यादौ सतीं सृष्टिविषयां स्मृतिं वितन्वता विस्तारयता येन अन्तर्यामिणा प्रचोदिता सती सरस्वती वाक् तस्य आस्यतः स्वलक्षणा शिक्षादियुक्ता प्रादुरभूत् प्रादुर्भूता प्रकाशिता आसीत्। स ऋषीणां ज्ञानप्रदानाम् ऋषभः श्रेष्ठः प्रसीदतां प्रसन्नो भवतु। किल इति ऐतिह्ये।

८। भूतैर्महद्भिर्य इमा पुरोविभु-
र्निर्म्माय शेते यदमूषु पूरुषः।
भुङ्क्ते गुणान् षोड़श षोड़शात्मकः
सोऽलंकृषीष्टाखिलविद् वचांसि मे॥

२।४।२२।२३

९। यदा तु सर्व्वभूतेषु दारुष्वग्निमिव स्थितम्।
प्रतिचक्षीत मां लोको जह्यात्तर्ह्येव कश्मलम्॥
१०। यदा रहितमात्मानं भूतेन्द्रियगुणाशयैः।
स्वरूपेण मयोपेतं पश्यन् स्वाराज्यमृच्छति॥

३।९।३२।३३

८। पुरा चेत् पितामहस्तेनान्तर्यामिणा प्रेरितो वेदप्रवक्ताऽभवत्, किन्तेनास्माकं यद्यधुनापि तथास्माकं हृदये तत्प्रेरणया वेदप्रादुर्भावो न भवेदित्यपेक्षयाह शुकवाक्यैः भूतैरिति। महद्भिः भूतैः यः विभुः इमाः पुरः शरीराणि निर्म्माय अमूषु अन्तर्यामितया शेते, यत् यस्मात् पुरुषः षोड़शात्मा षोड़शानाम् एकादशेन्द्रियपञ्चभूतरूपाणाम् आत्मा चेतयिता, अतएव षोड़शगुणान् तान् भुङ्क्ते प्रकाशयति पालयति वा; सोऽखिलवित् सर्व्वतत्त्वानां ज्ञापयिता मे मम शुकस्य वचांसि अलं-कृषीष्ट अलंकरोतु, भ्रमप्रमादशून्यसत्यज्ञानादिप्रकाशनेन।

९। सर्व्वत्र तद्दर्शनेन मोहनिवृत्तिर्भवतीत्याहान्तर्यामिवाक्येन यदेति। दारुषु अग्निषु इव सर्व्वभूतेषु स्थितं माम् अन्तर्यामिणं लोकः यदा प्रतिचक्षीत पश्येत तर्हि तदा एव कश्मलं मोहं जह्यात् त्यजेत्।

१०। भूतेन्द्रियाद्यावरणवशाज्जीवस्य स्वरूपतिरोधानं भवति तेन च परात्मना तस्य महत् पार्थक्यं घटते। यदा तदावरणं तिरोधत्ते

११ । ज्ञातोऽहं भवता त्वद्य दुर्व्विज्ञेयोऽपि देहिनाम् ।
यन्मां त्वं मन्यसेऽयुक्तं भूतेन्द्रियगुणात्मभिः ॥३।६।३६

१२ । यच्चकर्थाङ्ग मत्स्तोत्रं मत्कथाभ्युदयाङ्कितम् ।
यद्वा तपसि ते निष्ठा सएष मदनुग्रहः ॥३।६।३८

१३ । मामात्मानं स्वयंज्योतिः सर्व्वभूतगुहाशयम् ।
आत्मन्येवात्मना वीक्ष्य विशोकोऽभयमृच्छसि ॥
३।२४।३६ ।

परात्मना स्वरूपैक्यात् तेनैक्यं पश्यतस्तस्य स्वस्वरूपे स्थितिरूपोमोक्षो निष्पद्यते । एतदेवाह यदेति । भूतेन्द्रियगुणाशयैः रहितम् आत्मानं यदा स्वरूपेण आत्मभूतेन मया उपेतम् एकीभूतं पश्यन् भवति, तदा स्वाराज्यं स्वरूपावस्थानरूपं मोक्षम् ऋच्छति प्राप्नोति ।

११ । न केवलं भूतेन्द्रियादिविरहितजीवात्मस्वरूपदर्शनेन कृतार्थता किन्तर्हि तादृग्भावेन परमात्मदर्शनमपरोक्षज्ञानं तस्येत्याहान्तर्यामिवाक्येन ज्ञातइति । देहिनां दुर्व्विज्ञेयः अपि भवता तु अद्य अहम् अन्तर्यामी ज्ञातः विदितः, यत् यस्मात् मां त्वं भूतेन्द्रियगुणात्मभिः अयुक्तं मन्यसे ।

१२ । भगवत्स्तोत्रवन्दनादिकं सर्व्वं तत्प्रेरणोद्भूततयान्तर्याम्यनुग्रहेण साधकेभूदितीत्याह यदिति । अङ्ग हे ब्रह्मन्, मत्कथाभ्युदयाङ्कितं मदीयगुणवर्णनपरिचिह्नितं यत् स्तोत्रं चकर्थ कृतवानसि यत् वा ते तव तपसि निष्ठा, स एष सर्व्वोऽपि मदनुग्रहः ।

१३ । तेन च योगिनाभयलाभ इत्याह मामिति । स्वयंज्योतिः स्वप्रकाशं सर्व्वभूतगुहाशयं सर्व्वभूतहृदयाधिष्ठातारं माम् आत्मानं परमात्मानं आत्मनि स्वस्मिन् आत्मना मनसा वीक्ष्य निपुणतया दृष्ट्वा विशोकः सन् अभयं मोक्षम् ऋच्छसि प्राप्नोषि ।

१४। योऽन्तःप्रविश्य मम वाचमिमां प्रसुप्तां
संजीवयत्यखिलशक्तिधरः स्वधाम्ना।
अन्यांश्च हस्तचरणश्रवणत्वगादीन्
प्राणान्नमोभगवते पुरुषाय तुभ्यम् ॥४।८।६

१५। सृष्टं स्वशक्त्येदमनुप्रविष्ट-
श्चतुर्व्विधं पुरमात्मांशकेन।
अथो विदुस्तं पुरुषं सन्तमन्त-
र्भुङ्क्ते हृषीकैर्मधु सारघं यः ॥४।२४।६४

१६। यस्य स्वरूपं कवयो विपश्चितो
गुणेषु दारुष्विव जातवेदसम्।
मथ्नन्ति मथ्ना मनसा दिदृक्षवो
गूढं क्रियार्थैर्नम ईरितात्मने ॥५।१८।३६

१४। सर्व्वेन्द्रियाणि प्राणाश्च येन जीवन्ति येन च वागभ्युद्यते तं सर्व्वान्तर्यामिणं स्तौति नमस्करोति ध्रुववाक्येन यइति। यः मे मम ध्रुवस्य अन्तः हृदि प्रविश्य इमां प्रसुप्तां लीनां वाचम्, अन्यान् हस्त-चरणश्रवणत्वगादीन् प्राणान् च स्वधाम्ना चिच्छक्त्या संजीवयति चेतन-वत् क्रियायां प्रयोजयति, तस्मै तुभ्यं भगवते पुरुषाय अन्तर्यामिणे नमः।

१५। स्वशक्त्युद्भूतेषु सर्व्वेषु प्राणिषु जीवात्मना सोऽयं प्रविष्टइत्याह सृष्टमिति। स्वशक्त्या सृष्टम् इदं जरायुजादिभेदेन चतुर्व्विधं पुरं शरीरं आत्मांशकेन स्वांशेन जीवेन अनुप्रविष्टः, अथो इति हेतोः अन्तः संतं तं पुरुषं जीवं विदुः ; यः सारघं सरघाः मधुमक्षिकाः ताभिः सृष्टं मधु इव हृषीकैः इन्द्रियैः मधु क्षुद्रसुखं भुङ्क्ते।

१६। 'ब्रह्मस्वभावः प्रपञ्चः' इतिन्यायात् प्रपञ्चेषु ब्रह्मस्वरूपं

१७ । करोति विश्वस्थितिसंयमोदयं
यथेप्सितं नेप्सितमीक्षितुर्गुणैः ।
माया यथाऽयो भ्रमते तदाश्रयं
ग्राव्णो नमस्ते गुणकर्म्मसाक्षिणे ॥५।१८।३८

१८ । अन्तःप्रविश्य भूतानि यो विभर्त्त्यात्मकेतुभिः ।
अन्तर्यामीश्वरः साक्षात् पातु नो यद्वशे स्फुटम् ॥
५।२०।२९ ।

सत्यज्ञानादिकं निगूढ़ं तिष्ठति। प्रपञ्चस्वरूपादिचिन्तनानुध्यानसाधनानुष्ठानेन तत् प्रत्यक्षं भवति साधकानां सन्निधावित्याह यस्येति। दारुषु जातवेदसम् अग्निम् इव गुणेषु देहेन्द्रियादिषु गूढ़ं यस्य परमात्मनः स्वरूपं दिदृक्षवः द्रष्टुमिच्छवः कवयः विद्वांसः विपश्चिताः निपुणाः मथ्ना मथनसाधनेन मनसा क्रियार्थैः क्रियाभिः तत्फलैश्च मथ्नन्ति—

घृतमिव पयसि निगूढं घटे घटे वसति विज्ञानम् ।
सततं मन्थयितव्य मनसा मन्थानदण्डेन ॥

इत्युक्तरीत्या—ततः ईरितात्मने प्रकटितात्मस्वरूपाय तस्मै नमः ।

१७। परमात्मनः साक्षिस्वरूपत्वं विवृणोति करोतीति। ग्राव्णः अयस्कान्तात् निमित्तात् अयः लोहं तदाश्रयं तदभिमुखं सत् यथा भ्रमते, तथा माया सर्ज्जनशक्तिः गुणैः सृज्यशक्तिभिः यस्य ईक्षितुः द्रष्टुः नेप्सितं स्वार्थायानीप्सितम् ईप्सितं जीवार्थमभिलषितं विश्वस्थितिसंयमोदयं करोति, तस्मै तुभ्यं गुणकर्म्मसाक्षिणे गुणानां सृज्यशक्तीनां कर्म्मणां तच्चेष्टानां साक्षिणे नमः ।

१८। न केवलमयं साक्षी किन्तर्हि प्रतिपालकइत्याह अन्तरिति। यः अन्तर्यामी ईश्वरः अन्तःप्रविश्य आत्मकेतुभिः प्राणादिवृत्तिभिः भूतानि बिभर्त्ति पालयति, स नः अस्मान् साक्षात् साक्षात्सम्बन्धेन पातु रक्षतु, स्फुटं व्यक्तं वयं यद्वशे ।

१९। स एव हि पुनः सर्व्ववस्तुनि वस्तुस्वरूपः सर्व्वेश्वरः सकलजगत्कारणकारणभूतः सर्व्वप्रत्यगात्मत्वात् सर्व्वगुणाभासोपलच्चित एकएव पर्य्यवशेषितः ।६।९।३८।

२०। सत्त्वं रजस्तमइति प्रकृतेर्नात्मनोगुणाः।
तत्र साच्चिणमात्मानं यो वेद न स बध्यते ॥६।१२।१५

२१। एतावानेव मनुजैर्योगनैपुणबुद्धिभिः।
स्वार्थः सर्व्वात्मना ज्ञेयो यत्परात्मैकदर्शनम् ॥६।१६।६३

१९। तस्य सर्व्ववस्तुस्वरूपत्वं विवृणोति स इति। स हि सर्व्वेश्वरः सर्व्वनियन्ता सर्व्ववस्तुनि वस्तुस्वरूपः, सकलजगत्कारणकारणभूतः सर्व्वेषां जगत्कारणानां स्वज्यशक्तीनां कारणभूतः सर्व्वकारणकारणः, सर्व्वप्रत्यगात्मकत्वात् सर्व्वेषां प्रकाशकपरात्मत्वात् सर्व्वगुणाभासोपलच्चितः सर्व्वेषां गुणानां स्वज्यशक्तीनाम् आभासैः प्रकाशैः उपलच्चितः, एक एव पर्य्यवशेषितः, प्रकाश्यानां तदन्तर्भूतत्वात्।

२०। न खलु स्वज्यशक्तीनामावरकत्वं, तासां तस्य सर्ज्जनशक्तेरात्मभूतत्वात्, तस्य च तासां साच्चित्वादित्याह सत्त्वमिति। सत्त्वं रजः तमः इति गुणाः स्वज्यशक्तयः न आत्मनः आत्मनामात्मनः, किन्तर्हि प्रकृतेः। तत्र गुणेषु साच्चिणम् आत्मानम् आत्मनामात्मानं यो वेद न स बध्यते हर्षादिभिः।

२१। परात्मना ज्ञानैकत्वेनैव कृतार्थतेत्याह, एतावानिति। योगनैपुणबुद्धिभिः योगे नैपुणं नैपुण्यं यस्यां सा बुद्धिः येषां तैः मनुजैः एतावान् एव स्वार्थः आत्मनः प्रयोजनं ज्ञेयः यत् सर्व्वात्मना परात्मैकदर्शनं परात्मना परमात्मना एकं दर्शनं ज्ञानं ज्ञानैक्यमिति यावत्—'परस्य श्रेष्ठस्यात्मनः परमात्मनः एव एकं दर्शनं न तु विषयस्य'—श्रीमद्विश्वनाथः। जीवस्यात्मज्ञानं यदा योगपरिशुद्धबुद्धितया परस्यानन्त-

२२। यथानलो दारुषु भिन्न ईयते
यथानिलो देहगतः पृथक् स्थितः।
यथा नभः सर्व्वगतं न सज्जते
तथा पुमान् सर्व्वगुणाश्रयः परः॥७।२।४३

२३। गुणेषु गुणसाम्ये च गुणव्यतिकरे तथा।
एकएवपरोह्यात्मा भगवानीश्वरोऽव्ययः॥७।६।२१

२४। कोऽतिप्रयासोऽसुरबालका हरे-
रुपासने स्वे हृदि छिद्रवत् सतः।

ज्ञानेनैक्य' भजते, तदा न तस्य जातु ज्ञानाभावो जायते, सर्व्वतत्त्वदर्श-नेन कृतार्थता च।

२२। देहादिष्वपृथक्त्वेन तिष्ठन्नपि तेभ्यः स स्वतन्त्र इति दर्श-यति दृष्टान्तैः यथेति। यथा अनलः अग्निः दारुषु काष्ठेषु भिन्नः पृथक् ईयते प्रतीयते दाहकप्रकाशकत्वेन; यथा अनिलः वायुः देहगतोऽपि पृथक् स्थितः मुखनासादिभ्यो विनिःसरणात्, यथा सर्व्वगतं नभः आकाशं न सज्जते तत्तद्वस्तुभिर्न सम्पृक्तं भवति, तथा सर्व्वगुणाश्रयः सर्व्वेषां गुणानां सृज्यशक्तीनाम् आश्रयः परः पुमान् परमात्मा पृथक् एवेत्यर्थः।

२३। सृज्यशक्तीनां विविधप्रकाशैः प्रकाशमानः स न तासां विविधत्वेन विविधः किन्तर्ह्येकएवेत्याह गुणेष्विति। गुणेषु सृज्यशक्तिषु गुणसाम्ये सृज्यशक्तीनां साम्ये च सर्ज्जनशक्त्याभिन्नभावेन स्थितौ, गुणव्य-तिकरे सृष्ट्युपादानत्वेन सृज्यशक्तीनां परस्परानुप्रवेशे भगवान् ईश्वरः सर्व्वनियन्ता एकः एव हि परः आत्मा परमात्मा, नियन्तृत्वात् न तैस्तस्य मिश्रत्वमिति भावः।

२४। यदि सर्व्वेषु भावेष्वनुप्रविष्टोऽपि न तैः सङ्गः किन्तर्हि

स्वस्यात्मनः सख्युरशेषदेहिनां
सामान्यतः किं विषयोपपादनैः ॥७।७।३८।

२५। यस्मिन् यतो यर्हि येन च यस्य यस्मा-
द्यस्मै यथा यदुत यस्त्वपरः परो वा।
भावः करोति विकरोति पृथक्स्वभावः
संचोदितस्तदखिलं भवतः स्वरूपम् ॥७।९।२०।

नियतं स्वतन्त्रत्वमेव तस्य, तदा तन्मननध्यानानुचिन्तनादिकं न पुनः प्रयाससाध्यं भवितुमर्हति। तदेव वक्ति प्रह्लादवाक्येन कइति। हे असुरबालकाः, स्वे हृदि छिद्रवत् आकाशवत् अविलिप्तभावेन सतः स्थितस्य स्वस्य निजस्य आत्मनः सख्युः सुहृदः हरेः चित्त-हरणस्य उपासने मननवन्दनादौ कः अतिप्रयासः अतिप्रयत्नः, न कोऽपीति भावः। एवं प्रयासाभावेऽपि ये जनास्तद्विमुखा विषयसेव-नानुरक्ता भगवदुपासनं परिहाय धनाद्यर्थं बहुलमायासं स्वीकुर्व्वन्ति तान् धिक्करोति—अशेषदेहिनां सर्व्वेषां प्राणिनां सामान्यतः सूक-रादिसमानत्वेन विषयोपपादनैः विषयाणामुपार्ज्जनैः किम्? न किमपीत्यर्थः।

२५। तस्य सर्व्वनियन्तृत्वमाह यस्मिन्निति। यस्तु अपरः पित्रादिः परः आदिपुरुषादिः वा पृथक्स्वभावः सत्त्वादिप्रकृतिकः भावः कर्त्ता यस्मिन् अधिकरणे, यतः निमित्तात्, यर्हि यस्मिन् काले, येन करणेन, येन च हेतुकर्त्रा संचोदितः सम्यक् प्रेरितः, यस्य सम्बन्धि, यस्मात् उपा-दनात्, यस्मै सम्प्रदानाय, यथा येन प्रकारेण, यत् उत कर्म्म करोति उत्पादयति, विकरोति रूपान्तरतां नयति, अखिलं तत् भवतः स्वरूपम् 'स्वोपादानककार्य्यभूत'मिति श्रीमज्जीवः। "यस्मिन् यतो येन च यस्य यस्मै" (४५ पृ) इति पद्यमनेन सम्यग्गतार्थम्।

२६ । येन चेतयते विश्वं विश्वं चेतयते न यम् ।
यो जागर्त्ति शयानेऽस्मिन्नायं तं वेद वेद सः ॥
८।१।९ ।

२७ । नम आत्मप्रदीपाय साक्षिणे परमात्मने ।
नमो गिरां विदूराय मनसश्चेतसामपि ॥८।३।१० ।

२८ । सर्व्वेन्द्रियगुणद्रष्ट्रे सर्व्वप्रत्ययहेतवे ।
असता छाययोक्ताय सदाभासाय ते नमः ॥
८।३।१४ ।

२६ । चित्रमेतद्यत्तस्य सर्व्वनियन्तृत्वेऽपि सर्व्वं चेतयतस्तस्य ज्ञानं न सर्व्वेषामस्तीत्याह येनेति । येन चिदात्मना विश्वं चेतयते चेतनीभवति, विश्वं तु यं न चेतयते न चेतनीकरोति स्वतएव चिद्रूपत्वात् ; अस्मिन् विश्वे शयाने स्वपति यो जागर्त्ति साक्षितया वर्त्तते, अहो चित्रं नायं जनः तं वेद, स तु एनं वेद ।

२७ । एवं ज्ञानातीतत्वेऽपि तस्यात्मज्ञानप्रकाशकत्वमस्तीत्यतः ज्ञातसारेणाज्ञातसारेण वा तत् प्रेरयितृत्वं तत्साक्षित्वं नित्यसिद्धमित्याह स्तुतिवाक्येन नम इति । आत्मदीपाय आत्मनः दीपाय ज्ञानप्रकाशकाय अतः प्रकाशान्तरस्याविषयाय साक्षिणे सर्व्वसाक्षिणे अन्तःसाक्षिणे च परमात्मने जीवनियन्त्रे नमः । एवमपि गिरां वाचां मनसः च चेतसाम् अपि विदूराय अप्राप्याय नमः ।

२८ । ज्ञानप्रकाशकत्वं तस्य विवृणोति सर्व्वेति । सर्व्वेन्द्रियगुणद्रष्ट्रे सर्व्वेषाम् इन्द्रियाणां गुणाः विषयाः तेषां द्रष्ट्रे साक्षिणे, सर्व्वप्रत्ययहेतवे सर्व्वेषां प्रत्ययानां हेतवे ज्ञापकाय ; असता सूक्ष्मेण छायया निजाभासरूपेण उक्ताय सूचिताय, सदाभासाय सत्सु स्थूलेषु आभासाय महिमत्वेन प्रकाशमानाय नमः ।

२९। त्वय्यग्र आसीत्त्वयि मध्य आसीत्
त्वय्यन्त आसीदिदमात्मतन्त्रे।
त्वमादिरन्तो जगतोऽस्य मध्यं
घटस्य मृत्स्नेव परः परस्मात्॥

३०। त्वं माययात्माश्रयया स्वयेदं
निर्म्माय विश्वं तदनुप्रविष्टः।
पश्यन्ति युक्ता मनसा मनीषिणो
गुणव्यवायेऽप्यगुणं विपश्चितः॥८।६।१०।११।

३१। देवदेव जगद्व्यापिन् जगदीश जगन्मय।
सर्व्वेषामपि भावानां त्वमात्मा हेतुरीश्वरः॥८।१२।४

२९। आद्यन्तमध्येषु तस्मिन्नेव जगदासीत्, स एवास्य आदिरन्तो-मध्यश्चेत्याह त्वयीति। इदं जगत् आत्मतन्त्रे मुक्तस्वभावे त्वयि अग्रे आसीत्, त्वयि मध्ये आसीत्, त्वयि अन्ते आसीत्। यतः त्वं परस्मात् प्रधानात् स्वशक्तेः अपि परः अतः घटस्य मृत्स्ना मृत् इव अस्य जगतः त्वं आदिः अन्तः मध्यम्।

३०। जगतैवं सम्बन्धेऽपि न तस्य तदतीतत्वादात्मतन्त्रत्वं विहन्यत इत्याह त्वमिति। आत्माश्रयया स्वया मायया सर्ज्जनशक्त्या इदं विश्वं निर्म्माय त्वं तदनुप्रविष्टः। युक्ताः योगयुक्ताः मनीषिणः विवेकिनः विपश्चितः शास्त्रज्ञाः गुणव्यवाये गुणानां सृज्यशक्तीनां व्यवाये व्यतिकरे अपि त्वाम् अगुणं तत्सम्पर्करहितं पश्यन्ति।

३१। तस्य जगन्नियन्तृत्वमाह देवदेवेति। हे देवदेव, हे जग-द्व्यापिन्, हे जगदीश जगन्नियन्तः, हे जगन्मय, सर्व्वेषाम् अपि भावानां पदार्थानां त्वम् आत्मा, हेतुः कारणं, ईश्वरः नियन्ता।

३२ । उच्चावचेषु भूतेषु चरन् वायुरिवेश्वरः ।
नोच्चावचत्त्वं भजते निर्गुणत्त्वाद्धियोगुणैः ॥
८।२४।६ ।

३३ । परावरेषां भूतानामात्मा यः पुरुषः परः ।
सएवासीदिदं विश्वं कल्पान्तेऽन्यन्न किञ्चन ॥
६।१।८ ।

३४ । एवंविधं त्वां सकलात्मनामपि
स्वात्मानमात्मात्मतया विचक्षते ।
गुर्व्वर्कलब्धोपनिषत् सुचक्षुषा
ये ते तरन्तीव भवानृताम्बुधिम् ॥१०।१४।२४ ।

३२ । जगन्नियन्तु' देवतिर्य्यङ्नरादिषु विहरन्नपि न पुनः स नियन्ता विकारं भजतइत्याह उच्चेति । ईश्वरः नियन्ता उच्चावचेषु देवतिर्य्यङ्नरादिषु वायुः इव चरन् नियन्तृत्वेन विहरन् निर्गुणत्वात् गुणातीतत्वात् धियः तत्तदुपाधिभूतायाः गुणैः उच्चावचत्वस्फुरणैः उच्चावचत्वं न भजते ।

३३ । तस्य सर्व्वनियन्तृत्वं सर्व्वान्तरत्वमाह परावरेषामिति । परावरेषाम् उच्चनीचानां भूतानां यः पुरुषः परः आत्मा अन्तर्यामी कल्पान्ते स एव आसीत्, इदं विश्वम् अन्यत् किञ्चन न आसीत् ।

३४ । तस्यात्मनामात्मत्वमाह एवमिति । ये गुर्व्वर्कलब्धोपनिषत्-सुचक्षुषा गुरुरेव अर्कः सूर्य्यः तस्मात् लब्धा उपनिषत् ज्ञानं तदेव सुचक्षुः तेन त्वाम् एवंविधम् 'एकस्त्वमात्मा पुरुषः पुराणः' ( २।४१ ) इत्येवं-स्वरूपं सकलात्मनाम् अपि स्वात्मानम् आत्मात्मतया आत्मनामात्मत्वेन विचक्षते सम्यक् पश्यन्ति ; ते भवानृताम्बुधिं भवः संसार एव अनृताम्बुधिः मिथ्याभूतः समुद्रः तं तरन्ति इव ।

३५। त्वमात्मा सर्व्वभूतानामेको ज्योतिरिवैधसाम्।
गूढ़ो गुहाशयः साक्षी महापुरुष ईश्वरः ॥१०।३७।१२

३६। विविधानीह कर्म्माणि जनयन् यदवेक्षया।
ईहते यदयं सर्व्वः श्रेयो धर्म्मादिलक्षणम् ॥१०।७४।२२

३७। इन्द्रियं त्विन्द्रियाणां त्वं देवाश्च तदनुग्रहः।
अवबोधोभवान् बुद्धेर्जीवस्यानुस्मृतिः सती ॥
१०।८५।१०।

३५। तस्याखण्डत्वादिकं संगृह्याह त्वमिति। एधसां काष्ठानां ज्योतिः अग्निः इव त्वम् एकः अखण्डभावेनानुस्यूतः आत्मा, गूढ़ः तैः अदृष्टः, गुहाशयः बुद्धेः अपि अन्तरः, साक्षी द्रष्टा, महापुरुषः पुरुषः जीवः ततो महान्, ईश्वरः नियन्ता।

३६। धर्म्मस्य धर्म्मत्वं तत्प्रेरणयेत्याह विविधानीति। यदवेक्षया यत्प्रेरणया इह विविधानि कर्म्माणि जनयन् वितन्वन्, यत् यस्मात् प्रेरणावशादेव सर्व्वः जनः धर्म्मादिलक्षणं श्रेयः ईहते साधयति। केवलं शास्त्रोपदेशेनानुष्ठितं कर्म्म न श्रेयःसाधनाय भवति, किन्तर्हि परमात्म-प्रेरणयैव यद्यदनुतिष्ठति तैरेव कृतार्थता साक्षात्तदाज्ञापालनवशादिति तत्त्वम्।

३७। इन्द्रियाणां तदधिष्ठातॄणां बुद्धेर्जीवस्य च सएव विषयप्रकाशनादिशक्तिरित्याह इन्द्रियाणामिति। इन्द्रियाणां त्वम् इन्द्रियं 'चक्षुषः चक्षुः श्रोत्रस्य श्रोत्रम्' इति विषयप्रकाशनशक्तिः, देवाः शास्त्रोक्तेन्द्रि-याधिष्ठातारः तदनुग्रहः तेषाम् अनुग्रहः अधिष्ठानशक्तिः त्वम्—न तेषां स्वतन्त्रत्वं किन्तर्हि तेष्वनुग्रहस्तव प्रकटीभवतीति भावः; भवान् त्वं बुद्धेः अवबोधः अध्यवसायशक्तिः, जीवस्य सती सद्विषया अनुस्मृतिः अनुसन्धानशक्तिः त्वम् एव।

३८ । विजितहृषीकवायुभिरदान्तमनस्तुरगं
य इह यतन्ति यन्तुमतिलोलमुपायखिदः ।
व्यसनशतान्विताः समवहाय गुरोश्चरणं
वणिजइवाज सन्त्यकृतकर्णधरा जलधौ ॥
१०।८७।३३ ।

३९ । सुपर्णावेतौ सदृशौ सखायौ
यदृच्छयैतौ कृतनीड़ौ च वृक्षे ।
एकस्तयोः खादति पिप्पलान्न-
मन्योनिरन्नोऽपि बलेन भूयान् ॥

३८ । सर्व्वान्तरात्मैव जनानामुपदेष्टा ; तं सहायमकृत्वा संसार-पथे भ्राम्यमाणानां पदे पदे विपत्पातः । यद्यप्यात्मपुरुषकारेण ते मनः-संयमादौ प्रवृत्ता भवन्ति, अचिरादेव ते संसारगतिं लभन्ते । अतस्त-देवाह विजितेति । हे अज, गुरोः शास्तुः सर्व्वान्तरात्मनः चरणम् आश्रयं समवहाय परित्यज्य ये विजितहृषीकवायुभिः संयतवहिरिन्द्रिय-प्राणैः उपलक्षितः अतिलोलं निरतिशयचञ्चलम् अदान्तमनस्तुरगम् अद-मितमनोरूपाश्वं यन्तुं नियन्तुं प्रतयन्ते, ते उपायखिदः उपायेषु क्लेश-युक्ताः सन्तः—जलधौ समुद्रे अकृतकर्णधराः अस्वीकृतनाविकाः वणिजः वाणिज्यव्यवसायिनः इव—व्यसनशतान्विताः बहुविपत्समाकुलाः सन्ति भवन्ति ।

३९ । जीवात्मनः परमात्मना भेदं दर्शयति सुपर्णाविति । एतौ सुपर्णौ जीवात्मपरमात्मानौ सदृशौ चिद्रूपत्वात्, सखायौ अवियोगादैक-मत्याच्च, यदृच्छया इच्छाक्रमेण न तु पारतन्त्र्यात् वृक्षे देहे कृतनीड़ौ कृतं निकेतनं हृदयरूपं याभ्यां तौ । तयोः जीवपरमात्मनोः एकः जीवः पिप्पलान्नम् अश्वत्थरूपकर्म्मफलं खादति भक्षयति, अन्यः परमात्मा निरन्नः अभोक्ता अपि बलेन ज्ञानादिशक्त्या भूयान् अधिकः ।

४० । आत्मानमन्यञ्च स वेद विद्वा-
नपिप्पलादो न तु पिप्पलादः ।
योऽविद्यया युक् स तु नित्यबद्धो
विद्यामयो यः स तु नित्यमुक्तः ॥११।११।६।७।

४१ । योवै मद्भावमापन्न ईशितुर्वशितुः पुमान् ।
कुतश्चिन्न विहन्येत तस्य चाज्ञा यथा मम ॥
११।१५।२७।

४२ । अहमात्मान्तरो बाह्योऽनावृतः सर्व्वदेहिनाम् ।
यथा भूतानि भूतेषु बहिरन्तः स्वयन्तथा ॥
११।१५।३६ ।

४० । कथमभोक्तापि बलेनाधिकस्तत्कारणमाह आत्मानमिति । अपिप्पलादः अभोक्ता विद्वान् विद्यामयः स परमात्मा अन्यम् आत्मानं जीवं वेद, न तु पिप्पलादः जीवः तदन्यं परमात्मानं वेदेतिशेषः । यः अविद्यया युक् अज्ञानताप्रधानः जीवः स तु नित्यबद्धः, यः विद्यामयः ज्ञानमयः परमात्मा स तु नित्यमुक्तः ।

४१ । जीवात्मपरमात्मनोरेवं भेदेऽपि जीवस्य परमात्मैकभावापन्नतायां तच्छक्तेराविर्भाववशात् विघ्नैरनुपद्रुतत्वं, तज्ज्ञानावतरणात् तन्निर्देशस्य परमात्मनिर्देशत्वं भवति। अतस्तदेवाह य इति। ईशितुः सर्व्वनियन्तुः वशितुः स्वतन्त्रस्य मद्भावं मम भावं स्वभावम् आपन्नः प्राप्तः पुमान् जीवः कुतश्चित् न विहन्यते विघ्नोपद्रुतः भवेत्, तस्य च आज्ञा निर्देशः यथा मम आज्ञेति शेषः ।

४२ । अथ परमात्मनोऽसाधारणत्वं दर्शयति अहमिति । अहम् आत्मा परमात्मा आन्तरः अन्तर्यामी, अनावृतः न केनापि देहादिना आच्छादितः, अतः बाह्यः व्यापकः—अन्तर्बाह्यमुभयं व्याप्य स्थित

৪৩। অহমাত্মোদ্ধবামীষাং ভূতানাং সুহৃদীশ্বরঃ।
অহং সর্ব্বাণি ভূতানি তেষাং স্থিত্যুদ্ভবাপ্যয়ঃ॥১১।১৬।৯

৪৪। এষ স্বয়ং জ্যোতিরজোঽপ্রমেয়ো
মহানুভূতিঃ সকলানুভূতিঃ।
একোঽদ্বিতীয়ো বচসাং বিরামে
যেনেষিতা বাগসবশ্চরন্তি॥১১।২৮।৩৫।

৪৫। তদ্বৈ ভজাম্যৃতধিয়স্তবপাদমূলং
হিত্বেদমাত্মচ্ছদি চাত্মগুরোঃ পরস্য।

ইত্যর্থঃ। ভূতেষু ভূতানি মহাভূতানি যথা, তথা অহং স্বয়ং বহিঃ অন্তশ্চ ভবামি।

৪৩। প্রাকৃতিকেষ্বস্যাপ্রাকৃতিকত্বমাহ অহমিতি। হে উদ্ধব, অমীষাং ভূতানাম্ অহম্ আত্মা পরমাত্মা, সুহৃৎ স্বতো হিতকারী, ঈশ্বরঃ সর্ব্বপ্রবর্ত্তকঃ, সর্ব্বাণি ভূতানি মদৈশ্বর্য্যভূতানি অহম্; অহং তেষাং স্থিত্যুদ্ভবাপ্যয়ঃ সৃষ্টিস্থিতিলয়ঃ—মহান্ স্রষ্টৃপুরুষঃ সর্ব্বকারণ-কারণমিত্যর্থঃ।

৪৪। ভূতানামৈশ্বর্য্যত্ববশাত্তজ্জ্ঞেয়ত্বাদভিন্নত্বেঽপি তস্য নিত্য-মবিকারিত্বমিত্যাহ এষ ইতি। বচসাং বিরামে বাগতীতত্বে সতি যেন ইষিতাঃ প্রেরিতাঃ বাগসবঃ বাক্প্রাণাঃ চ চরন্তি ক্রিয়াশীলাঃ ভবন্তি, স এষ পরমাত্মা স্বয়ংজ্যোতিঃ স্বপ্রকাশঃ—স্বয়ং জ্ঞানস্বরূপত্বাৎ অন্যতো জ্ঞানসংক্রমণরূপবিকাররহিতঃ, অজঃ অন্যতঃ প্রাদুর্ভাবশূন্যঃ, অপ্রমেয়ঃ সর্ব্বপ্রমাণাতীতঃ, মহানুভূতিঃ দেশকালপরিচ্ছেদাভাবেন সর্ব্বোপলব্ধি-স্বরূপঃ; সকলানুভূতিঃ তদ্বিজ্ঞানাৎ সর্ব্ববিজ্ঞানমতঃ সর্ব্বোপলব্ধি-রূপঃ, একঃ অদ্বিতীয়ঃ বিকারহেতোরন্যস্যাভাবাৎ।

৪৫। পরমাত্মৈব জীবস্য গুরুঃ, স এব তস্যারাধ্য ইতি ব্যক্ততর-

देहाद्यपार्थमसदन्त्यमभिज्ञमात्रं
विन्देत ते तर्हि सर्व्वमनीषितार्थम् ॥१२।८।४४

४६ । यं वै न वेद वितथाक्षपथैर्भ्रमद्धीः
सन्तं स्वखेष्वसुषु हृद्यपि दृक्पथेषु ।
तन्माययावृतमतिः सउएव साक्षा-
दाद्यस्व तेऽखिलगुरोरुपसाद्य वेदम् ॥

४७ । यद्दर्शनं निगम आत्मरहःप्रकाशं
मुह्यन्ति यत्र कवयोऽजपरा यतन्तः ।

वाचाभिदधाति तदिति । तत् तस्मात् 'नान्यं तवांघ्र्युपनयादपवर्गमूर्त्तेः क्षेमं जनस्य परितोभिय ईश विद्मः' (१२।८।४३) इति कारणात् इदम् आत्मच्छदि स्वात्मावरकं, अपार्थं निष्फलं, असत् तुच्छं, अन्त्यं नश्वरम्, अभिज्ञमात्रम् अभिज्ञानमात्रं निदर्शनमात्रं—परमात्मज्ञानज्ञेयद्योतन-रूपत्वात्—देहादि हित्वा परित्यज्य परस्य परमस्य आत्मगुरोः ऋत-धियः सत्यज्ञानस्वरूपस्य तव पादमूलं भजामि। यदि त्वां भजति जनः तर्हि ते त्वत्त एव सर्व्वमनीषितार्थं सर्व्वमभीष्टमर्थं विन्देत लभेत ।

४६ । परमगुरोर्भजनेन दृक्शुद्धिर्जायतेऽतस्तत्परायणे तज्ज्ञान-मवतरति, तेन च ज्ञानेन स तं जानातीत्याह यमिति । वितथाक्षपथैः कपटेन्द्रियमार्गैः भ्रमद्धीः विक्षिप्तबुद्धिः पुमान् तन्मायावृतमतिः तस्य तव मायया सर्ज्जनशक्त्या आवृतमतिः तद्वैचित्र्याच्छादितबुद्धिः सन् स्वखेषु स्वेन्द्रियेषु असुषु प्राणेषु हृदि हृदये दृक्पथेषु सन्निधौ अपि सन्तं विद्य-मानं यं त्वां न वेद, स उ सोऽपि आद्यः एव पूर्व्वम् अज्ञाता एव वेदं हृदि त्वत्प्रवर्त्तितं ज्ञानम् आसाद्य प्राप्य तं त्वां साक्षात् वेद इति शेषः ।

४७ । वेदेन साक्षाज्ज्ञानं कथं भवति तद्वन्दनमुखेन तत् प्रतिपा-दयति यदिति । निगमे हृदि त्वत्प्रवर्त्तिते साक्षाज्ज्ञाने यद्दर्शनं यस्य

तं सर्व्ववादविषयप्रतिरूपशीलं
वन्दे महापुरुषमात्मनि गूढ़बोधम् ॥

१२।८।४८।४९ ।

तव दर्शनम् आत्मरहःप्रकाशं स्वरहस्यप्रकाशकम् । प्रथमन्तावत् हृदि ज्ञानमाविर्भवति, तेन च साक्षाद्दर्शनं भवति, तेन दर्शनेन पुनः परमात्मरहस्यमनुभवगम्यं भवतीति क्रमः । यत्रैवं न भवति तत्र किं भवति तदाह—अजपराः ब्रह्माद्याः कवयः क्रान्तदर्शिनः यतन्तः यतमानाः यत्र त्वयि मुह्यन्ति मोहं प्राप्नुवन्ति, तं त्वां सर्व्ववादविषयप्रतिरूपशीलं सर्व्वेषां सांख्यादिवादानां प्रतिरूपं तत्तदनुसारि शीलं स्वभावो यस्य तम्, आत्मनि निगूढ़बोधं प्रच्छन्नः बोधो यस्य तं महापुरुषं वन्दे । परमात्मनिःश्वसितेन सांख्यादिवादानामुत्पत्तिः । अतस्तत्स्वभावस्तेष्वंशतः प्रतिफलितोऽस्ति । तत्तदंशपक्षपातिनः स्वस्वज्ञानांशएव सर्व्वज्ञानमिति भ्रान्त्या परस्परं विवदन्ते तेन च तेषां दृष्टिमालिन्यमुपतिष्ठते वस्तुदर्शनञ्च प्रतिरुध्यते । यदा पुनः परमात्मगुरोः प्रसादात् भ्रान्तिरेषापैति, तदा तत्प्रकाशितज्ञानदीपेन निरस्तसमस्तध्वान्तो जनस्तं साक्षात् पश्यति ।

परमात्मनिर्द्देशप्रधानेऽस्मिन्नध्याये तस्यान्तर्यामित्वं, साक्षित्वं, शास्तृत्वम्, आत्मनामात्मत्वं, ज्ञानप्रकाशकत्वं विशेषेण निरूपितम् ।

इति श्रीसात्वतसंहितोत्थायां व्याख्यानसहितायां
श्रीमद्गीताप्रपूर्त्तौ परमात्मनिर्द्देशो नाम
तृतीयोऽध्यायः ।

---

# चतुर्थोऽध्यायः।

## भगवन्निर्देशः।

सर्व्वातीतं ब्रह्म, सर्व्वगतः परमात्मा, सर्व्वान्तर्भावको भगवान् सर्व्वातीतत्वसर्व्वगतत्वयोरात्मन्यन्तर्भावितत्वादिति पूर्व्वमुक्तम्। द्वितीये तृतीये चाध्याये ब्रह्मपरमात्मनोः सर्व्वातीतत्वसर्व्वगतत्वे प्रतिपादिते। सम्प्रति भगवतः सर्व्वान्तर्भावकत्वं प्रदर्श्यते। तत्रादौ श्रीमद्बोपदेवेन परवर्त्तिनां वैष्णवाचार्य्याणां मतभेदस्याकिञ्चित्करत्वं प्रतिपाद्यम्। श्रीमद्बोपदेवः स्वकृतमुक्ताफले यदाह—'स (विष्णुः) द्वेधा, निराकारः साकारश्च। अनवच्छिन्नं चैतन्यं निराकारः, सत्तावच्छिन्नं चैतन्यं साकारः। स (साकारः) चतुर्द्धा—रजस्तमोभ्यां युक्ते सत्त्वे पुरुषः, रजसा ब्रह्मा, तमसा रुद्रः, शुद्धे विष्णुरेव। अगोचरस्य गोचरत्वे हेतुः प्रकृतिगुणः सत्त्वम्, गोचरस्य बहुरूपत्वे रजः, बहुरूपस्य तिरोहितत्वे तमः। तथा परस्परमुदासीनत्वे सत्त्वम्, उपकारित्वे रजः, अपकारित्वे तमः। गोचरत्वादानि सृष्टिःस्थितिः संहारः; उदासीनत्वादीनि च' इति,—तत्तु दृश्यतएव परवर्त्त्याचार्य्याणां मतेनासमञ्जसम्। सर्व्वसंवादिन्यां श्रीमज्जीवेनोक्तम्—'अथ यत् पृष्टं निषिद्धनीलपीताद्याकारस्य तस्य ज्ञानमात्रस्य वस्तुनः कथं तत्तद्दर्शित्वं, कथं वा परिच्छेदरहितस्य चतुर्भुजाद्याकारत्वेन परिच्छिन्नत्वम्, कथं वा वैकुण्ठादीनामपि तद्रूपत्वमिति। तत्रैश्वर्य्यादिवत्स्वप्रकाशत्वेन विभुत्वेन तत्त्वेन च तत्तदुपाधिरहितस्वरूपमात्रत्वं प्रमाणचक्रचक्रवर्त्तिविद्वदनुभवसेव्यमानैः शब्दैरेव प्रमितं दर्शयिष्यते' इति। 'यत् यस्य तस्य श्रीविग्रहस्य परिच्छिन्नत्वेऽप्यपरिच्छिन्नत्वं श्रूयते तच्च युक्तमचिन्त्यशक्तित्वात्; सर्व्वेषां विभुत्वादिपरमशक्तीनामिकाश्रयत्वाच्च' इति च। न ह्युपाधिरहितस्वरूपमात्रत्वे परि-

१ । स एवेदं ससर्ज्जाग्रे भगवानात्ममायया ।
सदसद्रूपया चासौ गुणमय्यागुणो विभुः ॥

च्छिन्नत्वं सम्भवति, सर्व्वत्र पुनस्तैस्तादृक् स्वरूपमेव गृहीतम्, न पुनः स्थूलवर्णादिकम् । वर्णितकेशादयोऽप्यानन्दमात्रमिति तेषां सिद्धान्तः । सुतरां श्रीमद्वोपदेवेन तेषां योऽयं विरोध उद्भावितः, स तु न भगवन्तं किन्तर्हि विराजमधिकृत्यैव । 'यद्यपि विराट् जीवएव तथापि तदन्तर्यामिणस्तथैवोपासनमेव युक्तम्' इति श्रीमद्रामानुजोक्तिः सत्तापरिच्छिन्नचैतन्यस्य मूलमुद्भावयति । 'अवतारस्य प्राकृतवैभवेऽवतरणम्' इति यत्तैरुक्तम्, तदाधारविशेषे प्रकाशमानस्य भगवतो विभुत्वादिनाऽपरिच्छिन्नत्वेन ग्रहणादविरोधीति मन्तव्यम्, धारणायां सत्तायाः परिच्छिन्नत्वेऽपि बुद्धौ तस्या नानन्तत्वमपगच्छतीति तत्त्वं श्रीमद्वोपदेववचनस्य स्वार्थकतां साधयति, अन्येषामाचार्य्याणां विरोधवत्प्रतीयमानानां कृतान्तानामविरोधित्वञ्च सम्पादयते । चतुर्भुजादिवर्णनन्तु सृज्यशक्तीनां भगवत्यन्तर्भावनायैवारोपमात्रमिति 'मायाद्यैर्नवभिस्तत्त्वैः' ( १२।११।५—२२ ) इत्यादिभिः स्फुटीभविष्यति । 'मन्त्रमूर्त्तिममूर्त्तकम्' ( १।५।३८ ) इति स्वरूपप्रतिबोधकमन्त्रव्यतिरिक्तमूर्त्तिशून्यत्वमेव प्रतिपादयति । तथा च श्रीमज्जीवः—'मन्त्रमूर्त्तिं मन्त्रोक्तमूर्त्तिं मन्त्रोऽपि मूर्त्तिर्यस्येति वा । अमूर्त्तिकं मन्त्रोक्तव्यतिरिक्तमूर्त्तिशून्यं प्राकृतमूर्त्तिरहितं वा; मूर्त्तिस्वरूपयोरेकत्वात् प्राकृतवन्न विद्यते पृथक्त्वेन मूर्त्तिर्यस्य तथाभूतोवा सः' इति ( भ, त्, स, ) । 'मूर्त्तत्वं प्रतिपत्तव्यं चित्सुखस्यैव रागवत्' इति वैष्णवसिद्धान्तः ।

१ । स्वशक्त्याविष्कृतपरमैश्वर्य्यं भगवन्तं प्रस्तौति स इति । स एव असौ अगुणः सत्त्वादीनां सृज्यशक्तीनाम् अतीतः तत्स्वभावैरस्पृष्टः, विभुः सर्व्वव्यापी सर्व्वगतः सर्व्वमात्मन्यन्तर्भूय विद्यमानः भगवान् सदसद्रूपया स्थूलसूक्ष्मरूपया गुणमय्या सृज्यशक्तियुक्तया आत्ममायया निजशक्त्या इदं विश्वम् अग्रे सृष्टेः प्राक् ससर्ज्ज सृष्टवान् ।

२ । तया विलसितेष्वेषु गुणेषु गुणवानिव ।
अन्तःप्रविष्ट आभाति विज्ञानेन विजृम्भितः ॥

३ । यथा ह्यवहितोवह्निर्दारुष्वेकः स्वयोनिषु ।
नानेव भाति विश्वात्मा भूतेषु च तथा पुमान् ॥

४ । असौ गुणमयैर्भावैर्भूतसूक्ष्मेन्द्रियात्मभिः ।
स्वनिर्म्मितेषु निर्व्विष्टो भुङ्क्ते भूतेषु तद्गुणान् ॥

२ । सृज्यशक्तिषु प्रविष्टोऽपि स्वज्ञाने नित्यविद्यमानत्वात् तदतीत इति सर्व्वातीतसर्व्वगतत्ववशात् सर्व्वान्तर्भावकत्वं भगवतो दर्शयति । तया स्वशक्त्या विलसितेषु उद्भूतेषु गुणेषु सृज्यशक्तिषु गुणवान् इव सृज्यशक्तिमान् इव—इवेन दृश्यतस्तथा वस्तुतस्ताभिरस्पृष्टः इति व्यज्यते—अन्तःप्रविष्टः सन् विज्ञानेन चिच्छक्त्या विजृम्भितः अत्यूर्ज्जितः तदावरणं विभिद्य तदतिरिक्तत्वेन नित्यप्रकाशमानः आभाति विराजते ।

३ । सृज्यशक्त्युत्पन्नेषु भूतेषु नानात्वेन प्रकाशमानोऽपि स पुनरविकार्य्येकएवेति दृष्टान्तेन प्रतिपादयति यथेति । यथा स्वयोनिषु स्वाभिव्यञ्जकेषु दारुषु अवहितः निहितः एकः वह्निः अनलः नाना-इव—इवेन न वस्तुतोनानात्वमिति व्यज्यते—भाति जनबुद्धौ प्रतीयते, तथा विश्वात्मा पुमान् परमपुरुषः, एकोऽपि नानेव भातीति शेषः ।

४ । जीवानां भोगार्थमेव तदैश्वर्य्यविस्तारइत्याह असाविति । असौ गुणमयैः सृज्यशक्त्युद्भूतैः भावैः भूतसूक्ष्मेन्द्रियात्मभिः भूतसूक्ष्माणि च इन्द्रियाणि च आत्मा मनश्च तैः स्वनिर्म्मितेषु स्वयं विरचितेषु भूतेषु निर्विष्टः प्रविष्टः तद्गुणान् तत्तदनुरूपान् विषयान् भुङ्क्ते भोजयति—अन्तर्भावितण्यन्तत्वात्—जीवानां भोग्यान् करोति ।

५ । भावयत्येष सत्त्वेन लोकान् वै लोकभावनः ।
लीलावतारानुरतो देवतिर्य्यङ्नरादिषु ॥
१।२।३०—३४ ।

६ । स वेद धातुः पदवीं परस्य
दुरन्तवीर्य्यस्य रथाङ्गपाणेः ।
यो ऽमायया सन्ततयानुवृत्त्या
भजेत तत्पादसरोजगन्धम् ॥

७ । अथेह धन्या भगवन्त इत्थं
यद्वासुदेवे ऽखिललोकनाथे ।

५ । एवं जीवभोग्यविरचनं भूतेषु विराजनञ्च स्वेच्छयैव न तु प्रयोजनवशादिति दर्शयितुं तस्य नित्यलीलावतरणमाह भावयतीति । देवतिर्य्यङ्नरादिषु लीलावतारानुरतः लीलया स्वेच्छया अवतारः अवतरणं प्राकट्यभजनं तस्मिन् अनुरतः नित्यप्रवृत्तः, न तु कदाचित् प्रवृत्तिः कदाचित् अप्रवृत्तिरित्येवंरूपविकारवान् एष लोकभावनः लोककर्त्ता सत्त्वेन प्रकाशशक्त्या लोकान् भावयति पालयति ।

६ । लीलावतरणस्य प्रयोजनमाह स इति । दुरन्तवीर्य्यस्य अपरिमेयविक्रमस्य रथाङ्गपाणेः तेजसां तेजसः—'तेजस्तत्त्वं सुदर्शनम्' ( १२।११।१४ ) इत्युक्तेः—परस्य परमस्य धातुः विधातुः ईश्वरस्य पदवीं स्वरूपं स वेद जानाति साक्षात्करोति, यः अमायया निष्कपटभावेन सन्ततया निरन्तरया अनुवृत्त्या आनुकूल्येन तत्पादसरोजगन्धं—'आनन्दरूपममृतं यद्विभाति' इत्युक्तदिशा 'भूः पादौ' ( १२।११।१२ ) इति भुवि सौन्दर्य्याकारेण प्रकाशमानां तदानन्दसम्पदं भजेत सेवेत ।

७ । निखिललोकास्तस्मिंस्तिष्ठन्ति स एव तेषां प्रभुरित्याह अथेति । भगवन्तः ज्ञानवैराग्यादियुक्ता ऋषयः यत् यस्मात् इह अखिल-

कुर्व्वन्ति सर्व्वात्मकमात्मभावं
न यत्र भूयः परिवर्त्त उग्रः ॥१।३।३८।३९ ।

८ । नमोऽकिञ्चनवित्ताय निवृत्तगुणवृत्तये ।
आत्मारामाय शान्ताय कैवल्यपतये नमः ॥
१।८।२७ ।

९ । भवाय नस्त्वं भव विश्वभावन
त्वमेव माताऽथ सुहृत्पतिः पिता ।
त्वं सद्गुरुर्नः परमञ्च दैवतं
यस्यानुवृत्त्या कृतिनोबभूविम ॥१।११।७ ।

लोकनाथे वासुदेवे सर्व्वनिवासे भगवति सर्व्वात्मकम् ऐकान्तिकं आत्मभावं मनोवृत्तिं कुर्व्वन्ति, ततः ते धन्याः ; यत्र आत्मभावे न भूयः उग्रः दारुणः परिवर्त्तः लोकलोकान्तरभ्रमणं किन्तर्हि तस्मिन्नेव नैरन्तर्य्येण स्थितिः ।

८ । कैवल्यनिधेरात्मारामस्य सर्व्वविकारातीतस्यापि महत्तरं भक्तवात्सल्यं विवृणोति कुन्तीस्तोत्रेण नम इति । निवृत्तगुणवृत्तये निवृत्ताः सत्त्वशक्त्युत्पन्नाः विषयाः यस्मात् तस्मै, अतएव शान्ताय प्रपञ्चातीताय आत्मारामाय स्वस्मिन् रममाणाय कैवल्यपतये कैवल्यं दातुं समर्थाय नमः ; अकिञ्चनवित्ताय अकिञ्चनाः भक्ताएव वित्तं सर्व्वस्वं यस्य तस्मै नमः ।

९ । अनेन मातृत्वादिविविधसम्बन्धा विव्रियन्ते भवायेति । हे विश्वभावन विश्वपालक, त्वं नः अस्माकं भवाय मङ्गलाय—'सन्ततनिजदर्शनसमृद्धये' इति श्रीमज्जीवः—भव । अथ त्वम् एव माता, सुहृत्, पतिः, पिता, त्वं नः सद्गुरुः, परमं च दैवतम् इष्टदेवः, यस्य तव अनुवृत्त्या कृतिनः कृतार्थाः बभूविम वयम् ।

১০। নমঃ পরস্মৈ পুরুষায় ভূয়সে
সমুদ্ভবস্থাননিরোধলীলয়া।
গৃহীতশক্তিত্রিতয়ায় দেহিনা-
মন্তর্ভবায়ানুপলক্ষ্যবর্ত্মনে॥

১১। ভূয়ো নমঃ সদ্বৃজিনচ্ছিদেঽসতা-
মসম্ভবায়াখিলসত্ত্বমূর্ত্তয়ে।
পুংসাং পুনঃ পারমহংস্য আশ্রমে
ব্যবস্থিতানামনুমৃগ্যদাশুষে॥

১০। সএব স্রষ্টা সএব সর্ব্বাতীতসর্ব্বগতত্বেন সর্ব্বান্তর্ভাবকঃ পূর্ণস্বরূপো ভগবানিত্যাহ শুকস্তোত্রেণ নম ইতি। সদুদ্ভবস্থাননিরোধলীলয়া সতঃ প্রপঞ্চস্য উদ্ভবঃ জন্ম, স্থানং স্থিতিশ্চ, নিরোধঃ লয়শ্চ তেষাং নিমিত্তভূতা যা লীলা তয়া গৃহীতং শক্তিত্রিতয়ং,—ক্রিয়াত্মকং রজঃ, প্রকাশাত্মকং সত্ত্বম্, অপ্রকাশাত্মকং তমঃ,—আসাং সৃজযশক্তীনাং ত্রয়ং যেন তস্মৈ, দেহিনামন্তর্ভবায় অন্তর্যামিণে অন্তর্বিদ্যমানায়, অথ অনুপলক্ষ্যবর্ত্মনে সর্ব্বাতীতত্বাৎ অনুপলক্ষ্যং বর্ত্ম যস্য তস্মৈ, ভূয়সে সর্ব্বতঃ পূর্ণায় পরস্মৈ পরমপুরুষায় নমঃ।

১১। অথ পুনর্বিশেষলীলামাহ ভূয় ইতি। সদ্বৃজিনচ্ছিদে সতাং সাধূনাং দুঃখহন্ত্রে, অসতাং দুষ্কৃতানাম্ অসম্ভবায় বিনাশায় 'দৈত্যাদীনামপি মুক্তিদায়' ইতি শ্রীমজ্জীবঃ—"বিনাশায় চ দুষ্কৃতাম্" ইত্যনুসরণেন যদ্যপ্যত্র বিনাশার্থে এব গৃহীতস্তথাপি ন স তেষামকল্যাণায় কিন্তর্হি পরমকল্যাণায়েতি দর্শনাচ্ছ্রীমদ্বৈষ্ণবাচার্য্যৈরুক্ততা ব্যাখ্যৈব সংহিতায়া অস্যা অভিপ্রায় ইতি তত্র তত্রাবগন্তব্যম্। অখিলসত্ত্বমূর্ত্তয়ে সমগ্রাঃ সত্ত্বমূর্ত্তয়ো যস্য তস্মৈ,—তত্র তত্র প্রকাশমানায়েত্যর্থঃ, পারমহংস্যে পরমাত্মনিষ্ঠারূপে আশ্রমে ব্যবস্থিতানাং পুংসাং পুনঃ অনু-

१२ । नमोनमस्तेऽस्त्वृषभाय सात्त्वतां
विदूरकाष्ठाय मुहुः कुयोगिनाम् ।
निरस्तसाम्यातिशयेन राधसा
स्वधामनि ब्रह्मणि रंस्यते मनः ॥२।४।१२—१४

१३ । भगवानेक आसेदमग्र चात्मात्मनां विभुः ।
आत्मेच्छानुगतावात्माऽनानामत्युपलक्षणः ॥३।५।२३ ।

मृग्यदाशुषे अनुमृग्यम् अन्वेषणीयं परमात्मनैक्यं तस्य दाशुषे दात्रे भूयः नमः ।

१२ । निरतिशयैश्वर्य्येन प्रकृतौ विराजमानोऽसौ भक्तानां पालकः कुयोगिनां दर्शनातीत इत्याह नम इति । सात्त्वतां भक्तानाम् ऋषभाय पालकाय कुयोगिनाम् अभक्तानां विदूरकाष्ठाय विदूरा काष्ठा दिगपि यस्य तस्मै दुर्विज्ञेयायेत्यर्थः ते तुभ्यं नमोनमः । निरस्तसाम्यातिशयेन निरस्तं साम्यम् अतिशयश्च यस्य यदपेक्षया अन्यस्य साम्यम् अतिशयश्च नास्ति तेन राधसा ऐश्वर्य्येण स्वधामनि स्वविलासभूमौ ब्रह्मणि प्रकृतौ रंस्यते रममाणाय नमः ।

१३ । सृष्टिस्तस्या आत्मनि संहृतिश्चात्मेच्छानुगतेति दर्शयति भगवानिति । अग्रे सृष्टेः प्राक् इदं विश्वम् अभिन्नतया आत्मनां जीवानाम् आत्मा, विभुः स्वामी, भगवान् आस—'एकाकिना स्थितेन भगवता सह एकीभूय आसीत्' इति श्रीमज्जीवः,'भगवति लीनत्वेन भगवतोऽधिष्ठानकारणत्वात् इत्येके, भगवच्छक्तिकार्य्यत्वादित्यन्ये' इति श्रीमद्विश्वनाथः—आत्मेच्छानुगतौ आत्मनः एकाकित्वेनावस्थानेच्छायाअनुवृत्तौ—'आत्मेच्छा तस्य सृष्ट्यादीच्छा, अनुगतौ लीलायां सत्याम्' इति श्रीमज्जीवः, आत्मा चित्स्वरूपः अनानामत्युपलक्षणः नानाद्रष्टृदृश्यादिमतिभिर्नोपलक्ष्यते इति तथा ।

१४ । नमाम ते देव पदारविन्दं
प्रपन्नतापोपशमातपत्रम् ।
यन्मूलकेता यतयोऽञ्जसोरु
संसारदुःखं बहिरुत्क्षिपन्ति ॥

१५ । धातर्यदस्मिन् भव ईश जीवा-
स्तापत्रयेणोपहता न शर्म्म ।
आत्मँल्लभन्ते भगवंस्तवाङ्घ्रि-
च्छायां सविद्यामत आश्रयेम ॥३।५।३८।३९ ।

१६ । शश्वत् स्वरूपमहसैव निपीतभेद-
मोहाय बोधधिषणाय नमः परस्मै ।
विश्वोद्भवस्थितिलयेषु निमित्तलीला-
रासाय ते नम इदं चकमेश्वराय ॥३।९।१४ ।

१४ । तत्पदाश्रय एव सर्व्वतापोन्मूलनहेतुरित्याह नमामेति । हे देव, तव पदारविन्दं पादपद्मं प्रपन्नतापोपशमातपत्रं प्रपन्नानां शरणापन्नानां तापोपशमे आतपत्रं छत्रम् । यन्मूलकेताः यस्य पदारविन्दस्य मूलं तलं केतः आश्रयः येषां ते यतयः यत्नशीलाः भजनपराः उरु संसारदुःखम् अञ्जसा शीघ्रं बहिः दूरतः उत्क्षिपन्ति परित्यजन्ति ।

१५ । तत्पदाश्रयणेन सुखं ज्ञानलाभश्चेत्याह धातरिति । हे धातः विधातः, हे ईश ईश्वर, यत् यस्मात् अस्मिन् भवे संसारे जीवाः तापत्रयेण आध्यात्मिकादितापत्रयेण उपहताः आक्रान्ताः शर्म्म सुखं न आत्मन् आत्मनि लभन्ते, अतः, हे भगवन्, सविद्यां विद्याप्रापिकां ज्ञानप्रापिकां तव अङ्घ्रिच्छायां पादच्छायाम् आश्रयेम ।

१६ । नित्यलीलापरायणस्य भगवतः स्वरूपविभवप्रभावात् सर्व्व-

१७ । तिर्य्यङ्मनुष्यविबुधादिषु जीवयोनि-
ष्वात्मेच्छयात्मकृतसेतुपरीप्सया यः ।
रेमे निरस्तविषयाप्यवरुद्धदेह-
स्तस्मै नमो भगवते पुरुषोत्तमाय ॥३।९।१९ ।

१८ । सोऽसावदभ्रकरुणो भगवान् विवृद्ध-
प्रेमस्मितेन नयनाम्बुरुहं विजृम्भन् ।
उत्थाय विश्वविजयाय च नोविषादं
माध्व्या गिरापनयतात्पुरुषः पुराणः ॥३।९।२५

भेदमोहोऽपगच्छतीत्याह शश्वदिति । शश्वत् नित्यं स्वरूपमहसा स्वरूप-शक्त्यैव निपीतभेदमोहाय निपीतः दूरीकृतः भेदमोहः येन त्वया तस्मै बोधधिषणाय बोधनिलयाय परस्मै परमपुरुषाय नमः । विश्वोद्भव-स्थितिलयेषु निमित्तलीलारासाय विश्वस्य जन्मादिषु निमित्तस्य कार-णस्य स्वशक्तेः या लीला विचित्रसृष्टिविस्तारः तया रासः क्रीड़ा यस्य तस्मै ईश्वराय ते तुभ्यम् इदं नमः चक्रम कृतवन्तो वयम् ।

१७ । विविधतनुषु स्वाविर्भावेन कथं तस्य लीला भवति तद्दर्शयति तिर्य्यगिति । आत्मेच्छया स्वेच्छया भक्तपिपालयिषयेति श्रीमज्जीवः, आत्मकृतसेतुपरीप्सया स्वकृतधर्म्ममर्य्यादापालनेच्छया यः निरस्तरतिः निरस्तविषयानुरागः तत्तदुपाधिधर्म्मैः अस्पृष्टः अपि अवरुद्धदेहः स्वीकृत-मूर्त्तिः तिर्य्यङ्मनुष्यविबुधादिषु जीवयोनिषु रेमे, तस्मै भगवते पुरुषो-त्तमाय नमः ।

१८ । भक्तैरस्य मधुरतरसम्बन्धं दर्शयति स इति । सोऽसौ अदभ्र-करुणः अनल्पकरुणः भगवान् पुराणः पुरुषः विवृद्धप्रेमस्मितेन विवृद्ध-प्रेम्णा स्मितेन नयनाम्बुरुहं विजृम्भन् प्रोत्फुल्लयन् स्वदृष्टिपातेन सम्भावयन् विश्वविजयाय सर्व्वत्र परिभवाभावाय, चकारादनुग्रहाय च उत्थाय

१९ । अहमात्मात्मनां धातः प्रेष्ठः सन् प्रेयसामपि ।
अतो मयि रतिं कुर्य्याद् देहादिर्यत्कृते प्रियः ॥
३।९।४२ ।

२० । प्रेयान्न तेऽन्योऽस्त्यमुतस्त्वयि प्रभो
विश्वात्मनीक्षेन्न पृथग् य आत्मनः ।
अथापि भक्त्येश तयोपधावता-
मनन्यवृत्त्याऽनुगृहाण वत्सल ॥४।७।३८ ।

२१ । एकस्त्वमेव भगवन्निदमात्मशक्त्या
मायाख्ययोरुगुणया महदाद्यशेषम् ।

माध्व्या मधुरया गिरा वाचा नः अस्माकं विषादं खेदं अपनयतात् अपनयतु ।

१९ । भगवद्वाक्येन तस्य श्रेष्ठत्वं विवृणोति अहमिति । हे धातः हे आदिपुरुष, अहम् आत्मनां जीवानां आत्मा । अतः प्रेयसाम् अतिप्रियाणाम् अपि मध्ये श्रेष्ठः प्रियतमः, सन् निरवद्यः । मयि रतिं कुर्य्यात् जीव इति शेषः । कथम् ? देहादिः यत्कृते यस्य मम कृते प्रियः ।

२० । एकात्मभावापन्नस्य भगवत्प्रियत्वं, तद्भावापन्नानाञ्च दास्यमाह प्रेयानिति । हे प्रभो, विश्वात्मनि परब्रह्मणि त्वयि आत्मनः जीवात् एकात्मतया पृथक् यः न ईक्षेत, अमुतः अमुष्मात् अन्यः न ते तव प्रेयान् प्रियतरः । अथापि एवम् अपि हे ईश, हे वत्सल भक्तजनप्रिय, अनन्यवृत्त्या अव्यभिचारिण्या भक्त्या तथा एकात्मतया उपधावतां सेवतां अनुगृहाण अनुग्रहं कुरु ।

२१ । एकोऽपि भगवान् सृज्यशक्तिषु प्रकाशमानोबहुधा विभातीत्याह एक इति । हे भगवन्, एकः त्वम् एव मायाख्यया उरुगुणया

सृष्ट्वानुविश्य पुरुषस्तदसद्गुणेषु
नानेव दारुषु विभावसुवद्विभासि ॥४।९।७ ।

२२ । त्वं नित्यमुक्तपरिशुद्धविबुद्ध आत्मा
कूटस्थ आदिपुरुषो भगवांस्त्र्यधीशः ।
यद्बुद्ध्यवस्थितमखण्डितया स्वदृष्ट्या
द्रष्टा स्थितावधिमखो व्यतिरिक्त आस्से ॥
४।९।१५ ।

२३ । सत्याशिषो हि भगवंस्तव पादपद्म-
माशीस्तथानुभजतः पुरुषार्थमूर्त्तेः ।
अप्येवमार्य्य भगवान् परिपाति दीनान्
वाश्रेव वत्सकमनुग्रहकातरोऽस्मान् ॥४।९।१७

बहुशक्तिविशिष्टया आत्मशक्त्या महदादि अशेषं सृष्ट्वा पुरुषः अन्तर्यामी सन् अनुप्रविश्य तदसद्गुणेषु तस्याः शक्तेः असत्सु सूक्ष्मेषु गुणेषु सृज्य-शक्तिषु दारुषु विभावसुवत् अनलवत् नाना इव भासि ।

२२ । एवं नानात्वेन प्रकाशमानोऽपि न तस्य जीवसाधर्म्म्यमित्याह त्वमिति । त्वं व्यतिरिक्तः जीवविलक्षणः सन् आस्से तिष्ठसि । तदेव दर्शयति—त्वं नित्यमुक्तपरिशुद्धविबुद्धः आत्मा, जीवस्तु बद्धमलिनान-भिज्ञः ; त्वं कूटस्थः नित्यमविकारी, स तु विकारी ; त्वम् आदिपुरुषः, स तु आदिमान् , त्वं भगवान् ऐश्वर्य्यसम्पन्नः, स तु ऐश्वर्य्यहीनः ; त्वं त्र्यधीशः त्रयाणां गुणानां सृज्यशक्तीनाम् अधीशः, स तु परतन्त्रः । कुत एतद्वैलक्षण्यम् ? यत् यतः बुद्ध्यवस्थितिं बुद्धेः तां ताम् अवस्थाम् अख-ण्डितया स्वदृष्ट्या चिच्छक्त्या द्रष्टा । अतएव स्थितौ पालने त्वम् अधि-मखः यज्ञाधिष्ठाता विष्णुः ।

२३ । यद्यपि भगवत्कामा एव कृतार्थास्तथापि कामनान्तरनिपी-

२४ । स एव विश्वं सृजति सएवावति हन्ति च ।
अथापि ह्यनहङ्कारान्नाज्यते गुणकर्म्मभिः ॥

२५ । एष भूतानि भूतात्मा भूतेशो भूतभावनः ।
स्वशक्त्या मायया युक्तः सृजत्यत्ति च पाति च ॥
४।११।२५।२६ ।

२६ । त्वं प्रत्यगात्मनि तदा भगवत्यनन्त
आनन्दमात्र उपपन्नसमस्तशक्तौ ।
भक्तिं विधाय परमां शनकैरविद्या-
ग्रन्थिं विभेत्स्यसि ममाहमिति प्ररूढ़म् ॥
४।११।३० ।

ड़ितान् दीनानपि सोऽनुगृह्णातीत्याह सत्येति । हे भगवन्, तथा तेन प्रकारेण त्वमेव पुरुषार्थं इत्येवं प्रकारेण अनुभजतः जनस्य पुरुषार्थमूर्त्तेः परमानन्दमूर्त्तेः तव पादपद्मम् आशिषः राजराादेः सकाशात् सत्या आशीः । एवमपि हे आर्य्य स्वामिन्, दीनान् कामनान्तरनिपीड़ितान् अस्मान् अनुग्रहकातरः नितान्तकरुणापरवशः भगवान् वत्सकं वास्रा धेनुः इव परिपाति ।

२४ । एवं दीनेष्वनुग्रहपरवशोऽपि नासौ विकारं भजते निरभिमानत्वादित्याह स इति । स एव अवति रक्षति, हन्ति च अवस्थान्तरतां प्रापयति च । अथापि एवं कृत्वापि अनहङ्कारात् अभिमानविरहितत्वात् गुणकर्म्मभिः सृज्यशक्तिक्रियाभिः न अजरते लिप्तः भवति ।

२५ । निरभिमानित्वे हेतुमाह एष इति । एष भूतानि स्वशक्तिविलासत्वात्, भूतात्मा भूतानाम् आत्मा कारणम्, भूतेशः भूतानां नियामकः, भूतभावनः भूतानां तत्तद्रूपतां प्रापकः, स्वशक्त्या मायया युक्तः एष सृजति अत्ति अवस्थान्तरतां प्रापयति, पाति च रक्षति च ।

२६ । तं निरभिमानं भजन् निरभिमानो भवसि त्वमित्याह

२७ । नमः परस्मै पुरुषाय मायया
विन्यस्तनानातनवे गुणात्मने ।
नमः स्वरूपानुभवेन निर्धुत-
द्रव्यक्रियाकारकविभ्रमोर्म्मये ॥४।१७।२९ ।

२८ । नूनं वतेशस्य समीहितं जनै-
स्तन्मायया दुर्ज्जययाऽकृतात्मभिः ।
न लक्ष्यते यस्त्वकरोदकारय-
द्योऽनेकएकः परतश्च ईश्वरः ॥४।१७।३२ ।

त्वमिति । उपपन्नसमस्तशक्तौ विद्यमानाः निखिलाः शक्तयो यस्मिन् तस्मिन् आनन्दमात्रे प्रत्यगात्मनि भगवति अनन्ते परमां भक्तिं विधाय तदा शनकैः मम अहम् इति प्ररूढ़ं दृढ़तामाप्तम् अविद्याग्रन्थिं विभेत्स्यसि भिन्नं करिष्यसि ।

२७ । विविधतनुषु विराजमानोऽपि तत्तत्तनुसम्भूतद्रव्यक्रियादिष्वभिनिवेशविरहात् विकारविवर्ज्जितोऽसावित्याह नम इति । मायया स्वशक्त्या विन्यस्तनानातनवे विरचिता नानातनवः प्रकाशस्थानानि येन तस्मै, गुणात्मने सृज्यशक्तिकारणाय परस्मै पुरुषाय नमः । स्वरूपानुभवेन स्वरूपोपलब्ध्या नियतस्वरूपे स्थितत्वादिति भावः, निर्धुतद्रव्यक्रियाकारकविभ्रमोर्म्मये निर्धुताः निरस्ताः द्रव्यक्रियाकारकेषु यः विभ्रमः अहङ्कारः तन्निमित्ताः ऊर्म्मयः विकाराः यस्मिन् तस्मै नमः ।

२८ । एवं विविधतनुषु विराजमानोऽपि न तस्य दुर्व्विज्ञेयत्वमपगच्छतीत्याह नूनमिति । यः तु ईश्वरः अकरोत् स्वयम्, अकारयत् अन्येन, यः एकः सन् परतः मायातः अनेकः, तस्य ईशस्य समीहितं चेष्टितं दुर्ज्जयया तन्मायया नूनम् अकृतात्मभिः विक्षिप्तचित्तैः जनैः न लक्ष्यते ।

२९। सर्गादि योऽस्यानुरुणद्धि शक्तिभि-
र्द्रव्यक्रियाकारकचेतनात्मभिः।
तस्मै समुन्नद्धनिरुद्धशक्तये
नमः परस्मैः पुरुषाय वेधसे ॥४।१७।३३।

३०। त्वमेक आद्यः पुरुषः सुप्तशक्ति-
स्तया रजःसत्त्वतमो विभिद्यते।
महानहं खं मरुदग्निर्वार्धराः
सुरर्षयो भूतगणा इदं यतः ॥४।२४।६३।

३१। नमोनमः क्लेशविनाशनाय
निरूपितोदारगुणाह्वयाय।
मनोवचोवेगपुरोयवाय
सर्वाक्षमार्गैरगताध्वने नमः ॥४।३०।२२।

२९। एवं तस्य दुर्व्विज्ञेयत्वेऽपि समस्तशक्तिमूले तस्य स्थितिं पश्यतस्तद्वन्दनैव कर्त्तव्येत्याह सर्गादीति। द्रव्यक्रियाकारकचेतनात्मभिः शक्तिभिः यः अस्य जगतः सर्गादि जन्मस्थितिभङ्गम् अनुरुणद्धि अनुवर्त्तते करोति, तस्मै समुन्नद्धनिरुद्धशक्तये समुन्नद्धाः उत्कटाः निरुद्धाः अप्रकटाः शक्तयः यस्य तस्मै वेधसे नियन्त्रे परस्मै पुरुषाय नमः।

३०। समस्तशक्तिमूले पश्यतापि तं ततो भिन्नत्वेन स ग्रहीतव्य इत्याह त्वमिति। त्वं सुप्तशक्तिः आत्मन्यवरुद्धशक्तिः आद्यः एकः पुरुषः। तया शक्त्या रजःसत्त्वतमः, महान्, अहङ्कारः, खम् आकाशः, मरुत् वायुः, अग्निः, वार् वारि, धरा क्षितिः, सुरर्षयः सुराः देवाः ऋषयः, भूतगणाश्च एवम् इदं जगत् यतः पुरुषात् विभिद्यते विभिन्नं भवति।

३१। साधकानुभूत्यनुसारतो विविधनामगुणैः परिचितोऽपि न

३२ । एतत् पदं तज्जगदात्मनः परं
सकृद्विभातं सवितुर्यथा प्रभा ।
यथाऽसवोजाग्रति सुप्तशक्तयो
द्रव्यक्रियाज्ञानभिदाभ्रमात्ययः ॥४।३१।१६ ।

३३ । क्षेत्रज्ञ आत्मा पुरुषः पुराणः
साक्षात् स्वयंज्योतिरजः परेशः ।
नारायणो भगवान् वासुदेवः
स्वमाययात्मन्यवधीयमानः ॥

तस्यावाङ्मानसगोचरत्वं तिरोभवतीत्याह नम इति । क्लेशविनाशाय सर्व्वदुःखहरणाय, निरूपितोदारगुणाह्वयाय निरूपिताः उदाराः गुणाः आह्वयाः नामानि च यस्य तस्मै नमः नमः । एवमपि मनोवचोवेग-पुरोजवाय मनोवचसोः वेगात् अपि पुरः अग्रे जवः वेगः यस्य मनो-वचसोरगोचरायेत्यर्थः, सर्व्वाक्षमार्गैः अगताध्वनाय सर्व्वेषाम् अक्षाणां चक्षुरादीनां मार्गैः अगतः अनवगतः अध्वा यस्य तस्मै नमः ।

३२ । अन्वयेन जगत् तत्पदत्वेन प्रतिभातं व्यतिरेकेण च साक्षा-त्तद्दर्शनं भवतीत्याह एतदिति । सवितुः सूर्य्यस्य यथा प्रभा, तथा सकृत् एकदा विभातं स्फुरितम् एतत् विश्वं जगदात्मनः जगत्कारणस्य परं तत् शास्त्रप्रसिद्धं पदं प्रकाशस्थानम्; अजाग्रति सुषुप्तौ असवः प्राणाः यथा सुप्तशक्तयः निरुद्धशक्तयः, तथा समाधावसौ द्रव्यक्रियाज्ञानभिदा-भ्रमात्ययः द्रव्यादीनां भिदा भेदः एव भ्रमः तस्य अत्ययः तिरोधानं यस्मात् सः ।

३३ । एवं स्वशक्त्याविष्कृतलीलत्वेऽपि सर्व्वथागोचरत्वं न तस्या-पास्तं चेत्, कथं पुनः स साक्षात्सम्बन्धेन ग्रहीतव्यइत्याह क्षेत्रज्ञ इति । क्षेत्रज्ञः प्रकृतिजीवाधिष्ठाता, आत्मा व्यापी, पुरुषः जगत्कारणः, पुराणः

३४ । यथानिलः स्थावरजङ्गमाना-
मात्मस्वरूपेण निविष्ट ईशेत् ।
एवं परो भगवान् वासुदेवः
क्षेत्रज्ञ आत्मेदमनुप्रविष्टः ॥५।११।१३।१४ ।

३५ । भजे भजेन्यारणपादपङ्कजं
भगस्य कृत्स्नस्य परं परायणम् ।
भक्तेष्वलं भावितभूतभावनं
भवापहं त्वा भवभावमीश्वरम् ॥५।१७।१८ ।

अनादिः, साक्षात् अपरोक्षः, स्वयंज्योतिः स्वप्रकाशः, अजः जन्मरहितः, परेशः सर्व्वेश्वरः, नारायणः जीवान्तर्यामी, भगवान् ऐश्वर्य्यसम्पन्नः, वासुदेवः सर्व्वभूतानामाश्रयः, आत्मनि जीवे अवधीयमानः अवस्थाप्यमानः आत्मन्यात्मानं संस्थाप्य तन्नियन्तृत्वेन वर्त्तमान इत्यर्थः ।

३४ । दृष्टान्तेन सएष साक्षात्सम्बन्धोविक्रियते यथेति । यथा अनिलः वायुः स्थावरजङ्गमानां मध्ये आत्मस्वरूपेण प्राणरूपेण निविष्टः प्रविष्टः सन् ईशेत् नियमयेत्, एवं परः परमः, भगवान् वासुदेवः, क्षेत्रज्ञः आत्मा व्यापी इदं विश्वम् अनुप्रविष्टः आत्मस्वरूपेण आत्मनामात्मरूपेण ईशेत् ईशीत नियमयेत् ।

३५ । एवं साक्षात्प्रकाशमानं भगवन्तं तदुपयोगिभिर्विशेषणजातैरनुभवगोचरं करोति साक्षात्सम्बन्धेन भज इति । हे भजेन्य भजनीय, अरणपादपङ्कजं अरणं शरणं पादपङ्कजं यस्य तं, कृत्स्नस्य भगस्य ऐश्वर्य्यस्य परम् अयनम् आश्रयम्, भक्तेषु अलं अत्यर्थम् भावितभूतभावनं भावितं प्रकटितं भूतभावनं भूतप्रतिपालनं स्वरूपं येन तं, भवापहं संसारहरं, भवभावं भवं भावयति पालयति इति तथा त्वा त्वाम् ईश्वरं भजे ।

३६ । यस्मिन्नसंख्येयविशेषनाम-
रूपाकृतौ कविभिः कल्पितेयम् ।
संख्या यया तत्त्वदृशाऽपनीयते
तस्मै नमः सांख्यनिदर्शनाय ते ॥५।१८।३३ ।

३७ । नमः परायावितथानुभूतये
गुणत्रयाभासनिमित्तबन्धवे ।
अदृष्टधाम्ने गुणतत्त्वबुद्धिभि-
र्निवृत्तमानाय दधे स्वयम्भुवे ॥६।४।२३ ।

३६ । यस्य संख्यातीतमैश्वर्य्यं बुद्धिविषयं कर्त्तुं परिमितसंख्यया संख्याय तत्त्वज्ञानेन तत् परिमितत्वमपनीयते, तमनन्तैश्वर्य्यं भगवन्तं ग्रस्तौति यस्मिन्निति । असंख्येयविशेषनामरूपाकृतौ असंख्येयाः अनन्ताः विशेषाः येषां तानि नामानि रूपाणि आकृतयश्च यस्य तादृशे यस्मिन् त्वयि कविभिः कपिलादिभिः कल्पिता इयं संख्या चतुर्व्विंशत्यादिसंख्या यया तत्त्वदृशा तत्त्वज्ञानेन अपनीयते तस्मै सांख्यनिदर्शनाय परमार्थ-रूपाय ते तुभ्यं नमः ।

३७ । किंवा तस्य परमार्थरूपं को वा तस्य जीवजगद्भ्यां सम्बन्धः, कैर्व्वा नासावधिगम्यः, तदाह नमस्कारमुखेन नम इति । पराय सर्व्वो-त्तमाय अवितथानुभूतये अवितथा अनुभूतिः चिच्छक्तिः यस्य तस्मै— एतेनास्य परमार्थरूपमुक्तम्—; गुणत्रयाभासनिमित्तबन्धवे गुणत्रयाभासः गुणत्रयोपहितचैतन्यः जीवः निमित्तं सर्ज्जनशक्तिः तयोः बन्धवे सुहृदे नियन्त्रे—एतेन जीवजगद्भ्यां सम्बन्धउक्तः— ; गुणतत्त्वबुद्धिभिः गुणेषु सृज्यशक्तिषु तत्त्वबुद्धिः स्रष्टृबुद्धिः येषां तैः अदृष्टधाम्ने अदृष्टं धाम स्वरूपं यस्य तस्मै—एतेन कैर्नाधिगम्य इत्युक्तम्— ; निवृत्तमानाय निरस्ताव-धये स्वयम्भुवे स्वप्रकाशाय नमो दधे नमनं करोमि ।

३८ । यच्छक्तयो वदतां वादिनां वै
विवादसंवादभुवो भवन्ति ।
कुर्व्वन्ति चैषां मुहुरात्ममोहं
तस्मै नमोऽनन्तगुणाय भूम्ने ॥६।४।३१ ।

३९ । तमेव देवं वयमात्मदैवतं
परं प्रधानं पुरुषं विश्वमन्यम् ।
व्रजाम सर्व्वे शरणं शरण्यं
स्वानां स नो धास्यति शं महात्मा ॥
६।९।२७ ।

३८ । 'यस्मिन् यतो येन च यस्य यस्मै यद्यो यथा कुरुते कार्य्यते च । परावरेषां परमं प्राक् प्रसिद्धं तद्ब्रह्म तद्धेतुरनन्यदेकम् ॥' (६।४।३०) इति सर्व्वकारणत्वेन गृहीतं ब्रह्म न हि विवादास्पदम्, विरोधस्तु तच्छक्त्यभिव्यक्तिविचारणे भूम्न आत्मप्रकाशस्येयत्ताभावात् । अतएव तदनन्तगुणत्वेन गृह्णीयादिति तद्रूपाय तस्मै नमस्करोति । यच्छक्तयः सर्व्वकारणस्य ब्रह्मणः शक्तयः वदतां तद्व्याख्यातॄणां मीमांसकानां विवादसंवादभुवः वादप्रतिवादभूमयः भवन्ति, एषां वादप्रतिवादपरायणानां मुहुः आत्ममोहं च आत्मनि मोहं स्वपक्षएव निर्द्दोष इति मोहं कुर्व्वन्ति जनयन्ति, तस्मै अनन्तगुणाय भूम्ने नमः ।

३९ । भूमत्वे विश्वात्मकत्वं स्वीकृत्य कारणत्वेन तदनन्यत्वञ्च संसाध्यात्मदैवतत्वेन परमपुरुषत्वेन च तं गृह्णाति तमिति । तं विविधभावेन प्रकाशमानम् एव देवम् आत्मदैवतं, विश्वं विश्वात्मकम्, अन्यं विश्वादन्यं, परं कारणं, शरण्यं, प्रधानं पुरुषं परमं पुरुषं च ; वयं सर्व्वे शरणं व्रजाम, स महात्मा महान् आत्मा स्वानाम् आत्मीयानां नः अस्माकं शं कल्याणं धास्यति विधास्यति ।

४० । विदितमनन्त समस्तं तव
जगदात्मनो जनैरिहाचरितम् ।
विज्ञाप्यं परमगुरोः
कियदिव सवितुरिव खद्योतैः ॥६।१६।४६ ।

४१ । अहं वै सर्व्वभूतानि भूतात्मा भूतभावनः ।
शब्दब्रह्म परब्रह्म ममोभे शाश्वती तनू ॥

४० । स एव आत्मनो गुरुः, सर्व्वञ्च हृद्गतं जानाति, अतस्तद्वि-ज्ञाप्यं न किञ्चिदप्यस्तीत्याह विदितमिति । हे अनन्त, जगदात्मनः तव इह जनैः आचरितं समस्तं विदितम् । परमगुरोः तव विज्ञाप्यं विशेषेण प्रकाशनीयं कियदिव न किमपि, सवितुः सूर्य्यस्य खद्योतैः इव, तैर्यथा किमपि प्रकाशनीयं नास्ति तद्वत् ।

४१ । तस्य सर्व्वकारणत्वं भगवद्वाक्येनैव प्रतिपादयति अहमिति । अहं वै सर्व्वभूतानि । कथम् ? भूतात्मा भूतानां कारणम्, भूतभावनः भूतानां परिपालकः, शब्दब्रह्म वेदः, परब्रह्म तत्प्रतिपाद्यं कारणरूपि परं ब्रह्म, उभे मम शाश्वती शाश्वत्यौ तनू । अत्र श्रीमज्जीवः—'भगवतः परमकारणत्वात् तदंशत्वेनैव ब्रह्म श्रूयते······अत्र शब्दात् ब्रह्मणः साहचर्य्यात् परब्रह्मणोऽप्यंशत्वमायाति ।' इति । वस्तुतस्तु शब्दब्रह्मसाहचर्य्यात् वेदप्रतिपाद्यं कारणं ब्रह्म तत्र प्रकृत्याभेदेन गृहीतं यत् तदत्राभिप्रेतम् । उपनिषदि यत्र प्रपञ्चोपशमत्वेन साक्षादपरोक्षं परं ब्रह्मोपदिशति, तत्र वेदप्रतिपाद्यं ब्रह्मैव प्रकृतेर्वियुज्य परिगृहीतमित्येकत्वप्रदर्शनाय शाश्वती तनू इत्युक्तिः । वेदस्य च तथात्वं तज्ज्ञानस्वरूपेणैक्यादिति बोध्यम् । 'वेदस्य शब्दरूपत्वादाकाशगुणत्वेनानित्यशङ्कायाः तथा परब्रह्मणश्चानि-र्द्देश्यत्वेनावस्तुत्वशङ्काया वारणायाह—शाश्वती शाश्वत्यौ नित्यसत्ये एव' इति श्रीमद्विश्वनाथः ।

४२ । लोके विततमात्मानं लोकं चात्मनि सन्ततम् ।
उभयञ्च मया व्याप्तं मयि चैवोभयं कृतम्
६।१६।५१।५२ ।

४३ । अनन्ताव्यक्तरूपेण येनेदमखिलं ततम् ।
चिदचिच्छक्तियुक्ताय तस्मै भगवते नमः ॥७।३।३४ ।

४४ । केवलानुभवानन्दस्वरूपः परमेश्वरः ।
माययान्तर्हितैश्वर्य्य ईयते गुणसर्गया ॥७।६।२३ ।

४५ । नतोऽस्म्यनन्ताय दुरन्तशक्तये
विचित्रवीर्य्याय पवित्रकर्म्मणे ।

४२ । स पुनस्तस्यात्मनोऽपरोक्षज्ञानमुपदिशति लोकइति । लोके भोग्यप्रपञ्चे आत्मानं भोक्तारं जीवम् आत्मनि भोक्तरि लोकं भोग्यत्वेन सन्ततं व्याप्तम्, उभयं तदुभयञ्च मया कारणात्मना व्याप्तम्, मयि च एव उभयं कृतं कल्पितं पश्येदित्यूह्यम् ।

४३ । सर्व्वातीतं चिदचिच्छक्तियुक्तञ्च ब्रह्म न भिन्नमित्याह अनन्तेति । हे अनन्त, अव्यक्तरूपेण अव्यक्तेन मनोवचनागोचरेण रूपेण येन इदम् अखिलं विश्वं ततं व्याप्तम्, तस्मै चिदचिच्छक्तियुक्ताय परापरप्रकृतियुक्ताय भगवते नमः । 'चिच्छक्तिर्विद्या अचिच्छक्तिर्माया' 'चिच्छक्तिः स्वरूपभूता अचिच्छक्तिर्माया' चेत्युक्तौ न विरुद्ध्येते गीतोक्तपरापरप्रकृतिसमत्वेन तयोर्ग्रहणात् ।

४४ । तस्य चिदचिच्छक्तियुक्तत्वेऽपि चिदानन्दस्वरूपत्वमेव नित्यम् । एवमपि यन्नोपलभ्यते स तत्तु स्वश्यावरणावृतत्वादित्याह केवलेति । परमेश्वरः केवलानुभवानन्दस्वरूपः ईयते प्रकटीभवति । यद्येवं कथं न स सर्व्वत्रोपलभ्यते ? गुणसर्गया गुणात्मकः सर्गः यस्याः तया मायया स्वशक्त्या अन्तर्हितैश्वर्य्यः अन्तर्हितम् ऐश्वर्य्यं येन सः ।

४५ । एवमन्तर्हितैश्वर्य्यत्वेऽपि भक्तसन्निधौ तस्याप्रच्युतस्वरूपत्वं

विश्वस्य सर्गस्थितिसंयमान् गुणैः
स्वलीलया संदधतेऽव्ययात्मने ॥७।८।४० ।

४६ । नैवात्मनः प्रभुरयं निजलाभपूर्णो
मानं जनादविदुषः करुणो वृणीते ।
यद्यज्जनो भगवते विदधीत मानं
तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥
७।९।११ ।

भाति, शक्तिकृतविचित्रता तु तस्य स्वरूपसौन्दर्य्यमाविष्करोतीत्याह नतइति। दुरन्तशक्तये अनन्तशक्तये—'दुर्ज्ञेयोऽन्तो यासां तथाभूताः शक्तयोयस्य तस्मै'—श्रीमद्विश्वनाथः, विचित्रवीर्य्याय विचित्राणि वीर्य्याणि प्रभावाः यस्य तस्मै, पवित्रकर्म्मणे पवित्राणि श्रवणमात्रेण शोधकानि कर्म्माणि यस्य तस्मै, गुणैः सृज्यशक्तिभिः स्वलीलया विश्वस्य सर्गस्थितिसंयमान् संदधते विदधते ; एवमपि अव्ययात्मने अप्रच्युतस्वरूपाय नतः प्रणतः अस्मि ।

४६ । एवं तस्याप्रच्युतस्वरूपत्वे न पुनः पूजाद्यपेक्षा । निजलाभपूर्णोऽपि स यत् पूजादि स्वीकरोति तत् साधकस्यैव पूर्णतासम्पादनायेत्याह नेति । अयं प्रभुः ईश्वरः निजलाभपूर्णः निजलाभेन निजैश्वर्य्येण एव पूर्णः, अतः आत्मनः मानं पूजाम् अविदुषः ज्ञानसम्पद्धीनात् अल्पकात् जनात् नैव वृणीते नैव इच्छति । करुणः कृपालुः वृणीते च स्वीकरोति च । कथम् ? जनः यद् यद् मानं पूजां भगवते विदधीत, तच्च प्रतिमुखस्य मुखश्रीः यथा, तथा आत्मने स्वस्मै भवति । अत्र श्रीमज्जीवः स्वपक्षे विशेषार्थमेवं निरपादयत्,—'भक्तास्तु श्रीभगवतोऽपि स्वत एव परमाभीष्टरूपाः, भक्तिरेव भक्तानां सुखरूपेति, "भक्त्या तुतोष" इत्येवोत्कर्षयन् स्वकर्त्तव्यत्वेन तामेव निगमयितुमाह नैवात्मन इति । अयं प्रभुरात्मनो मानं पूजां निजभक्तात् न वृणीते नेच्छति । तत्र हेतुः ।

४७। नैषा परावरमतिर्भवतोननु स्या-
ज्जन्तोर्यथात्मसुहृदो जगतस्तथापि ।
संसेवया सुरतरोरिव ते प्रसादः
सेवानुरूपमुदयो न परावरत्वम् ॥७।९।२७।

निजस्य भक्तस्य लाभेनैव पूर्णः परमसन्तुष्टः। इत्यन्तरं—करुणः पूजार्थ-तत्प्रयासादावसहिष्णुः। कथम्भूतात् जनात्? अविदुषः पितुरग्रे-बालवत्, तस्याग्रे किञ्चिदपि न जानतः। एषा स्वस्य जनैकवर्गत्वेन दैन्योक्तिः। यद्वा तदावेशेनान्यत् किञ्चिदपि न जानत इत्यर्थः। उभ-यत्र पक्षेऽपि तस्य तस्य कारुण्यहेतुरिति भावः। तर्हि किं जनस्तस्य मानं न कुरुत इवेत्याशङ्क्याह यदिति। स च जनो यत् यत् यं यं मानं भगवते विदधीत सम्पादयति स सर्व्वोऽप्यात्मार्थमेव। तत्सम्मान-मात्रेणैव स्वसम्माननाभिमननात् सुखं मन्यमानः तन्मानं करोत्येवेत्यर्थः। तत्सम्मानमात्रेण स्वसम्मानस्य तदेकजीवनस्य जनस्य युक्तएवेति दृष्टान्त-माह—यथा मुखे या शोभा क्रियते तन्मात्रमेव प्रतिमुखे शोभायै भवति नान्यदिति।' इति। प्रतिमुखं दर्पणादौ प्रतिबिम्बितं मुख-मिति ज्ञेयम्।

४७। न केवलं कृपया पूजां स्वीकरोति, किन्तर्हि विशेषानु-ग्रहञ्च वितरति। एवमनुग्रहवितरणेन न तस्मिन् वैषम्यदोष उपतिष्ठत इति प्रतिपादयति दृष्टान्तेन नेति। जन्तोः प्राकृतस्य यथा, तथा जगतः आत्मसुहृदः आत्मनः सुहृदः च भवतः एषा परावरमतिः अयमु-त्तमः अयमधमः इति मतिः ननु न स्यात्। तथापि सुरतरोः कल्प-वृक्षस्य इव ते तव प्रसादः अनुग्रहः संसेवया भवति। न परावरत्वं किन्तर्हि सेवानुरूपम् उदयः सम्पल्लाभः, सम्पल्लाभे न परावरत्वं किन्तर्हि सेवैव कारणम्। सेवात्तु तत्तत् प्रार्थनम्। तत्तदिच्छानुसारेणेति श्रीमत्स्वामी।

४८। कोन्वत्र ते ऽखिलगुरो भगवन् प्रयास-
उत्तारणेऽस्य भवसम्भवलोपहेतोः।
मूढ़ेषु वै महदनुग्रह आर्त्तबन्धो
किन्तेन ते प्रियजनाननुसेवतां नः ॥७।९।४२।

४९। स विश्वकायः पुरुहूत ईशः
सत्यः स्वयंज्योतिरजः पुराणः।
धत्तेऽस्य जन्माद्यजयात्मशक्त्या
तां विद्ययोदस्य निरीह आस्ते ॥८।१।१३।

४८। यद्येवं सेवमानानां कृतार्थता, ततः किं मूढ़ानां न सद्गतिः? तेषामपि सद्गतिः स्यादेव। यदि तेषां सद्गतिर्भवेत् किमु वक्तव्यं तत्प्रियजनाननुसेवमानानामित्याह कइति। हे अखिलगुरो, अविशेषेण सर्व्वेषां ज्ञानदातः भगवन्, अस्य विश्वस्य भवसम्भवलोपहेतोः उत्पत्तिस्थितिसंहरणकारणस्य तव उत्तारणे सर्व्वेषाम् उद्धरणे कोनु अत्र ते प्रयासः। हे आर्त्तबन्धो दीनबन्धो, मूढ़ेषु ते महदनुग्रहः महानुकम्पा। ते तव प्रियजनान् भक्तान् अनुसेवतां अनुसेवमानानां नः अस्माकं तेन उत्तरणेन किम्, न कोऽपि तत्र तव प्रयास इति भावः।

४९। जगत्सर्ज्जनपालनादौ यथा न तस्य कोऽपि विकारः, स्वशक्त्या तत्तत्कर्म्म साधयतोऽपि न कर्म्मलेपः, तथानुग्रहव्यापारोऽपि तथैति दर्शयति स इति। स ईशः ईश्वरः विश्वकायः विश्वमेव कायः तनुः प्रकाशस्थानं यस्य सः, पुरुहूतः पुरूणि बहूनि हूतानि यस्य सः, सत्यः सर्व्वसत्ताहेतुस्वरूपः, स्वयंज्योतिः स्वप्रकाशः, अजः जन्मरहितः, पुराणः नित्यः 'पुरापि नवत्वाद्विकारान्तरशून्यः'। आत्मशक्त्या अजया मायया अस्य विश्वस्य जन्मादि धत्ते, अथच विद्यया चिच्छक्त्या स्वस्वरूपेण तां मायाम् उदस्य अपाकृत्य निरीहः कार्य्यव्यस्तताशून्यः आस्ते।

५० । ईहते भगवानीशो न हि तत्र विसज्जते ।
आत्मलाभेन पूर्णार्थो नावसीदन्ति येऽनु तम् ॥

५१ । तमीहमानं निरहङ्कृतं बुधं
निराशिषं पूर्णमनन्यचोदितम् ।
नॄन् शिक्षयन्तं निजवर्त्मसंस्थितं
प्रभुं प्रपद्येऽखिलधर्म्मभावनम् ॥८।११।१६ ।

५२ । यः कश्चनेशो बलिनोऽन्तकोरगात्
प्रचण्डवेगादभिधावतो भृशम् ।
भीतं प्रपन्नं परिपाति यद्भया-
न्मृत्युः प्रधावत्यरणं तमीमहि ॥८।२।३२ ।

५० । कर्म्म कृत्वापि कर्म्मशून्यता कथं सम्भवति, तदनुसरणेन वा किं भवति तदेवाह ईहत इति । भगवान् ईशः ईश्वरः ईहते कर्म्म करोति, न हि तत्र कर्म्मणि विषज्जते आसक्तः भवति । कथमेवं भवति ? आत्मलाभेन पूर्णार्थः निजैश्वर्य्येण पूर्णं प्रयोजनं यस्य सः । ये जनाः तम् अनु अनुवर्त्तमानाः, न ते अवसीदन्ति अवसादग्रस्ताः भवन्ति ।

५१ । तस्य विशेषकार्य्योल्लेखेन पूर्व्वोक्तमेव स्पष्टं विवृणोति तमिति । ईहमानं कर्म्म आचरन्तं अथच निरहङ्कृतं कर्म्माभिमान-शून्यं, बुधं बोधस्वरूपम् अतएव कर्म्मलेपशून्यम्, निराशिषं निराकाङ्क्षम्, पूर्णम्, अनन्यचोदितम् अनन्यनियुक्तं, नॄन् शिक्षयन्तम् आत्मवर्त्म देशयन्तं, निजवर्त्मसंस्थितम् आत्मनः वर्त्मनि सम्यक् स्थितं न कदापि ततः विचलितम् इत्यर्थः, अखिलधर्म्मभावनं निखिलधर्म्मप्रवर्त्तकम्, प्रभुं परमेशं प्रपद्ये शरणं व्रजामि ।

५२ । न केवलं स धर्म्मानुपदिशति भीतांश्च परिपातीत्याह य

५३। नमो भगवते तस्मै यतएतच्चिदात्मकम्।
पुरुषायादिबीजाय परेशायाभिधीमहि॥

५४। यस्मिन्निदं यतश्चेदं येनेदं यइदं स्वयम्।
योऽस्मात् परस्माच्च परस्तं प्रपद्ये स्वयम्भुवम्॥

५५। यः स्वात्मनीदं निजमाययार्पितं
क्वचिद्विभातं क्व च तत्तिरोहितम्।
अविद्धदृक् साक्ष्युभयं तदीक्षते
स आत्ममूलोऽवतु मां परात्परः॥८।३।२—४।

इति। बलिनः बलवतः, प्रचण्डवेगात् प्रचण्डः उग्रः वेगः जवः यस्य तस्मात्, भृशम् अभिधावतः आभिमुख्येन द्रुतमागच्छतः अन्तकोरगात् अन्तकः मृत्युः स एव उरगः सर्पः तस्मात् भीतं त्रस्तं, प्रपन्नं शरणापन्नं कश्चन ईशः ईश्वरः परिपाति सर्व्वतो रक्षति ; यद्भयात् मृत्युः प्रधावति, तम् अरणं शरणम् ईमहि व्रजेम।

५३। सर्व्वश्चासौ चेतयतइत्याह नम इति। पुरुषाय पूर्षु कारणत्वेन प्रविष्टाय, आदिबीजाय आदिः प्रकृतिः बीजं पुरुषः तद्रूपाय परापरप्रकृतियुक्ताय, परेशाय परमशास्त्रे तस्मै भगवते नमः नमनम् अभिधीमहि अभिध्यायेम चिन्तापथेन नमस्कुर्य्याम, यतः एतत् देहादि चिदात्मकं चेतनक्रियासम्पन्नम्।

५४। सर्व्वं हि तस्यैश्वर्य्यमित्याह यस्मिन्निति। इदं विश्वं यस्मिन् आधारे, यतः सदुपादानात्, येन कर्त्रा, यः स्वयं विश्वरूपः, यः अस्मात् कार्य्यात् परस्मात् कारणात् परः, तं स्वयम्भुवं स्वप्रकाशं प्रपद्ये शरणं व्रजामि।

५५। न खलु निखिलप्रकाश्यं प्रकाशितमस्ति। एवं चेत् स्यात् प्रकाश्यस्येयत्ताप्राप्तिः, प्रकाशकस्यापीयत्तायानि। स पुनर्यत् प्रकाशितं

५६ । दिदृक्षवो यस्य पदं सुमङ्गलं
विमुक्तसङ्गामुनयः सुसाधवः ।
चरन्त्यलोकव्रतमव्रणं वने
भूतात्मभूताः सुहृदः स मे गतिः ॥८।३।७ ।

५७ । तस्मै नमः परेशाय ब्रह्मणेऽनन्तशक्तये ।
अरूपायोरुरूपाय नम आश्चर्य्यकर्म्मणे ॥८।३।९ ।

५८ । नमोनमस्तेऽखिलकारणाय
निष्कारणायाद्भुतकारणाय ।

यदप्रकाशितं वा तदुभयं समं पश्यति स्वज्ञानस्य ज्ञेयत्वात् स्वयम्भुरित्याह यइति । स्वात्मनि अर्पितम् इदं विश्वं क्वचित् विभातम् अभिव्यक्तम्, क्व च तत् तिरोहितम् अनभिव्यक्तम्, तत् उभयम् अविद्धदृक् अलुप्तदृष्टिः साक्षी आत्ममूलः स्वयम्भुः—स्वप्रकाशः—श्रीमद्विश्वनाथः—यः ईक्षते, स परात्परः परात् प्रकाशकात् चक्षुरादेरपि परः प्रकाशकः माम् अवतु रक्षतु ।

५६ । व्यक्ताव्यक्तनिखिलज्ञः स कथमस्माकं साक्षाद्दर्शनविषयः स्यादित्याशङ्कां परिहर्त्तुमाह दिदृक्षव इति । यस्य सुमङ्गलं पदं दिदृक्षवः मुक्तसङ्गाः सुसाधवः मुनयः भूतात्मभूताः भूतानाम् आत्मभूताः सुहृदः सन्तः वने अव्रणम् अच्छिद्रम् अलोकव्रतं ब्रह्मचर्य्यादि चरन्ति, स मे मम गतिः ।

५७ । तत्साक्षात्कारोपयोगिस्वरूपाण्यभिव्यनक्ति नमस्कारसुखेन तस्माइति । ब्रह्मणे अनन्तशक्तये, अरूपाय स्वरूपातिरिक्तरूपहीनाय, उरुरूपाय स्वरूपसम्भूतानन्तरूपाय, आश्चर्य्यकर्म्मणे तस्मै परेशाय नमोनमः ।

५८ । नमइति । अखिलकारणाय सर्व्वकारणरूपाय, अतएव

सर्व्वागमाम्नायमहार्णवाय
नमोऽपवर्गाय परायणाय ॥८।३।१५ ।

५९ । नमोऽस्तु तस्मा उपशान्तशक्तये
स्वाराज्यलाभप्रतिपूरितात्मने ।
गुणेषु मायारचितेषु वृत्तिभि-
र्न सज्जमानाय नभस्वदूतये ॥८।५।४४।

६० । त्वं ब्रह्म परमं गुह्यं सदसद्भावभावनः ।
नानाशक्तिभिराभातस्त्वमात्मा जगदीश्वरः ॥८।७।२४

स्वयं निष्कारणाय, कारणत्वेऽपि अद्भुतकारणाय मृदादिवद्विकारशून्यत्वात् लोकातीतकारणाय, सर्व्वागमाम्नायमहार्णवाय सर्व्वे आगमाः पञ्चरात्रादय आम्नायाः वेदा तेषां महार्णवाय अनन्ताकराय—'तरङ्गाणामिव पर्य्यवसानस्थानाय'—श्रीमद्विश्वनाथः, अपवर्गाय मोक्षरूपाय, अतएव परायणाय उत्तमानाम् आश्रयाय ते तुभ्यं नमोनमः ।

५९ । अधुना प्रपञ्चातीतत्वेन तल्लीलां दर्शयति नमस्कारमुखेन नम इति । उपशान्तशक्तये उपाशान्ता उपरता शक्तिः यस्य, स्वाराज्यलाभप्रतिपूरितात्मने स्वाराज्यलाभेन स्वस्मिन् विराजमानत्वेन प्रतिपूरितः पूर्णतामाप्तः आत्मा स्वरूपं यस्य, मायारचितेषु स्वशक्तिनिर्म्मितेषु गुणेषु सृज्यशक्तिषु वृत्तिभिः दर्शनादिभिः न सज्जमानाय असक्ताय, नभस्वदूतये नभास्वान् वायुः तस्येव उतिः लीला यस्य तस्मै नमः अस्तु ।

६० । स्वयं नभस्वानिव लीलापरः सन् नानाशक्तिभिरन्तर्वहिरात्मानमाविष्करोतीत्याह त्वमिति । त्वं परमं गुह्यं ब्रह्म अथच सदसद्शक्तिभावनः सदसन्तः स्थूलसूक्ष्माः व्यक्तयः भावाः देवतिर्य्यगादयः ताः भावयतीति तथा, नानाशक्तिभिः आभातः त्वम् आत्मा आत्मनामात्मा, जगदीश्वरः जगति प्रकाशमानः ईश्वरः ।

६१ । स त्वं समीहितमदःस्थितिजन्मनाशं
भूतेहितञ्च जगतो भवबन्धमोचौ ।
वायुर्यथा विशति खं च चराचराख्यं
सर्व्वं तदात्मकतयावगमोऽवरुन्त्से ॥८।१२।११

६२ । चित्रं तवेहितमहोऽमितयोगमाया-
लीलाविसृष्टभुवनस्य विशारदस्य ।
सर्व्वात्मनः समदृशो विषमस्वभावो-
भक्तप्रियो यदसि कल्पतरुस्वभावः ॥८।२३।८ ।

६१ । जगज्जीवानां न किमपि ततो वहिर्विद्यते, अतः सर्व्वं तज्ज्ञानविषयमित्याह स त्वमिति । सर्व्वं समीहितं, अदःस्थितिजन्मनाशं अमुष्य जगतोजन्मादि, भूतेहितं भूतानां चेष्टा, जगतः भवबन्धमोचौ सर्व्वम् एतत्—वायुः यथा चराचराख्यं देहजातं खं च विशति—तथा तदात्मकतया सर्व्वस्यात्मतया अवगमः ज्ञानरूपः स त्वम् अवरुन्त्से व्याप्नोषि जानासि ।

६२ । समदृशोऽपि भक्तप्रियत्वं चित्रमिति प्रतिभाति वैषम्यकारणात् । न खलु तस्मिन् वैषम्यं विद्यत इति प्रतिपादयति चित्रमिति । अमितयोगमायालीलाविसृष्टभुवनाय अमिता अचिन्त्या योगमाया अघटनघटनशक्तिः तस्या या लीला तया विसृष्टानि विरचितानि भुवनानि येन तस्य, सर्व्वात्मनः सर्व्वेषामात्मनः, विशारदस्य सर्व्वज्ञस्य, अतएव समदृशः तव ईहितं चेष्टितं अहो चित्रम् । कथम् ? भक्तप्रियः सन् त्वं विषमस्वभावः । नायं विषमस्वभावः, यत् यस्मात् कल्पतरुस्वभावः सन् त्वं भक्तप्रियः । यो हि येन भावेन त्वामाश्रयति, तं तेन भावेन ददासीति नात्र वैषम्यम्, उपयोगितां विना तत्तत्सम्पद्ग्रहणसामर्थ्याभावात्, सामर्थ्यन्तु क्रमादेवाभिव्यनक्ति ।

६३। त्वं सर्व्वलोकस्य सुहृत् प्रियेश्वरो
ह्यात्मागुरुर्ज्ञानमभीष्टसिद्धिः।
तथापि लोको न भवन्तमन्धधी-
र्जानाति सन्तं हृदिबद्धकामः॥८।२४।५२।

६४। अहं भक्तपराधीनो ह्यस्वतन्त्रइव द्विज।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः॥

६५। नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना।
श्रियञ्चात्यन्तिकीं ब्रह्मन् येषां गतिरहं परा॥

६३। यदिदं वैषम्यं प्रतिभाति, न तत्तस्मिन् किन्तर्हि जनेषु तत्सौहृद्यबोधविरहितेषु। भक्तास्तं सुहृत्त्वेन गृह्णन्ति, अतस्तेषां तत्-साक्षात्काररूपपरमसम्पल्लाभः, अभक्तास्तं तथात्वेन न गृह्णन्ति, अत-स्तेषां स्वस्वमत्यनुसारेण विषमफललाभ इति दर्शयति लोकानाम-न्धताख्यापनेन त्वमिति। त्वं सर्व्वलोकस्य सुहृत्, प्रियेश्वरः प्रियश्च ईश्वरश्च, आत्मा, गुरुः, ज्ञानम्, अभीष्टसिद्धिः, तथापि अन्धधीः बद्धकामः लोकः हृदि सन्तं त्वां न जानाति।

६४। भक्तैर्भक्तप्रियस्य विशेषसम्बन्धं दर्शयति भगवद्वाक्येन अह-मिति। हे द्विज, अहं हि अस्वतन्त्र इव भक्तपराधीनः भक्तैः साधुभिः ग्रस्तहृदयः अधिकृतहृदयः, अतएव भक्तजनप्रियः भक्तजनएव प्रियः यस्य, भक्तजनस्य प्रियः च। कथं भगवतः परमस्वतन्त्रस्यान्याधीनत्वं ख्यापयति संहितेति जिज्ञासायां तेषां तदिच्छाधीनत्वे स्वेच्छाधीनत्वमेव तन्मूलमिति ज्ञेयम्। इच्छा तु तत्स्वरूपाभिन्ना।

६५। नाहमिति। मद्भक्तैः साधुभिः विना न अहम् आत्मानम् आत्यन्तिकीं श्रियं च आशासे स्पृहयामि। निस्पृहस्य कथमेवं भवति तत्कारणमाह, अहं येषां परा गतिः।

६६ । ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम् ।
छित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥

६७ । मयि निर्ब्बद्धहृदयाः साधवः समदर्शनाः ।
वशे कुर्व्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥

६८ । मत्सेवया प्रतीतञ्च सालोक्यादिचतुष्टयम् ।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत् कालविप्लुतम् ॥

६९ । साधवो हृदयं मह्यं साधूनां हृदयन्त्वहम् ।
मदन्यत् ते न जानन्ति नाहं तेभ्यो मनागपि ॥

९।४।६३—६८ ।

७० । त्वमेक एवास्य सतः प्रसूति-
स्त्वं सन्निधानं त्वमनुग्रहश्च ।

६६ । 'येषामहं परा गतिः' इति स्वयं विवृणोति य इति। दारागारपुत्राप्तान् प्राणान् वित्तम् इदं परं च लोकं छित्वा मां शरणं याताः प्राप्ताः, कथं तान् भक्तान् त्यक्तुम् उत्सहे ।

६७ । मयीति । मयि निर्बद्धहृदयाः समदर्शनाः साधवः—सत्स्त्रियः सत्पतिं यथा—तथा भक्त्या मां वशे कुर्व्वन्ति ।

६८ । मदिति । मत्सेवया मद्भक्त्या सालोक्यादिचतुष्टयं प्रतीतं च प्राप्तम् अपि सेवया भक्त्या पूर्णाः आप्तकामाः न इच्छन्ति ; कालविप्लुतं कालकवलाधीनम् अन्यत् विषयसुखं कुतः ?

६९ । साधव इति । साधवः मह्यं हृदयम्, अहं साधूनां तु हृदयम्, ते मदन्यत् न जानन्ति, तेभ्यः मनाक् अपि किञ्चित् अपि न अहं जानामि ।

७० । न ह्येकान्तभावं विना तं सर्व्वस्वत्वेन कोऽपि ग्रहीतुं शक्नोति, नानाभावविक्लवेन चित्तेन पुनः स तं बहुत्वेन पश्यति, एका-

त्वन्मायया संवृतचेतसस्त्वां
पश्यन्ति नाना न विपश्चितो ये ॥१०।२।२८।

७१। ज्ञानविज्ञाननिधये ब्रह्मणेऽनन्तशक्तये।
अगुणायाविकाराय नमस्ते प्राकृताय च ॥

७२। कालाय कालनाभाय कालावयवसाक्षिणे।
विश्वाय तदुपद्रष्ट्रे तत्कर्त्रे विश्वहेतवे ॥

७३। भूतमात्रेन्द्रियप्राणमनोबुद्ध्याशयात्मने।
त्रिगुणेनाभिमानेन गूढ़स्वात्मानुभूतये ॥

७४। नमोऽनन्ताय सूक्ष्माय कूटस्थाय विपश्चिते।
नानावादानुरोधाय वाच्यवाचकशक्तये ॥

७५। नमः प्रमाणमूलाय कवये शास्त्रयोनये।
प्रवृत्ताय निवृत्ताय निगमाय नमो नमः ॥

१०।१६।४६—४४।

न्तिलञ्च न सिद्ध्यतीत्याह त्वमिति। कार्य्यभूतस्य अस्य संसारवृक्षस्य एकः एव त्वं प्रसूतिः जन्मस्थानं कारणं, त्वं सन्निधानं सम्यग्विलयस्थानं, त्वम् अनुग्रहः च अनुगृह्णातीति पालकः। त्वन्मायया संवृत्तचेतसः पिहितज्ञानाः त्वां नाना पश्यन्ति, ये विपश्चितः ज्ञानवन्तः न ते तथा पश्यन्ति।

७१—७५। भगवत्स्वरूपप्रतिबोधाय तत्स्वरूपाण्यभिधीयन्ते कुलकेन ज्ञानेति। ज्ञानविज्ञाननिधये ज्ञानं ज्ञप्तिः विज्ञानं चिच्छक्तिः तयोः निधये ताभ्यां ज्ञेयज्ञानाभ्यां पूर्णाय, अनन्तशक्तये, अगुणाय सत्त्वप्रकृत्यतीताय, अविकाराय, प्राकृताय प्रकृतेः प्रवर्त्तकाय, अप्राकृताय वा पाठः—प्रकृत्यतीताय; कालाय कालस्वरूपाय कालप्रवर्त्तकाय, काल-

७६ । त्वय्यव्ययात्मन् पुरुषे प्रकल्पिता
लोकाः सपाला बहुजीवसङ्कुलाः ।
यथा जले संजिहते जलौकसो-
ऽप्युदुम्बरे वा मशका मनोमये ॥१०।४०।१५ ।

नाभाय कालशक्त्याश्रयाय, कालावयवसाक्षिणे कालावयवानां सन्ध्यादि-समयानां साक्षिणे, विश्वाय विश्वरूपाय, तदुपद्रष्ट्रे तत्साक्षिणे, तत्कर्त्रे, विश्वहेतवे सर्व्वकारकरूपाय ; भूतमात्रेन्द्रियप्राणमनोबुद्ध्याश्रयात्मने भूतादिस्वरूपाय भूतानां भूतम्—इन्द्रियाणाम् इन्द्रियम् इत्येवं सर्व्व-कारकरूपाय, त्रिगुणेन सृज्यशक्तिमता अभिमानेन अहङ्कारेण अहं ब्रह्मास्मीति सर्व्वतोऽभिव्यक्तवचनेन गूढ़स्वात्मानुभूतये गूढ़ा प्रच्छादिता स्वानाम् आत्मनां जीवानां जीवोऽस्मीति अनुभूतिः येन तस्मै,—सर्व्वत ईश्वरकर्त्तृत्वाभिव्यक्तौ जीवकर्त्तृत्वज्ञानं विलुप्यते ईश्वर एव अहं स्वरूपेण प्रकाशते इत्येवंरूपाय—; अनन्ताय, सूक्ष्माय, कूटस्थाय, विपश्चिते सर्व्वज्ञाय, नानावादानुरोधाय अस्तिनास्तीत्यादीन् नाना-वादान् अनुरुणद्धि अनुवर्त्तते यः तस्मै, वाच्यवाचकशक्तये अभिधाना-भिधेयशक्तिभेदादपि नानात्वेन प्रतीयमानाय नमः ; प्रमाणमूलाय चक्षुरादीनां चक्षुरादिरूपाय, कवये स्वयं तन्निरपेक्षज्ञानाय, शास्त्रयोनये वेदात्मकनिःश्वासाय, प्रवृत्तये प्रवृत्तिस्वरूपाय, निवृत्तये निवृत्तिस्वरू-पाय, निगमाय शास्त्रस्वरूपाय नमोनमः ।

७६ । तस्य सर्व्वात्मकत्वेऽपि तस्मिन्नेव सर्व्वे विचरन्ति, अथ न तं परस्परं वा जानातीत्याह त्वयीति । हे अव्ययात्मन्, त्वयि पुरुषे, सपालाः साधिपाः बहुजीवसङ्कुलाः लोकाः प्रकल्पिताः । मनोमये मनः-प्रधाने मनोवृत्तिव्यङ्गे त्वयि—जले यथा जलौकसः उदुम्बरे उडुम्बरान्तः-केशरेषु मशकाः यथा परस्परवार्त्तानभिज्ञाः सञ्चरन्ति तथा—ब्रह्माण्डानि सञ्चरन्ति ।

७७। दृष्टं श्रुतं भूतभवद्भविष्यत्
स्थास्नुश्चरिष्णुर्महदल्पकञ्च।
विनाऽच्युताद्वस्तुतरां न वाच्यं
स एव सर्व्वं परमार्थभूतः ॥१०।४६।४३।

७८। एकएवाद्वितीयोऽसावैतदात्म्यमिदं जगत्।
आत्मनात्माश्रयः सभ्याः सृजत्यवति हन्त्यजः॥
१०।७४।२१।

७९। यत्र येन यतो यस्य यस्मै यद्यद् यथा यदा।
स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वरः॥
१०।८५।४।

७७। तन्निरपेक्षं न किञ्चिदस्तीत्याह दृष्टमिति। दृष्टं, श्रुतं, भूतभवद्भविष्यत् भूतं, भवत् वर्त्तमानं, भविष्यत् च, स्थास्नुः स्थितिमान्, चरिष्णुः, महत्, अल्पकं च, अच्युतात् अप्रच्युतस्वभावात् ईश्वरात् वस्तुतरां न वाच्यम्, परमार्थभूतः सएव सर्व्वम्।

७८। सर्व्वात्मकत्वमाह एक इति। हे सभ्याः, एकः अद्वितीयः एव असौ एतत् जगत् ऐतदात्म्यम् एष परमेशः आत्मा यस्य तत् एतदात्म तस्य भावः ऐतदात्म्यं एतत्स्वभावम्, आत्मना आत्माश्रयः अन्यनिरपेक्षः, अजः सृजति अवति हन्ति। इदं पूर्व्ववर्त्ति च पद्यं वैष्णवतोषणीसम्मतग्रन्थे न दृश्येते।

७९। सर्व्वकारकक्रियाव्याप्यं निखिलं भगवत्स्वरूपं व्यनक्तीत्याह यत्रेति। यत्र अधिकरणे, येन करणेन, यतः अपादानात्, यस्य सम्बन्धेन, यस्मै सम्प्रदानाय, यत् यत् कर्त्तृ कर्म्म च, यथा यदा क्रियाविशेषणे, एतत्सर्व्वात्मकं इदं जगत् प्रधानपुरुषेश्वरः प्रधानं भोग्यं पुरुषः भोक्ता तयोः ईश्वरः भगवान् त्वम् एव साक्षात्।

८० । नश्वरेष्विह भावेषु तदसि त्वमनश्वरम् ।
यथा द्रव्यविकारेषु द्रव्यमात्रं निरूपितम् ॥
१०।८५।१२ ।

८१ । जय जय जह्यजामजित दोषगृभीतगुणां
त्वमसि यदात्मना समवरुद्धसमस्तभगः ।
अगजगदोकसामखिलशक्त्यवबोधक ते
क्वचिदजयात्मना च चरतोऽनुचरेन्निगमः ॥
१०।८७।१४ ।

८२ । इति तव सूरयस्त्र्यधिपतेऽखिललोकमल-
क्षपणकथाऽमृताब्धिमवगाह्य तपांसि जहुः ।

८० । सर्व्वस्मिन् योऽसावनश्वरांशः स एव स इत्याह नश्वरेष्विति । द्रव्यविकारेषु घटकुण्डलादिषु यथा द्रव्यमात्रं मृत्सुवर्णादि निरूपितं तथा इह नश्वरेषु भावेषु यत् अनश्वरं तत् त्वम् असि ।

८१ । स्वशक्त्याविष्कृते निखिले जगति स वाग्विषयोभवति, अथच तदेव जीवदृष्टिमावृणोति, सुतरां समस्तावरणानावृतं सशक्तिक-तद्दर्शनमेव श्रेयः, तत्तु केवलं भगवदनुग्रहेणैव सिद्ध्यतीति तदेवाभिदधाति जयेति । हे अजित, मायया अनभिभूत, जय जय । दोषगृभीतगुणां दोषाय आनन्दाद्यावरणाय गृहीताः गुणाः सृज्यशक्तयः यया ताम्, अजां मायां जहि अपसारय । नानेन तव ऐश्वर्य्यविलोपः स्यात्—यत् यस्मात् अगजगदोकसां अगानि स्थावराणि जगन्ति जङ्गमानि ओकांसि शरीराणि येषां तेषां जीवानां, हे अखिलशक्त्यवबोधक, त्वम् आत्मना समवरुद्धसमस्तभगः संप्राप्तसमस्तैश्वर्य्यः असि। एवं कथं वाग्विषयोऽहं भवेयम् ? क्वचित् सृष्ट्यादौ अजया स्वशक्त्या आत्मना च चरतः क्रीड़तः तव—कर्म्मणि षष्ठी—निगमः वेदः अनुचरेत् प्रतिपादयेत् ।

८२ । निखिलपापनिरसनः सएवेत्याह इतीति । हे त्र्यधि-

किमुत पुनः स्वधामविधुताशयकालगुणाः
परम भजन्ति ये पदमजस्रसुखानुभवम् ॥
१०।८७।१६ ।

८३ । तव परि ये चरन्त्यखिलसत्त्वनिकेततया
तउत पदाक्रमन्त्यविगणय्य शिरो निर्ऋतेः ।
परिवयसे पशूनिव गिरा विबुधानपि तां-
स्त्वयि कृतसौहृदाः खलु पुनन्ति न ये विमुखाः ॥

८४ । त्वमकरणः स्वराडखिलकारक-शक्तिधर-
स्तव बलिमुद्वहन्ति समदन्त्यजयाऽनिमिषाः ।

पते, मायेश ऊर्द्ध्वाधोमध्यवर्त्तमानानां सर्व्वेषाम् अधीश्वर, सूरयः विवेकिनः तव अखिललोकमलक्षपणकथामृताब्धिं सकलजनवृजिननिरसनहेतुकीर्त्तिसुधासिन्धुम् अवगाह्य निषेव्य तपांसि कृच्छ्रसाधनानि जहुः त्यक्तवन्तः । हे परम सर्व्वोत्कृष्ट, किमुत वक्तव्यम् ये पुनः स्वधामविधुताशयकालगुणाः स्वधाम्ना स्वरूपविस्फुरणेन विधुताः त्यक्ताः आशयगुणाः अन्तःकरणधर्म्माः रागादयः कालगुणाः जरादयः च यैः ते अजस्रसुखानुभवम् अखण्डानन्दानुभवं पदं स्वरूपं भजन्ति सेवन्ते तथाभूताः दुःखानि त्यजन्तीति ।

८३ । तद्भजनेनैव विमुक्तिः अभजने पुनर्ब्बन्ध इत्याह तवेति । अखिलसत्त्वनिकेततया सर्व्वभूतवासतया ये तव—कर्म्मणि षष्ठी—परिचरन्ति ते अविगणय्य गणनाम् अकृत्वा निर्ऋतेः मृत्योः शिरः पदा आक्रमन्ति मृत्योर्मूर्द्ध्नि पदं दधति, विबुधान् अपि अभक्तान् तान् गिरा वाचा पशून् इव परिवयसे बध्नासि, त्वयि ये कृतसौहृदाः ते पुनन्ति आत्मानम् अन्यान् अपि, न य विमुखाः ।

८४ । सर्व्वेन्द्रियविवर्ज्जितोऽपि स तत्तच्छक्तिधरः, तमेव सर्व्वे

वर्षभुजोऽखिलक्षितिपतेरिव विश्वसृजो
विदधति यत्र ये त्वधिकृता भवतश्चकिताः ॥
१०।८७।२७।२८ ।

८५ । मायाद्यैर्नवभिस्तत्त्वैः सविकारमयो विराट् ।
निर्म्मितो दृश्यते यत्र सचित्के भुवनत्रयम् ॥

बलिमाहवन्तीत्याह त्वमिति । त्वम् अकरणः चक्षुरादीन्द्रियविहीनः अथच अखिलकारकशक्तिधरः अखिलानां प्राणिनां यानि कारकाणि इन्द्रियाणि तेषां शक्तिं धारयति प्रवर्त्तयतीति तथा, स्वराट् स्वस्मिन् विराजमानः, वर्षभुजः अखिलक्षितिपतेरिव विश्वसृजः अनिमिषाः देवाः अजया मायया सह तव बलिम् उद्वहन्ति, समदन्ति च मनुष्यप्रदत्तं हव्यकव्यादिकं भक्षयन्ति च, यत्र ये तु अधिकृताः त्वन्नियुक्ताः ते भवतः चकिताः भीताः विदधति तदाज्ञापालनं कुर्व्वन्ति ।

८५ । ग्रन्थेऽस्मिन् भगवद्दर्शने शिरःकरपादादि परिकल्पितम् । एतत्तु स्थूलं भूतादिकं सूक्ष्मत्वेन परिणामितं तद्विशिष्टमरूपरूपकल्पनमिति द्रष्टव्यम् । शौनकप्रश्ने दृश्यते—

तान्त्रिकः परिचर्य्यायां केवलस्य श्रियः पतेः ।
अङ्गोपाङ्गायुधाकल्पं कल्पयन्ति यथैव यैः ॥ (१२।११।२।३) इति ।

टीका च—'परिचर्य्यायामुपासनायां विषये केवलस्य चैतन्यस्य घनस्याङ्गानि पादादीनि, उपाङ्गानि गरुडादीनि, आयुधानि सुदर्शनादीनि, आकल्पाः कौस्तुभादयः तेषां द्वन्द्वैक्यं, तद्यथा कल्पयन्ति यैश्च तत्त्वैः कल्पयन्ति, तन्नोवर्ण्णयेति ।' इति । वैष्णवसम्मानितगोपालतापन्याञ्च दृश्यते ;—

सत्त्वरजस्तमइति अहङ्कारश्चतुर्भुजाः ।
पञ्चभूतात्मकं शङ्खं करे रजसि संस्थितम् ॥
बालस्वरूपमत्यन्तं मनश्चक्रं निगद्यते ।
आद्या माया भवेच्छार्ङ्गं पद्मं विश्वं करे स्थितम् ॥

८६। एतद्वै पौरुषं रूपं भूः पादौ द्यौः शिरोनभः।
नाभिः सूर्य्योऽक्षिणी नासे वायुः कर्णौ दिशः प्रभोः॥

आद्या विद्या गदा वेद्या सर्व्वदा मे करे स्थिता।
धर्म्मार्थकामकेयूरैर्दिव्यैर्दिव्यमहीरितैः॥
कण्ठस्तु निर्गुणं प्रोक्तं मान्यते आद्यया यया।
माला निगद्यते ब्रह्मन् तव पुत्रैस्तु मानदैः॥
कूटस्थं मत्स्वरूपञ्च किरीटं प्रवदन्ति माम्।
चरोत्तमं प्रस्फुरन्तं कुण्डलं युगलं स्मृतम्॥ इत्यादि।

अन्यत्र चान्यद्रूपं कल्पितम्; कल्पनाया अनित्यत्वात् स्वमनोविलासत्वात्। अतएव हि श्रीमद्रामानुजीयाः—"पुरुषस्य कौस्तुभाकारत्वं, प्रकृतेः श्रीवत्सरूपत्वं, महतो गदारूपत्वं, सात्त्विकाहङ्कारस्य शङ्खरूपत्वं, तामसाहङ्कारस्य शार्ङ्गत्वं, ज्ञानस्य खड्गरूपत्वम्, अज्ञानस्य तदाधारकत्वम्, मनसश्चक्रत्वं, ज्ञानेन्द्रियाणां शररूपत्वं, सूक्ष्मस्थूलभूतानां वनमालात्वम्" इति। 'सुदर्शनं मनस्तत्त्वमिति सहस्रनाम भाष्ये। धनुरिन्द्रियाहङ्काररूपं। चित्ततत्त्वरूपं पद्मम्। तच्च त्रैलोक्याख्यमिति विष्णुधर्म्मोत्तरे। शङ्खः भूताद्यहङ्कारः। कौमोदकी तु बुद्धिः।' इत्यादि मुक्ताफलटीकायाम्।

प्रथमन्तावत् स्थूलस्य विनिगमनमाह येन च सूक्ष्मस्य परिकल्पनं सुलभं स्यात् मायाद्यैरिति। मायाद्यैः प्रकृतिसूत्रमहदहङ्कारपञ्चतन्मात्रैः नवभिः तत्त्वैः सविकारमयः विकाराः एकादशेन्द्रियाणि पञ्चमहाभूतानीति षोड़श तन्मयः विराट् निर्म्मितः, यत्र विराजि सचित्के चेतनाधिष्ठिते भुवनत्रयं दृश्यते।

८६। एतदिति। एवत् वै पुरुषस्य वैराजस्य रूपम्—ईश्वरेणाधिष्ठितत्वात् तदभेदविवक्षया तत्स्वरूपमुच्यते। अङ्गकल्पनामाह—प्रभोः भूः पादौ, द्यौः शिरः, नभः नाभिः, सूर्य्यः अक्षिणी, वायुः नासे, दिशः कर्णौ। भूः पादावित्यादिभिः भूराद्यनुवादेन भगवत्पादादिभावना विधीयते।

८७ । प्रजापतिः प्रजननमपानो मृत्युरीशितुः ।
तद्बाहवो लोकपाला मनश्चन्द्रो भ्रुवौ यमः ॥
८८ । लज्जोत्तरोऽधरोलोभो दन्ता ज्योत्स्ना स्मयोभ्रमः ।
रोमाणि भूरुहा भूम्नो मेघाः पुरुषमूर्द्धजाः ॥
८९ । यावानयं वै पुरुषो यावत्या संस्थया मितः ।
तावानसावपि महापुरुषो लोकसंस्थया ॥
९० । कौस्तुभव्यपदेशेन स्वात्मज्योतिर्विभर्त्त्यजः ।
तत्प्रभाव्यापिनी साक्षात् श्रीवत्समुरसा विभुः ।
९१ । स्वमायां वनमालाख्यां नानागुणमयीं दधत् ।
वासश्छन्दोमयं पीतं ब्रह्मसूत्रं त्रिवृत्स्वरम् ॥

८७ । प्रजापतिरिति । ईशितुः प्रजापतिः प्रजननम्, मृत्युः अपानः पायुः, लोकपाला तद्बाहवः तस्य ईशितुर्बाहवः, चन्द्रः मनः, यमः भ्रुवौ ।

८८ । लज्जेति । लज्जा उत्तरः दन्तच्छदः, लोभः अधरः निम्न-दन्तच्छदः । ज्योत्स्ना दन्ताः, भ्रमः स्मयः, भूरुहाः वृक्षाः भूम्नः रोमाणि, मेघाः पुरुषमूर्द्धजाः पुरुषस्य केशाः ।

८९ । अनुक्तमन्यदप्येवमूह्यमित्याह यावानिति । यावान् अयं व्यष्टिपुरुषः स्वमानतः सप्तवितस्तिः, यावत्या संस्थया अवयवसन्निवेशेन मितः, लोकसंस्थया असौ अपि महापुरुषः तावान् ।

९० । भूषणादीन्याह कौस्तुभेति । अजः कौस्तुभव्यपदेशेन स्वात्म-ज्योतिः शुद्धजीवचैतन्यं विभर्त्ति । व्यापिनी तत्प्रभा तस्य कौस्तुभस्य प्रभा या—इन्द्रियद्वारा प्रकाशः—ताम् उरसा वक्षसा श्रीवत्सं विभुः विभर्त्ति ।

९१ । स्वमायामिति । वनमालाख्यां नानागुणमयीं स्वमायां, छन्दोमयं पीतं वासः, त्रिवृत्स्वरं प्रणवं ब्रह्मसूत्रं दधत् ।

९२ । बिभर्त्ति सांख्यं योगञ्च देवो मकरकुण्डले ।
मौलिं पदं पारमेष्ठ्यं सर्व्वलोकाभयङ्करम् ॥

९३ । अव्याकृतमनन्ताख्यमासनं यदधिष्ठितः ।
धर्म्मज्ञानादिभिर्युक्तं सत्त्वं पद्ममिहोच्यते ॥

९४ । ओजःसहोबलयुतं मुख्यतत्त्वं गदां दधत् ।
अपां तत्त्वं दरवरं तेजस्तत्त्वं सुदर्शनम् ॥

९५ । नभोनिभं नभस्तत्त्वमसिचर्म्म तमोमयम् ।
कालरूपं धनुः शार्ङ्गं तथा कर्म्ममयेषुधिम् ॥

९६ । इन्द्रियाणि शरानाहुराकूतीरस्य स्यन्दनम् ।
तन्मात्राण्यस्याभिव्यक्तिं मुद्रयार्थक्रियात्मताम् ॥

९२ । बिभर्त्तीति । देवः सांख्यं योगं च मकरकुण्डले, सर्व्वलोकाभयङ्करं पारमेष्ठ्यं पदं ब्रह्मलोकं मौलिं किरीटं बिभर्त्ति ।

९३ । अव्याकृतमिति । अव्याकृतं प्रधानम् अनन्ताख्यम् आसनम्, यत् अधिष्ठितः अधिष्ठाय स्थितः तत् आसनभूतं पद्मं धर्म्मज्ञानादिभिः युक्तं सत्त्वं सत्त्वगुणः इह उच्यते ।

९४ । ओजइति । ओजःसहोबलयुतं मुख्यतत्त्वं प्राणतत्त्वं गदाम्, अपां तत्त्वं दरवरं शङ्खं, तेजस्तत्त्वं सुदर्शनं दधत् ।

९५ । नभइति । नभोनिभं नभस्तत्त्वं तमोमयम् असिचर्म्म, कालरूपं शार्ङ्गं धनुः, तथा कर्म्ममयेषुधिं दधदिति शेषः ।

९६ । इन्द्रियाणीति । इन्द्रियाणि शरान्, आकूतीः क्रियाशक्तियुक्तं मनः अस्य स्यन्दनम्, तन्मात्राणि अस्य रथस्य अभिव्यक्तिं बहिःप्रकाशं, मुद्रया धृतया अर्थक्रियात्मतां वरदाभयदादिरूपत्वं बिभर्त्ति ।

९७। मण्डलं देवयजनं दीक्षा संस्कार आत्मनः ।
परिचर्य्या भगवत आत्मनो दुरितक्षयः ॥
९८। भगवान् भगशब्दार्थं लीलाकमलमुद्वहन् ।
धर्म्मं यशश्च भगवांश्चामरव्यजनेऽभजत् ॥
९९। आतपत्रन्तु वैकुण्ठं द्विजा धामाकुतोभयम् ।
त्रिवृद्वेदः सुपर्णाख्यो यज्ञं वहति पूरुषम् ॥
१००। अनपायिनी भगवती श्रीः साक्षादात्मनोहरेः ।
विष्वक्सेनस्तन्त्रमूर्त्तिर्विदितः पार्षदाधिपः ॥
नन्दादयोऽष्टौ द्वास्थाश्च तेऽणिमाद्या हरेर्गुणाः ॥
१०१। वासुदेवः सङ्कर्षणः प्रद्युम्नः पुरुषः स्वयम् ।
अनिरुद्ध इति ब्रह्मन् मूर्त्तिव्यूहोऽभिधीयते ॥

९७। मण्डलमिति। देवयजनं देवपूजाभूमिः मण्डलं सूर्य्यमण्डलम्, दीक्षा आत्मनः संस्कारः पूजायोग्यता साक्षात्प्राप्तियोग्यतेति श्रीमज्जीव, भगवतः परिचर्य्या आत्मनः स्वस्य दुरितक्षयः पापक्षयः ।

९८। भगवानिति। भगशब्दार्थम् ऐश्वर्य्यादिषाड्गुण्यं लीलाकमलं करस्थपद्मं भगवान् उद्वहन्, धर्म्मं यशः च चामरव्यजने भगवान् अभजत् ।

९९। आतपत्रमिति। अकुतोभयं वैकुण्ठं धाम आतपत्रम्, सुपर्णाख्यः गरुड़ाख्यः त्रिवृद्वेदः ऋग्यजुःसामरूपः यज्ञं पूरुषं विष्णुं वहति ।

१००। अनपायिनीति। साक्षात् आत्मनः हरेः अनपायिनी शक्तिः भगवती श्रीः, तन्त्रमूर्त्तिः पञ्चरात्राद्यागमरूपः पार्षदाधिपः विश्वक्सेनः विदितः, हरेः अणिमाद्याः गुणाः नन्दादयः अष्टौ द्वास्थाः द्वारपालाः ।

१०१। तस्यैव चतुर्व्यूहोपासनामाह वासुदेव इति। हे ब्रह्मन्,

१०२ । स विश्वस्तैजसः प्राज्ञस्तुरीय इति वृत्तिभिः ।
अर्थेन्द्रियाशयज्ञानैर्भगवान् परिभाव्यते ॥
१२।११।५—२२ ।

स्वयं पुरुषः वासुदेवः चित्तं महान्, सङ्कर्षणः अहङ्कारः, प्रद्युम्नः बुद्धिः, अनिरुद्धः मनः इति मूर्त्तिव्यूहः अभिधीयते । अधिभूतरूपेण महान्, अध्यात्मरूपेण चित्तम्, उपास्यरूपेण वासुदेवः, इत्येवमन्यच्च ।

१०२ । तस्यैवाध्यात्मभावेन चतुर्थोपासनामाह सइति । स भगवान् विश्वः, तैजसः, प्राज्ञः, तुरीयः इति वृत्तिभिः जाग्रदाद्यवस्थाभिः अर्थेन्द्रियाशयज्ञानैः अर्थाः वहिर्व्विषयाः जाग्रदवस्था, इन्द्रियं मनः तस्मिन् विलीनाः विषयाः स्वप्नावस्था, आशयः चेतः प्रपञ्चं विश्वं यस्मिन् एकीभूतम् सुषुप्तावस्था, ज्ञानम् एकात्मप्रत्ययसारं प्रपञ्चातीतावस्था इत्येतैः परिभाव्यते । परिभाव्यते इत्येतत्पदं सर्व्वत्र योजनीयम् । भूः पादाविति भावयेत्, द्यौः शिर इति भावयेत् इत्यादि । तत्र 'मन्त्रमूर्त्तिममूर्त्तकम्' इति न्यायात् सूक्ष्मत्वेन स्वरूपत्वेन चिन्तनमिति ध्येयम् ।

भगवन्निर्द्देशप्रधानेऽस्मिन्नध्याये परापरप्रकृतियुक्तं परब्रह्म जगज्जीवञ्च सर्व्वमात्मन्यन्तर्भूय विद्यमानमित्येतद्विशेषेण निरूपितम् । प्रथमं सर्व्वातीतं परं ब्रह्म, तदनन्तरं सर्व्वान्तर्यामी परमात्मा, तदनन्तरं सर्व्वान्तर्भावको भगवानुपास्यत्वेनोपासकैर्गृहीत इति क्रमसन्निवेशः ।

इति श्रीसात्त्वतसंहितोत्थायां व्याख्यानसहितायां
श्रीमद्गीताप्रपूर्त्तौ भगवन्निर्द्देशो नाम
चतुर्थोऽध्यायः ।

---

# पञ्चमोऽध्यायः।

## विषयिनिर्देशः।

१। अतः परं यदव्यक्तमव्यूढगुणबृंहितम्।
अदृष्टाश्रुतवस्तुत्वात् स जीवो यत् पुनर्भवः॥१।३।३२

१। जीवात्मा विषयी भगवतः परा प्रकृतिः। सएव ब्रह्मपरमात्मभगवन्निर्देशादनन्तरं निर्णेतव्यः। तत्रेदं प्रथमं विवेच्यम्—द्विविधौ हि देहौ जीवस्य शास्त्रनिर्दिष्टौ स्थूलः सूक्ष्मश्च। स्थूलस्य पुनरिहलोकावस्थानकाले स्थितिर्न तु प्रयाणकाले। प्रयाणकाले तु सूक्ष्मएव जीवसंज्ञया देहादपैति। अतएव जीवशब्देन जीवात्मा जीवोपाधिलिङ्गदेहश्चेत्युभयमेवाभिधीयते। मनोमय एवासौ लिङ्गदेहः, पञ्चज्ञानेन्द्रियाणि तु तस्यैव दर्शनश्रवणादिशक्तयः। अतएवाह श्रुतिः 'मनोऽस्य दैवं चक्षुः' 'मनसा ह्येव पश्यति मनसा शृणोति' इत्यादि। मनोमयत्वेनैव हि जीवस्य संसारे स्थितिः परलोके प्रयाणञ्च। अयं पक्षः श्रीमद्योगाचार्य्यस्य। सांख्यास्तु अहङ्कारं बुद्धावन्तर्भूय्यैकादशेन्द्रियाणि पञ्चतन्मात्राणि बुद्धिश्चेति सप्तदशावयवकं लिङ्गशरीरमित्याहुः। तेषामेव पक्षः संहितायामस्यां गृहीत इति लक्ष्यते। वस्तुतस्तु जीवस्यान्तःकरणोपाधिकत्वं सांख्या अन्ये च मन्यन्ते, तदेव च श्रीमद्योगाचार्य्यसम्मतमिति मनोमयएव लिङ्गदेह इति सिद्धान्तः समीचीनः। एवं सति सार्व्वकालिकानां पण्डितानां मतैनैक्यं भवति। आत्मा विज्ञानमय इति श्रौतसिद्धान्तश्चैवमेव सिद्ध्यति। जीवात्मा मानसक्रिययात्मानं नित्यं व्यनक्तीति मानसोपाधिक एव स ग्राह्यो ब्रह्मसम्पन्नत्वादन्यत्र। एवमेवहि सोऽत्र व्याख्यातः, अतइति। अतः—

२। यया सम्मोहितो जीव आत्मानं त्रिगुणात्मकम्।
परोऽपि मनुतेऽनर्थं तत्कृतञ्चाभिपद्यते ॥१।७।५।

३। स श्रेयसामपि विभुर्भगवान् यतोऽस्य
भावः स्वभावविहितस्य सतः प्रसिद्धिः।
देहे स्वधातुविगमेऽनुविशीर्य्यमाणे
व्योमेव तत्र पुरुषो न विशीर्य्यतेऽजः ॥२।६।४८

एतद्रूप भगवतीह्यरूपस्य चिदात्मनः।
मायागुणैर्विरचितं महदादिभिरात्मनि ॥ (१।३।३०)

इति स्थूलरूपात्परम् अन्यत् रूपं यत् अदृष्टाश्रुतवस्तुत्वात् दर्शनश्रवणातीतवस्तुत्वात् अव्यक्तं सूक्ष्मम्, अव्यूढ़गुणवृंहितम् अव्यूढ़ाः अपरिस्फुटाः शक्तिमात्रत्वेन विद्यमानाः गुणाः सृज्यशक्तयः तैः वृंहितं परिपुष्टं यत् मनोमयमिति यावत्, स जीवः; यत् यस्मात् मनोमयत्वात् पुनर्भवः पुनः पुनः जन्म लोकात् लोकान्तरप्राप्तिः।

२। जीवो हि स्वयं त्रिगुणातीतः। स तु मनसा पश्यन् शृण्वन् स्पृशन् जिघ्रन्, तत्तद्विषयाभिनिवेशवशात्तद्गुणैरुपरक्तो भवति। सुतरां त्रिगुणातीतोऽप्यात्मानं स त्रिगुणात्मकं मन्यते। विषयसम्बन्धवशादुत्पन्न एष मोहः विषयाणां भगवच्छक्तिकृतत्वात् तच्छक्तिसम्भूत इति सरलसिद्धान्तः। तमिममाश्रित्याह ययेति। यया मायया भगवच्छक्त्या सम्मोहितः स्वरूपावरणेन विच्छिन्नः जीवः परोऽपि त्रिगुणातीतः अपि आत्मानं त्रिगुणात्मकं मन्यते, तत्कृतं त्रिगुणकृतम् अनर्थं शरीरेन्द्रियवश्यतासाधककर्त्तृत्वादिकं च अभिपद्यते प्राप्नोति।

३। सर्व्वफलदातुर्भगवतो जीवस्यैहिकपारलौकिकसर्व्वफललाभः। स तु सम्भवति देहापगमेऽपि तस्य नित्यकालस्थितौ। तत्तथैवाभिदधाति सइति। अस्य भावस्वभावविहितस्य भावानां सृज्यशक्तीनां स्वभावेन स्वक्रियया विहितस्य व्यवस्थितस्य सतः कार्य्यस्य यतः भगवतः

४ । यदर्थेन विनामुष्य पुंस आत्मविपर्य्ययः ।
प्रतीयते उपद्रष्टुः स्वशिरश्छेदनादिकः ॥

५ । यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः ।
दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनोगुणः ॥

३।७।१०।११ ।

६ । एवं पराभिध्यानेन कर्त्तृत्त्वं प्रकृतेः पुमान् ।
कर्म्मसु क्रियमाणेषु गुणैरात्मनि मन्यते ॥३।२६।६ ।

प्रसिद्धिः निष्पत्तिः, स भगवान् श्रेयसाम् अपि विभुः दाता । योऽयं जीवः फलभोक्ता न स नश्येदित्याह—स्वधातुविगमे स्वारम्भकधातूनां भूतानां विगमे वियोगे सति अनुशीर्य्यमाणे अपि देहे व्योम इव पुरुषः जीवः न विशीर्य्यते न विनश्यति, यतः अजः न देहेन सह जातः ।

४ । त्रिगुणातीतोऽपि जीवो मनश्चक्षुषा भगवच्छक्तिरचितान् विषयानुपभुङ्क्ते, तेन च तदुपरक्तस्य तस्य त्रिगुणात्मकत्वाभिमान उपतिष्ठत इत्युक्तं ; कथं तत्सम्भवतीति दृष्टान्तेन प्रतिपादयति यदिति । यत् यस्मात् भगवच्छक्तिमायाहेतोः अर्थेन कारणेन प्रयोजनेन च विना अपि कालत्रयेऽपि यद्यपि तस्य सोऽर्थो नास्ति तथापि अमुष्य पुंसः जीवस्य—उपद्रष्टुः स्वप्नदर्शिनः स्वशिरश्छेदनादिकः यथा—तथा आत्मविपर्य्ययः स्वस्यान्यभावापन्नता—ज्ञानानन्दभ्रंश इति श्रीमद्विश्वनाथः—प्रतीयते ।

५ । दृष्टान्तान्तरमुपन्यस्यति यथेति । यथा जले प्रतिविम्बितस्य चन्द्रमसः चन्द्रस्य कम्पादिकः तत्कृतः जलोपाधिकृतः गुणः धर्म्मः, तथा अनात्मनः देहादेः गुणः धर्म्मः असन् अपि मृषा अपि द्रष्टुः तदभिमानिनः आत्मनः जीवस्य दृश्यते ।

६ । जीवस्य स्वस्यान्यथात्वेऽपि विषयसङ्गादन्यभावापन्नताप्रतीति-

७। भूतेन्द्रियान्तःकरणात् प्रधानाज्जीवसंज्ञितात्।
आत्मा तथा पृथक् द्रष्टा भगवान् ब्रह्मसंज्ञितः॥
३।२८।४१।

८। भूतैः पञ्चभिरारब्धे देहे देह्यबुधोऽसकृत्।
अहं ममेत्यसद्ग्राहः करोति कुमतिर्मतिम्॥३।३१।२९

९। देहेन जीवभूतेन लोकाल्लोकमनुव्रजन्।
भुञ्जान एव कर्म्माणि करोत्यविरतं पुमान्॥

रित्यस्य कारणं स्पष्टमभिदधाति एवमिति। एवं पराभिध्यानेन प्रकृत्यावेशेन परापरप्रकृत्योरविभक्तत्वाभिमननेन पुमान् जीवः प्रकृतेः गुणैः सृज्यशक्तिभिः क्रियमाणेषु कर्म्मसु आत्मनि कर्त्तृत्वं मन्यते।

७। परापरप्रकृतिभ्यामीश्वरस्तु पृथक्त्वेन द्रष्टव्य इत्याह भूतेति। भूतेन्द्रियान्तःकरणात् आत्मा परमात्मा पृथक्, प्रधानात् भगवदैश्वर्य्यरूपात् द्रष्टा अन्तर्यामी पृथक्, जीवसंज्ञितात् जीवात्मनः ब्रह्मसंज्ञितः भगवान् पृथक्।

८। एवमीश्वरात् पृथक्त्वे सिद्धे जीवस्य देहेऽहंबुद्धिरेव कुमतिरित्याह भूतैरिति। पञ्चभिः भूतैः आरब्धे देहे अबुधः अज्ञानः असद्ग्राहः असदाग्रहः, कुमतिः कुबुद्धिः देही जीवः असकृत् पुनः पुनः अहम् मम इति मतिं करोति।

९। मनोमयदेहेनास्य लोकात् लोकान्तरगमनं तत्र तत्र कर्म्मानुष्ठानञ्चाह देहेनेति। जीवभूतेन दर्शनादिशक्तियुक्तमनोमयेन देहेन---

संप्रसन्ने भगवति पुरुषः प्राकृतैर्गुणैः।
विमुक्तो जीवनिर्म्मुक्तो ब्रह्मनिर्व्वाणमृच्छति॥ (४।११।१४)

इत्यत्र गुणकार्य्यत्वेन देहोऽयं गृहीतः 'मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति।' (गी १५।७) इत्यनुशासनात्---लोकात् लोकम् 'ताभ्यां विश्वमेजत्' इति ऋगुक्तरीत्या अनुव्रजन् परिभ्रमन् पुमान् जीवः तत्त-

१० । जीवोऽस्यानुगतो देहो भूतेन्द्रियमनोमयः ।
तन्निरोधोऽस्य मरणमाविर्भावस्तु सम्भवः ॥
३।३१।४२।४३ ।

११ । स जन्मनोपशान्तात्मा निःसङ्गः समदर्शनः ।
ददर्श लोके विततमात्मानं लोकमात्मनि ॥

१२ । आत्मानं ब्रह्म निर्व्वाणं प्रत्यस्तमितविग्रहम् ।
अवबोधरसैकात्म्यमानन्दमनुसन्ततम् ॥४।१३।७।८।

लोकगतभोगान् भुञ्जानः एव अविरतं प्रतिनियतं कर्म्म करोति, न कुत्राप्यालस्येन समयमतिवाहयतीति भावः । न खलु वक्तव्यं नेदं मतमुपनिषत्सम्मतमिति । दृश्यते हि छान्दोग्ये—'स एष ये चैतस्मादर्व्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च' (१।३।७।६) इति—मनुष्यभोग्यलोकानां बहुत्वम् ।

१० । किंवा जीवात्मनोजन्ममरणं तदाह जीव इति । जीवः दर्शनादिशक्तियुक्तमनोमयदेहः अस्य जीवात्मनः अनुगतः अनुवर्त्ती सन् भूतेन्द्रियमनोमयः स्थूलभूतादियुक्तः देहः भोगायतनं भवति । तन्निरोधः तस्य देहस्य निरोधः कार्य्यायोग्यता अस्य जीवस्य मरणम्, आविर्भावस्तु तस्य पुनर्देहाकारेण प्रकाशः सम्भवः जन्म ।

११।१२ । ध्रुवपुत्त्रस्योत्कलस्य प्रत्यक्षानुभूत्या योगभूमौ जीवब्रह्मणोः परोक्षापरोक्षदर्शनं विवृणोति युग्मकेन स इति आत्मानमिति । जन्मना आजन्म उपशान्तात्मा शमप्रधानचित्तः, निःसङ्गः अनासक्तः, समदर्शनः ज्ञानैकाकारतया आत्मा तु सर्व्वत्र समः स्वस्वरूपेणैकः इति दृष्टिशीलः, स ध्रुवतनयः उत्कलः लोके सर्व्वत्र आत्मानं ज्ञानाकारेण विततं व्याप्तम्, आत्मनि आत्मचैतन्ये लोकं सर्व्वम्; अवबोधरसैकात्म्यम् एकस्वरूपत्वं यस्य तथाभूतम्, अनुसन्ततं सर्व्वत्रानुस्यूतम्,

१३ । एकः शुद्धः स्वयंज्योतिर्निर्गुणोऽसौ गुणाश्रयः ।
सर्व्वगोऽनावृतः साक्षी निरात्मात्मात्मनः परः ॥

१४ । यएवं सन्तमात्मानमात्मस्थं वेद पूरुषः ।
नाज्यते प्रकृतिस्थोऽपि तद्गुणैः स मयि स्थितः ॥

४।२०।७।८ ।

प्रत्यस्तमितविग्रहं निरुपाधिकम् आत्मानं स्वं निर्व्वाणं शान्तं ब्रह्म तेन अभिन्नं ददर्श । ज्ञानाकारेण सर्व्वत्रात्मदर्शनं परोक्षम्, आत्मनि सर्व्व-दर्शनमपरोक्षम् ; स्वरूपैक्येन ब्रह्मदर्शनं परोक्षम् ; ब्रह्मणि प्रत्यस्तमित-निखिलोपाधिकस्य तद्दर्शनमपरोक्षमिति ज्ञेयम् ।

१३ । जीवात्मनो देहयुक्तत्वमुक्त्वा सम्प्रति देहादस्य पार्थक्यं प्रद-र्शयति पृथुं प्रति भगवद्वाक्येन एकइति । आत्मा एकः देहो हि बाल-युवादिभेदादनेकः, आत्मा शुद्धः देहो हि मलिनः, आत्मा स्वयंज्योतिः चैतन्यस्वरूपः देहो हि जड़ः, आत्मा निर्गुणः प्राकृतिकगुणविरहितः देहो हि प्राकृतिकगुणयुक्तः, असौ आत्मा गुणाश्रयः गुणानां सृज्य-शक्तीनां प्रकाशभूमिः देहोहि गुणाश्रितः, आत्मा सर्व्वगः चैतन्यत्वात् सर्व्वत्राव्याहतगतिः देहोहि परिच्छिन्नः स्थाने बद्धः, आत्मा अनावृतः देहगेहादिभिरनाच्छादितः देहो हि आवृतः, आत्मा साक्षी द्रष्टा देहो हि दृश्यः, आत्मा निरात्मात्मा निरात्मनः अचेतनस्य देहस्य आत्मा चेतयिता, अतएव स आत्मनः देहात् परः ततो भिन्नः । एवं जीवस्य देहेन नवधा वैलक्षण्यं प्रदर्शितम् ।

१४ । एवं देहादात्मनः पार्थक्यज्ञाने किं भवति तदाह यइति । यः पुरुषः जीवः एवं सन्तं भावापन्नम् आत्मस्थं स्वस्मिन् स्थितम् आत्मानं वेद स प्रकृतिस्थः अपि तद्गुणैः तद्विकारैः न अज्यते न लिप्यते, स मयि अन्तर्यामिणि स्थितः ।

१५ । परित्यक्तगुणः सम्यग्दर्शनो विशदाशयः ।
शान्तिं मे समवस्थानं ब्रह्मकैवल्यमश्नुते ॥

१६ । उदासीनमिवाध्यक्षं द्रव्यज्ञानक्रियात्मनाम् ।
कूटस्थमिममात्मानं यो वेदाप्नोति शोभनम् ॥

१७ । भिन्नस्य लिङ्गस्य गुणप्रवाहो
द्रव्यक्रियाकारकचेतनात्मनः ।
दृष्टासु सम्पत्सु विपत्सु सूरयो
न विक्रियन्ते मयि बद्धसौहृदाः ॥

४।२०।१०--१२ ।

१५ । परित्यक्तेति । परित्यक्तगुणः गुणसम्बन्धविरहितः, सम्यग्दर्शनः, विशदाशयः प्रसन्नमनाः सन् मे मम समवस्थानं स्वस्वरूपेणावस्थितिः एव ब्रह्मकैवल्यं ब्रह्माभिन्नत्वेन केवलीभावः तादृशीं शान्तिम् अश्नुते अनुभवति ।

१६ । उदासीनमिति । द्रव्यज्ञानक्रियात्मनां देहज्ञानकर्म्मेन्द्रियमनसाम् उदासीनं निर्लिप्तम् अध्यक्षम् इव स्थितं कूटस्थम् अविकारिणम् आत्मानं यः वेद जानाति स शोभनम् अध्यात्मलक्ष्मीं—सोऽभवं सोऽभयम् इति पाठे मोक्षम्—आप्नोति ।

१७ । कथं वा जीवात्मनोऽविकारित्वं सम्भवति तदाह भिन्नस्येति । द्रव्यक्रियाकारकचेतनात्मनः द्रव्याद्यात्मकस्य भिन्नस्य लिङ्गस्य देहस्य गुणप्रवाहः संसारः, न तु आत्मन इति शेषः। अतः मयि अन्तर्यामिणि न तु देहे बद्धसौहृदाः सूरयः विवेकिनः दृष्टासु प्राप्तासु सम्पत्सु विपत्सु देहाधिष्ठितत्वात् न विक्रियन्ते न विकारं प्राप्नुवन्ति। तेषां देहे स्थित्वापि न देहे स्थितिर्भगवत्येव, अतो देहकृतविकारेणास्पृष्टास्ते ।

१८। यदा रतिर्ब्रह्मणि नैष्ठिकी पुमा-
नाचार्य्यवान् ज्ञानविरागरंहसा ।
दहत्यवीर्य्यं हृदयं जीवकोशं
पञ्चात्मकं योनिमिवोत्थितोऽग्निः ॥

१९। दग्धाशयो मुक्तसमस्ततद्गुणो
नैवात्मनो बहिरन्तर्विचष्टे ।
परात्मनोर्यद्व्यवधानं पुरस्तात्
स्वप्ने यथा पुरुषस्तद्विनाशे ॥

१८। दर्शनादिशक्तियुक्तमनोमयदेहेन विषयान् ध्यायति जीवः। यदा तु ब्रह्मानुरागोद्दीप्तहृदयः, तदा यन्मनो विषयानुबन्ध्यासीत् तस्य ब्रह्मानुरागेण तिरोधानं दैवचक्षुष्ट्वलाभश्च पूर्व्वस्वभावपरित्यागात्। दग्धमित्युपचारस्तु तन्निमित्तमेव, अन्यथा 'मनसैवाप्तव्यम्' 'दृश्यते त्वग्र्यया बुद्ध्या' 'हृदा मनीषा मनसाभिकॢप्तः' इत्याद्याः श्रुतयो न सिद्ध्यन्ति। हृदयस्य पूर्व्वस्वभावपरित्यागरूपदाहं प्रदर्शयति यदेति। यदा ब्रह्मणि नैष्ठिकी निष्ठां प्राप्ता स्थिरतरा रतिः भवति, तदा पुमान् जीवः आचार्य्यवान् ज्ञानदीपदपरमगुरुसहायः सन् ज्ञानविरागरंहसा ज्ञानवैराग्यतीव्रवेगेन अवीर्य्यं निर्व्वासनं पुनः प्ररोहाक्षमं पञ्चात्मकं पञ्चमहाभूतप्रधानं यद्वा अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च तदात्मकम् जीवकोशं जीवावरकं हृदयं—उत्थितः प्रज्वलितः अग्निः योनिम् अरणिम् इव—दहति विषयानुबन्धितामस्य ह्रापयति।

१९। एवं हृदयस्य विषयसम्बन्धपरिहारेण भगवदनुरागोद्दीप्तत्वे तेनाव्यवहितसम्बन्धो जीवस्य भवतीत्याह दग्धेति। दग्धाशयः दग्धः आशयः हृदयम् उपाधिः यस्य, अतएव मुक्तसमस्ततद्गुणः मुक्ताः समस्ताः तद्गुणाः कर्त्तृत्वादयः येन स जीवः आत्मनः बहिः प्रपञ्चम् अन्तः सुख-

२० । आत्मानमिन्द्रियार्थञ्च परं यदुभयोरपि ।
सत्याशय उपाधौ वै पुमान् पश्यति नान्यदा ॥

२१ । निमित्ते सति सर्व्वत्र जलादावपि पूरुषः ।
आत्मनश्च परस्यापि भिदां पश्यति नान्यदा ॥

४।२२।२६—२८ ।

२२ । तत्त्वं नरेन्द्र जगतामथ तस्थुषाञ्च
देहेन्द्रियासुधिषणात्मभिरावृतानाम् ।
यः क्षेत्रवित्तपतया हृदि विष्वगाविः
प्रत्यक् चकास्ति भगवांस्तमवेहि सोऽस्मि ॥

४।२२।३७ ।

दुःखादिकं न विचष्टे न पश्यति । कथं न पश्यति ? पुरस्तात् पूर्व्वं यत् परात्मनोः परः परमात्मा आत्मा जीवात्मा तयोः व्यवधानं व्यवहितसम्बन्धः आसीत्, तद्विनाशे तस्य व्यवधानस्य विनाशे—स्वप्ने यथा पुरुषः मनःकल्पितवस्तुजातं पश्यति स्वप्नभङ्गे पुनर्न पश्यति—तथा नान्यत्किञ्चन पश्यति अव्यवहितं परमात्मानमेव पश्यतीत्यर्थः ।

२० । विषयप्रवणहृदयोपाधिरेव व्यवधायक आसीदिति स्पष्टमभिदधाति आत्मानमिति । आत्मानं स्वम्, इन्द्रियार्थं भोग्यं च एतदुभयोः अपि यत् परम् अतीतम् सुखदुःखञ्च उपाधौ आशये हृदये सति पुमान् जीवः पश्यति, अन्यदा तदपगमे न पश्यति ।

२१ । तदेव दृष्टान्तमुखेन प्रतिपादयति निमित्त इति । सर्व्वत्र जलादौ निमित्ते सति अपि पुरुषः यथा बिम्बप्रतिबिम्बयोः भिदां भिन्नत्वं पश्यति, अन्यदा जलाद्यभावे न, तथा आत्मनः प्रतिबिम्बस्थानीयस्य, परस्य परमात्मनः बिम्बस्थानीयस्य, हृदयोपाधौ निमित्ते सति भिदां पश्यति, न तदपगमे ।

२२ । तदेवमव्यवहितसम्बन्धमुक्त्वा जीवात्मपरमात्मनोः नियम्य-

२३। तस्यानया भगवतः परिकर्म्मशुद्ध-
सत्त्वात्मनस्तदनुसंस्मरणानुपूर्त्त्या।
ज्ञानं विरक्तिमदभून्निशितेन येन
चिच्छेद संशयपदं निजजीवकोशम् ॥४।२३।११

२४। एवं स वीरप्रवरः संयोज्यात्मानमात्मनि।
ब्रह्मभूतो दृढं काले तत्याज स्वं कलेवरम् ॥४।२३।१३

नियन्त्रोरेकतरस्यान्यस्यैकान्ताधीनतया पुनरभिन्नतया स्थितिमाह पृथुं प्रति सनत्कुमारवाक्येन तत्त्वमिति। हे नरेन्द्र, तत् तस्मात् अनात्मरतेरनर्थहेतोः त्वं जगतां जङ्गमानाम् अथ तस्थुषां स्थावराणां देहेन्द्रियासुधिषणात्मभिः देहः च इन्द्रियाणि च असवः प्राणाः च धिषणा बुद्धिः च आत्मा अहंभावः च तैः आवृतानां च हृदि यः क्षेत्रवित्तपतया क्षेत्रविदं जीवं तपति नियमयति इति क्षेत्रवित्तपः तस्य भावः क्षेत्रवित्तपता तया अन्तर्यामिरूपेण विष्वक् व्याप्तित्वेन, आविः प्रत्यक्षत्वेन, प्रत्यक् आन्तरत्वेन चकास्ति प्रकाशते तम् अवेहि,—सोऽस्मि इति नियम्यस्य नियन्तुः सम्यगधीनतयाऽभेदात्, 'तदंशत्वेन नित्यतदधिष्ठानत्वेन' इति श्रीमज्जीवः। सोऽस्ति इति पाठे स एव एकः अस्ति क्षेत्रवित्तपतयेति शेषः।

२३। संशयपदजीवकोशच्छेदनमाह तस्येति। भगवतः परिकर्म्मशुद्धसत्त्वात्मनः परिकर्म्मणा परिचर्य्यया शुद्धसत्त्वः आत्मा मनो यस्य तस्य राज्ञः तदनुस्मरणानुपूर्त्त्या तस्य भगवतः अनुस्मरणेन निरवच्छेदस्मरणेन अनुपूर्त्तिः संपूर्त्तिः पूर्णताप्तिः यस्याः तथाभूतया अनया भक्त्या विरक्तिमत् वैराग्ययुक्तं ज्ञानम् अभूत्, निशितेन तीक्ष्णेन येन ज्ञानेन संशयपदं सन्देहास्पदं निजजीवकोशं स्वस्य जीवकोशं हृदयं चिच्छेद, संशयनिरसनेन तन्निरास इति फलितार्थः।

२४। जीवात्मपरमात्मनोरेकीकरणेन तनुत्यागोहि योगिनो

२५ । प्राणेन्द्रियमनोधर्म्मानात्मन्यध्यस्य निर्गुणः ।
शेते कामलवान् ध्यायन् ममाहमिति कर्म्मकृत् ॥
२६ । यदात्मानमविज्ञाय भगवन्तं परं गुरुम् ।
पुरुषस्तु विषज्जेत गुणेषु प्रकृतेः स्वदृक् ॥
२७ । गुणाभिमानी स तदा कर्म्माणि कुरुतेऽवशः ।
शुक्लं कृष्णं लोहितं वा यथा कर्म्माभिजायते ॥

४।२९।२५—२७ ।

योगस्य पूर्णतेत्याह पृथोः स्वानुष्ठानेन एवमिति । एवं स वीरप्रवरः आत्मजयात् शूरश्रेष्ठः आत्मानं नियम्यम् आत्मनि नियन्तरि परमात्मनि दृढ़ं संयोज्य ब्रह्मभूतः ब्रह्मणा एकीभूतः स्वं कलेवरं देहं तत्याज । एवं हि षष्ठे दधीचस्तनुत्यागः—

एवं कृतव्यवसितो दध्यङ्ङाथर्व्वणस्तनुम् ।
परे भगवति ब्रह्मण्यात्मानं सन्नयन् जहौ ॥ (६।१०।११) इति ।

सन्नयन् एकीकुर्व्वन् ।

२५ । विषयासक्तानां जीवानां गतिं वक्तुमुपक्रमते प्राणेति । प्राणेन्द्रियमनोधर्म्मान् अशनापिपासादीन् प्राणधर्म्मान्, अन्धत्वादीन् इन्द्रियधर्म्मान्, कामादीन् मनोधर्म्मान् निर्गुणोऽपि स्वयम् आत्मा गुणातीतोऽपि आत्मनि स्वस्मिन् अध्यास्य आरोप्य कर्म्मकृत् स मम अहम् इति कामलवान् विषयसुखलेशान् ध्यायन् चिन्तयन् शेते ।

२६।२७ । ततः किं भवति तदाह युग्मकेन यदेति गुणेति । यदा आत्मानं चैतन्यस्वरूपं भगवन्तं परं गुरुम् अविज्ञाय स्वदृक् प्रकाशस्वभावोऽपि पुरुषः जीवः तु प्रकृतेः गुणेषु विकारेषु विषज्जते आसक्तो भवति, तदा स गुणाभिमानी तत्तद्विकाराः आत्मनः इति मननपरः अवशः सन् कर्म्माणि कुरुते शुक्लं सात्त्विकं, कृष्णं तामसं, लोहितं राजसं कर्म्म यथा तथा जायते तत्तत्प्रधानलोकेषु । यथात्रैव—

२८। तथा कामाशयो जीव उच्चावचपथा भ्रमन् ।
उपर्य्यधो वा मध्ये वा याति दिष्टं प्रियाप्रियम् ॥
४।२६।३१ ।

२९। एवं पञ्चविधं लिङ्गं त्रिवृत् षोड़शविस्तृतम् ।
एष चेतनया युक्तो जीव इत्यभिधीयते ॥४।२९।७४

शुक्लान् प्रकाशभूयिष्ठान् लोकानाप्नोति कर्हिचित् ।
दुःखोदर्कान् क्रियायासान् तमःशोकोत्कटान् क्वचित् ॥ (४।२९।२८) इति ।

जन्म च तत्र तत्र कार्य्यानुसार्य्येव—

क्वचित् पुमान् क्वचिच्च स्त्री क्वचिन्नोभयमन्धधीः ।
देवो मनुष्यस्तिर्य्यग्वा यथाकर्म्मगुणं भवः ॥ (४।२९।२९) इति ।

तत्र तत्र सुखदुःखप्राप्तिश्च—

क्षुत्परीतो यथा दीनः सारमेयो गृहं गृहम् ।
चरन् विन्देत यद्दिष्टं दण्डमोदनमेव वा ॥ (४।२९।३० ) इति ।

२८। जीवस्य विश्वभ्रमणं भोगञ्च स्पष्टवाक्येनाह तथेति। कामाशयः कामव्याप्तः आशयः यस्य विविधाभिलाषानुविद्धहृदयः जीवः तथा पूर्व्वोक्तेन प्रकारेण उच्चावचपथा उच्चनीचमार्गेण देवयानपितृयाणेन भ्रमन् उपरि अधः मध्ये वा दिष्टं कर्म्मानुरूपं प्रियाप्रियं याति प्राप्नोति ।

२९। जीवोऽपि—

यथेमेऽविकृताभावास्तथा ते विकृतैः सह ।
नानावीर्य्याः पृथग्भूता विराज जनयन्ति हि ॥ (१०।३।१५)

इत्येवं विराड्वदित्याह एवमिति। एवं पञ्चविधं पञ्चतन्मात्रात्मकं त्रिवृत् त्रिगुणं षोड़शविस्तृतं षोड़शविकाराः एकादशेन्द्रियाणि पञ्चमहाभूतानि च तैः विस्तृतं विस्तारं प्राप्तं लिङ्गम् अहङ्करणम्। एष संघातः चेतनायुक्तः बुद्ध्या सम्मिलितः जीवः इति अभिधीयते। यद्य-

३० । तावानयं व्यवहारः सदाविः
क्षेत्रज्ञसाक्ष्यो भवति स्थूलसूक्ष्मः ।
तस्मान्मनोलिङ्गमदो वदन्ति
गुणागुणत्वस्य परावरस्य ॥५।११।७ ।

यद्यहङ्कारं बुद्धावन्तर्भूयैकादशेन्द्रियाणि, तन्मात्राणि बुद्धिश्चेति सप्तदशाव-यवः लिङ्गदेह एव जीव इति व्यवहारः, तथापि—

जगृहे पौरुषं रूपं भगवान् महदादिभिः ।
सम्भूतं षोड़शकलमादौ लोकसिसृक्षया ॥ (१।३।१)

इत्यत्र स्थूलसूक्ष्मावयवयुक्तो यथा विराडुक्तः, तथात्रापि ।

अनेन पुरुषो देहानुपादत्ते विमुञ्चति ।
हर्षं शोकं भयं दुःखं सुखं चानेन विन्दति ॥
यथा तृणजलूकेयं नापयात्यपयाति च ।
न त्यजेन्म्रियमाणोऽपि प्राग्देहाभिमतिं जनः ॥
यावदन्यं न विन्देत व्यवधानेन कर्म्मणाम् ।
मनएव मनुष्येन्द्र भूतानां भवकारणम् ॥ (४।२९।७५—७७)

इत्येतत् सर्व्वं बृहदारण्यकोक्तं 'तद्यथा तृणजलायुका' इत्याद्यनुरूपम् ।

यथानुमीयते चित्तमुभयैरिन्द्रियेहितैः ।
एवं प्राग्देहजं कर्म्म लक्ष्यते चित्तवृत्तिभिः ॥
नानुभूतं क्वचानेन देहेनादृष्टमश्रुतम् ।
कदाचिदुपलभ्येत यद्रूपं यादृगात्मनि ॥
तेनास्य तादृशं राजन् लिङ्गिनो देहसम्भवम् ।
श्रद्धत्स्वाननुभूतोऽर्थो न मनः स्प्रष्टुमर्हति ॥
मनएव मनुष्यस्य पूर्व्वरूपाणि शंसति ।
भविष्यतश्च भद्रं ते तथैव न भविष्यतः ॥ (४।२९।६३—६६)

इत्येतत् 'लिङ्ग' मनो यत्र निषक्तम्' इत्येतदर्थानुसारि ।

३० । स्थूलसूक्ष्मादिकं सर्व्वं स जीवो मनसा पश्यति मन एव च बन्धमोक्षकारणमित्याह तावानिति । स्थूलसूक्ष्मः तावान् समग्रः अयम् आविः प्रकाशमानः व्यवहारः प्रापञ्चिकविषयः सदा क्षेत्रज्ञसाक्ष्यः

३१ । क्षेत्रज्ञ एता मनसो विभूती-
जींवस्य मायारचितस्य नित्याः ।
आविर्हिताः क्वापि तिरोहिताश्च
शुद्धोविचष्टे ह्यविशुद्धकर्त्तुः ॥५।११।१२ ।

३२ । यथाज्ञस्तमसायुक्त उपास्ते व्यक्तमेव हि ।
न वेद पूर्व्वमपरं नष्टजन्मस्मृतिस्तथा ॥

३३ । पञ्चभिः कुरुते स्वार्थान् पञ्च वेदाथ पञ्चभिः ।
एकस्तु षोड़शेन त्रीन् स्वयं सप्तदशोऽश्नुते ॥

क्षेत्रज्ञस्य दृश्यः भवति । तस्मात् अदः मनः परावरस्य परस्य सूक्ष्मस्य अवरस्य स्थूलस्य च गुणागुणत्वस्य गुणत्वं गुणाभिमानित्वम् अगुणत्वं गुणविरहितत्वं तस्य लिङ्गं कारणम् ।

३१ । जीवात्मनोऽन्तःकरणवृत्तिसाक्षित्वमाह क्षेत्रज्ञ इति। मायारचितस्य जीवस्य जीवोपाधेः अविशुद्धकर्त्तुः मनसः अन्तःकरणस्य क्वापि जाग्रत्स्वप्नयोः आविर्हिताः आविर्भूताः क्वापि सुषुप्तौ तिरोहिताः एताः प्रसिद्धाः नित्याः प्रवाहरूपेणाविच्छिन्नाः विभूतीः वृत्तीः क्षेत्रज्ञः जीवात्मा विचष्टे पश्यति ।

३२ । यदि वर्त्तमानजन्मनोऽपि पूर्व्वं जन्मासीत् कथं तन्न जीवो जानाति तत्कारणमाह यथेति । तमसा निद्रया युक्तः यथा, तथा अज्ञः जीवः नष्टजन्मस्मृतिः व्यक्तं वर्त्तमानं देहं हि उपास्ते सेवते, न पूर्व्वम् अपरं भावि देहं वेद जानाति ।

३३ । इन्द्रियैस्तस्य विषयोपादानमाह पञ्चभिरिति । पञ्चभिः कर्म्मेन्द्रियैः स्वार्थान् ग्रहणादीन् कुरुते, अथ पञ्चभिः ज्ञानेन्द्रियैः पञ्च शब्दादीन् वेद, षोड़शेन मनसा स्वयम् एकः तु सप्तदशः षोड़शोपाध्यन्तर्गतोऽपि त्रीन् ज्ञानकर्म्मेन्द्रियमनोविषयान् अश्नुते प्राप्नोति ।

३४ । तदेतत् षोड़शकलं लिङ्गं शक्तित्रयं महत् ।
धत्तेऽनु संसृतिं पुंसि हर्षशोकभयार्त्तिताम् ॥
३५ । देह्यज्ञोऽजितषड्वर्गो नेच्छन् कर्म्माणि कार्य्यते ।
कोशकार इवात्मानं कर्म्मणाच्छाद्य मुह्यति ॥
३६ । न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृत् ।
कार्य्यते ह्यवशः कर्म्म गुणैः स्वाभाविकैर्बलात् ॥
३७ । लब्ध्वा निमित्तमव्यक्तं व्यक्ताव्यक्तं भवत्युत ।
यथायोनि यथावीजं स्वभावेन बलीयसा ॥

३४ । अस्य लिङ्गदेहस्यैव संसारकारणत्वमाह तदिति । तदेतत् शक्तित्रयं सत्त्वादिशक्तित्रयकार्य्यं महत् अनादि षोड़शकलम् एकादशेन्द्रियाणि पञ्चतन्मात्राणीति षोड़शांशं लिङ्गं लिङ्गशरीरं पुंसि जीवे अनु अन्वनु हर्षशोकभयार्त्तितां हर्षशोकभयाकुलितां संसृतिं संसारं धत्ते ।

३५ । कथं तस्यैवं भवति तदाह देहीति । देही जीवः अज्ञः अजितषड्वर्गः अनभिभूताः षट् कामादयो येन तथाभूतः नेच्छन् अनिच्छन्नपि कर्म्माणि कार्य्यते गुणैरिति शेषः । कोशकारः कीट इव आत्मानं कर्म्मणा स्वकृत्येन आच्छाद्य मुह्यति निर्गमोपायं न जानाति ।

३६ । अनिच्छन्नपि जीवः कैः कर्म्माणि कार्य्यते तदाह न हीति । कश्चित् जीवः न हि क्षणम् अपि जातु कदाचित् अकर्म्मकृत् तिष्ठति । अवशः परतन्त्रः सन् स्वाभाविकैः स्वभावसिद्धैः गुणैः रागादिभिः बलात् कर्म्म कार्य्यते ।

३७ । जीवस्य मातृपितृसदृशो देहो भवतीत्याह लब्ध्वेति । अव्यक्तम् अतिसूक्ष्मम्—अदृष्टमिति व्याख्यातारः—निमित्तं कारणं लब्ध्वा बलीयसा स्वभावेन यथायोनि उत यथावीजं व्यक्ताव्यक्तं स्थूलसूक्ष्मम् शरीरं भवति ।

३८। एष प्रकृतिसङ्गेन पुरुषस्य विपर्य्ययः ।
आसीत् सएव नचिराद्दीशसङ्गाद्विलीयते ॥

६।१।४९—५५ ।

३९। एष नित्योऽव्ययः सूक्ष्म एष सर्व्वाश्रयः स्वदृक् ।
आत्ममायागुणैर्विश्वमात्मानं सृजते प्रभुः ॥

४०। न ह्यस्यास्ति प्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा ।
एकः सर्व्वधियां द्रष्टा कर्त्तॄणां गुणदोषयोः ॥

३८। तस्य बन्धस्य मुक्तेश्च कारणमाह एष इति। प्रकृतिसङ्गेन पुरुषस्य जीवस्य एष विपर्य्ययः स्वरूपविच्युतिः आसीत्; ईशसङ्गात् परमेशानुरागात् स एव विपर्य्ययः नचिरात् अविलम्बेन विलीयते विनष्टः भवति।

३९। जीवस्य स्वगतस्वरूपोल्लेखादनन्तरं परमेश्वरकृतं तस्य जीवत्वमित्याह एष इति। एष जीवः नित्यः; कथम्? अव्ययः अपचयशून्यः; तत् कुतः? सूक्ष्मः जन्मादिशून्यः; तच्च कुतः? सर्व्वाश्रयः जन्मादिमतः देहादेः आश्रयः न तु देहादिरूपः, अतः स्वदृक् स्वप्रकाशः; कुतोऽस्य प्रभवः? प्रभुः परमेश्वरः आत्ममायागुणैः स्वशक्त्या विश्वं जगत् आत्मानं जीवात्मानं सृजते व्यक्तीकरोति। पद्यमिदं समग्रं ब्रह्मैक्यमाश्रित्य श्रीमता स्वामिना जीवपक्षे, श्रीमता जीवेन परमात्मपक्षे व्याख्यातम्, वयन्तु मध्यपथमाश्रितवन्तः, श्लोकाक्षरानुवर्त्तनेन तथैव स्फुटभासमानत्वात्।

४०। प्रियोऽयमप्रियोऽयं स्वोऽयं परोऽयमिति दृष्टिर्गुणकृतपार्थक्यप्रतिभासात्, आत्मनस्तु स्वरूपतः सदैकरूपत्वम्। एवं सति तस्य विचित्रबुद्धीनां सुहृदादिनां द्रष्टृत्वमात्रं सिद्ध्यति। तदेवाह न हीति। अस्य जीवात्मनः न कश्चित् अतिप्रियः, न कश्चित् अप्रियः, न कश्चित्

४१। नादत्त आत्मा हि गुणं न दोषं न क्रियाफलम्।
उदासीनवदासीनः परावरदृगीश्वरः॥

६।११६।६—११।

४२। न श्रोता नानुवक्तायं मुख्योऽप्यत्र महानसुः।
यस्त्विहेन्द्रियवानात्मा स चान्यः प्राणदेहयोः॥

४३। भूतेन्द्रियमनोलिङ्गान् देहानुच्चावचान् विभुः।
भजत्युत्सृजति ह्यन्यस्तच्चापि स्वेन तेजसा॥

-स्वः आत्मनीनः, न कश्चित् परः अपि वा। स एकः सुहृदादिसङ्ग-रहितः गुणदोषयोः कर्त्तॄणां मित्रादीनां सर्व्वधियां विचित्रबुद्धीनां द्रष्टा।

४१। जीवस्य सम्यगपारतन्त्र्यमाह नादत्त इति। आत्मा जीवात्मा गुणं सुखं दोषं दुःखं, क्रियाफलं च राज्यादिकं न आदत्ते; परावरदृक् परस्य कारणस्य अवरस्य कार्य्यस्य च साक्षी न तु भोक्ता, अतएव उदासीनवत् आसीनः, ईश्वरः देहादिपारतन्त्र्यशून्यः।

४२। एवं जीवस्योदासीनवत्त्वं सिद्धं न तु सर्व्वथोदासीनत्वं, सुतरां न तस्य द्रष्टृत्वश्रोतृत्ववक्तृत्वादेः परिहाणिः, सएव हि इन्द्रिय-योगेन वक्ति, शृणोति, पश्यति। एतदेवाह न श्रोतेति। अत्र महान् सर्व्वेन्द्रियचेष्टाहेतुः मुख्यः असुः प्राणः अपि न श्रोता न अनुवक्ता; यः इन्द्रियवान् आत्मा, स च प्राणदेहयोः अचेतनयोः अन्यः सचेतनः। अतएव स एव हि श्रोता वक्तेति निर्गलितार्थः।

४३। भूतेन्द्रियसंयोगवियोगौ तस्यान्तर्निहितबलेन सिद्ध्यत इत्याह भूतेति। विभुः समर्थः विविधभावापन्नः स अन्यः देहेभ्यः भूतेन्द्रियमनोलिङ्गान् भूतेन्द्रियमनोभिर्लिङ्ग्यन्ते लक्ष्यन्ते इति तथा तान् उच्चावचान् देहान् भजति उत्सृजति, तत् च भजनं उत्सृजनं स्वेन

४४ । यावल्लिङ्गान्वितो ह्यात्मा तावत् कर्म्मनिबन्धनम् ।
ततो विपर्य्ययः क्लेशो मायायोगोऽनुवर्त्तते ॥
७।२।४५—४७ ।

४५ । कर्म्माण्यारभते देही देहेनात्मानुवर्त्तिना ।
कर्म्मभिस्तनुते देहमुभयं त्वविवेकतः ॥७।७।४७ ।

४६ । जीवराशिभिराकीर्ण आण्डकोशाङ्घ्रिपो महान् ।
तन्मूलत्वादच्युतेज्या सर्व्वजीवात्मतर्पणम् ॥
७।१४।३६ ।

तेजसा अन्तर्निहितबलेन—'सर्व्वस्वरूपत्वेनोपासितस्य भगवतस्तेजसा' इति श्रीमज्जीवः । न खलु जीवस्यान्तर्निहितं बलं भगवन्निरपेक्षमिति तत्त्वम् ।

४४ । यद्यात्मनोऽन्तर्निहितबलेन देहधारणं देहोत्सृजनञ्च सिद्ध्यति कथं तर्ह्यस्ति तस्य बन्धनं, तदाह यावदिति । यावत् हि आत्मा लिङ्गान्वितः मनोमयलिङ्गशरीरेण युक्तः तावत् कर्म्मनिबन्धनम् । ततः कर्म्मनिबन्धनात् विपर्य्ययः देहधर्म्माभिनिवेशः, क्लेशः, मायायोगः मायया योगः तत्कर्म्मसम्बन्धः अनुवर्त्तते । आत्मनोऽन्तर्निहितबलसत्त्वेऽपि यावद्देहे तस्य वासः, तावद्भोजनपानादि सर्व्वमनुवर्त्तते तेन च स बद्धस्तिष्ठतीति फलितार्थः ।

४५ । जीवः स्वानुवर्त्तिना देहेन कर्म्माण्यनुष्ठाय तैः कर्म्मभिः पुनर्देहवान् भवति । उभयमेतदविवेकफलमित्याह कर्म्माणीति । आत्मानुवर्त्तिना स्वानुगामिना देहेन देही कर्म्माणि आरभते, कर्म्मभिः देहं तनुते निर्म्माति, उभयम् एतत् तु अविवेकतः स्वाज्ञानतः ।

४६ । जगदिदं समस्तं जीवैराकीर्णम् । केन पुनस्तेषां स्वस्य च तर्पणं भवति तदाह जीवेति । महान् आण्डकोषाङ्घ्रिपः आण्ड-कोशः ब्रह्माण्डकोशः एव अङ्घ्रिपः तरुः जीवराशिभिः आकीर्णः व्याप्तः ।

४७। यतोयतो धावति दैवचोदितं
मनो विकारात्मकमाप पञ्चसु ।
गुणेषु माया रचितेषु देह्यसौ
प्रपद्यमानः सह तेन जायते ॥

४८। ज्योतिर्यथैवोदकपार्थिवेष्वदः
समीरवेगानुगतं विभाव्यते ।

तन्मूलं तस्य वृक्षस्य मूलम् अच्युत इति शेषः, सुतरां अच्युतेज्या भगवदर्च्चना सर्व्वजीवात्मतर्पणं सर्व्वेषां जीवानाम् आत्मनः स्वस्य च तर्पणं तृप्तिहेतुः। भगवदर्च्चनया सर्व्वत्र आत्मनि च भगद्भावस्फूर्त्तिः तया च तृप्तिरुपतिष्ठते। एकैकेन जीवेनैकस्य भगवतोऽर्च्चनया कथं सर्व्वेषां जीवानां तृप्तिः? एकस्मिन् संक्रामितो भगवत्प्रभावस्तत्सन्निहितान् जनान् परम्परया दूरवर्त्तिनोऽपि भगवद्वैमुख्यं त्याजयित्वा तच्चित्तान् करोतीति प्रत्यक्षम्। यदेवं सङ्कुचितभूमौ लक्ष्यते, तस्यैवेन्द्रियप्रत्यक्षातीतभूमावपि विस्तारः सर्व्वतोविसारिभगवद्भावेनेति कोऽत्र संशयहेतुः। वस्तुतस्तु सर्व्वभूतेषु भगवदीक्षणपरायणानां सर्व्वभूतैः सह भगवत्येकत्वं, सर्व्वभूतानाञ्च तैरिति साधनस्यास्यावश्यम्भावि फलम्। अच्युतेज्यया साधनमिदमेव परिगृह्यते संहितायामस्याम्।

४७। देवतिर्य्यगादिदेहधारणस्य कारणमुपन्यस्यति यतइति। पञ्चसु मायारचितेषु मायया नानादेहरूपेण निर्म्मितेषु गुणेषु भूतेषु दैवचोदितं दैवेन फलाभिमुखेन कर्म्मणा चोदितं नानाविकारात्मकं मनः यतो यतः यद्यद् देवतिर्य्यगादिरूपं प्रति धावति, आप च अभिनिवेशेन प्राप्तवत्, असौ देही प्रपद्यमानः तदेवाहमिति मन्यमानः तत्र तत्र तेन मनसा सह जायते।

४८। देहगतस्य जीवस्य कथं मोहउपतिष्ठते तदाह ज्योतिरिति।

एवं स्वमायारचितेष्वसौ पुमान्
गुणेषु रागानुगतो विमुह्यति ॥
१०।११४२।४३ ।

४९ । देहोऽपि ममताभाक् चेत् तर्ह्यसौ नात्मवत्प्रियः ।
यज्जीर्य्यत्यपि देहेऽस्मिन् जीविताशा बलीयसी ॥

५० । तस्मात् प्रियतमः स्वात्मा सर्व्वेषामेव देहिनाम् ।
तदर्थमेव सकलं जगच्चैतच्चराचरम् ॥
१०।१४।५३।५४ ।

अदः चन्द्रादि ज्योतिः यथा उदकपार्थिवेषु उदकेषु पार्थिवेषु तैलघृतादिषु समीरवेगानुगतं समीरस्य वायोः वेगम् अनुगतं कम्पादियुक्तं विभाव्यते प्रतीयते, एवं स्वमायारचितेषु स्वाज्ञानकल्पितेषु गुणेषु सत्त्वाद्युद्रिक्तेषु देहेषु रागानुगतः असौ पुमान् विमुह्यति मोहम् अभिनिवेशं प्राप्नोति। यत्र रागो जायते तत्राभिनिवेशेन तद्भावापन्नतोपतिष्ठते, देहे राग आत्मनि तद्भावापन्नतां जनयति ।

४९ । एवं देहाभिनिवेशवानप्यात्मार्थमेव स प्रियः, न तु देहार्थमित्याह देह इति। चेत् असौ देहः अपि ममताभाक् तर्हि न आत्मवत् प्रियः, यत् यस्मात् अस्मिन् देहे जीर्य्यति अपि आसन्नमरणे अपि जीविताशा जीवाम इति आशा बलीयसी। देहे मृतेऽपि नाहं म्रिये इत्येतत् जीविताशां दर्शयति। देहार्थं देहस्य प्रियत्वे निराशैव तदोपतिष्ठते ।

५० । केवलं नात्मा प्रियः, तदर्थमेव निखिलं विश्वं प्रियमित्याह तस्मादिति। तस्मात् पूर्व्वोक्तात् कारणात् सर्व्वेषाम् अपि देहिनां स्वात्मा स्वस्य आत्मा प्रियतमः। एतत् समग्रं चराचरं जगत् च तदर्थम् एव प्रियमिति शेषः ।

५१ । नात्मनोऽन्येन संयोगोवियोगश्चासतः सति ।
तद्धेतुत्वात् तत्प्रसिद्धेर्दृग्रूपाभ्यां यथा रवेः ॥
५२ । जन्मादयस्तु देहस्य विक्रिया नात्मनः क्वचित् ।
कलानामिव नैवेन्दोर्मृतिर्ह्यस्य कुहूरिव ॥
५३ । यथा शयानआत्मानं विषयान् फलमेव च ।
अनुभुङ्क्तेऽप्यसत्यर्थे तथाप्नोत्यबुधो भवम् ॥
११।५४।४६—४८ ।

५१ । आत्मार्थं निखिलं विश्वं प्रियं न तद्धेतोरित्यस्य कारणमात्मप्रकाश्यत्वात् तस्य स्वतः प्रियत्वाभाव इत्याह रुक्मिणीं प्रति श्रीकृष्णवाक्येन नात्मन इति । हे सति, अन्येन अधिभूतादिना आत्मनः संयोगः वियोगः च न । कुतः ? असतः असत्त्वात् अन्यस्येत्यर्थः । कथमन्यस्यासत्त्वम् ? तत्प्रसिद्धेः तस्य अन्यभूतेन्द्रियादेः प्रसिद्धेः प्रकाशस्य तद्धेतुकत्वात् आत्महेतुकत्वात्, यथा रवेः हेतुत्वात् दृग्रूपाभ्यां परस्परप्रसिद्धिः । भूतेन्द्रियादीनामसत्त्वमत्र नात्यन्तासत्त्वापेक्षयोक्तं, तथा सति आत्मप्रकाश्यत्वमेव तेषां न स्यात् । प्रकाशक आत्मा तन्निरपेक्षः, अन्यथा तस्य प्रकाशकत्वस्यैवाप्रसिद्धिः । आत्मन्यसति सत्यपि भूतादौ प्रकाशकाभावात् तेषां प्रतीतिरेव न स्यात् ।

५२ । जन्ममरणादयो देहस्य नात्मन इति दृष्टान्तेन प्रतिपादयति जन्मादय इति । जन्मादयः तु देहस्य विक्रिया न क्वचित् आत्मनः । तत्र दृष्टान्तः कलानाम् एव जन्मादयः न इन्दोः यथा तद्वत्, यथा च कलानां मृतिः नाशः कुहूः अमावस्या अस्य इन्दोः मृतिः क्षयः इत्युच्यते ।

५३ । यदि जन्मादयो नात्मनः, तत् कथं भोक्तृभोग्यभोगविभागस्तस्मिन्नुपपद्यते तदाह यथेति । यथा शयानः जनः असति अपि अर्थे आत्मानं भोक्तारं, विषयान् भोग्यान्, फलं भोगम् एव च अनुभुङ्क्ते, तथा

५४ । स्थिरचरजातयः स्युरजयोत्थनिमित्तयुजो
विहर उदीक्षया यदि परस्य विमुक्त ततः ।
न हि परमस्य कश्चिदपरो न परश्च भवे-
द्वियत इवापदस्य तव शून्यतुलां दधतः ॥

५५ । अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगता-
स्तर्हि न शास्यतेति नियमो ध्रुव नेतरथा ।
अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्
सममनुजानतां यदमतं मतदुष्टतया ॥

अबुधः अज्ञः भवम् आप्नोति । पानभोजनादिकं सर्व्वं देहस्य भोग्यं न त्वात्मनः ; तत उपकारः देहस्यैव नात्मनः, स एव वस्तुतः भोक्ता न पुनरात्मा । आत्मनि यत्तत्तदारोपः स मिथ्यैव ।

५४ । जीवो भगवच्छक्तिसम्भूत एवेत्याह स्थिरेति । हे विमुक्त नित्यमुक्त, यदि उदीक्षया ईक्षणलेशेन ततः अजातः परस्य अतीतत्वेन वर्त्तमानस्य असङ्गस्य तव अजया मायया विहरः विहारः भवति तदा उत्थनिमित्तयुजः उत्थितानि आविर्भूतानि निमित्तानि मनोमयलिङ्ग-शरीराणि तैः युज्यन्ते इति तथा स्थिरचरजातयः स्थिराश्च चराश्च जात-यश्च जात्यालिङ्गिताः देहाः येषां ते जीवाः स्युः भवेयुः । कथमुत्थाने निमित्तापेक्षा—शून्यतुलां दधतः शून्यसाम्यं भजतः अपदस्य वाङ्-मानसयोरगोचरस्य परमस्य कारुणिकस्य वियतइव आकाशसदृशस्य तव कश्चित् अपरः स्वीयः परः अस्वीयश्च न भवेत् ।

५५ । न हि जीवा अनन्तानित्याः सर्व्वगताइत्याह अपरिमिता इति । हे ध्रुव, यदि तनुभृतः प्राणिनः अपरिमिताः अनन्ताः ध्रुवाः नित्याः, सर्व्वगताः तर्हि शास्यता नियम्यता इति नियमः शास्त्रानु-शासनं न स्यात्, इतरथा अननन्तत्वादित्वे पुनः न स्यात् इति न, स्यादेव

५६ । न घटत उद्भवः प्रकृतिपूरुषयोरजयो-
रुभययुजा भवन्त्यसुभृतो जलबुद्बुदवत् ।
त्वयि तइमे ततो विविधनामगुणैः परमे
सरित इवार्णवे मधुनि लिल्युरशेषरसाः ॥
१०।८७।२९—३१ ।

५७ । स यदजया त्वजामनुशयीत गुणांश्च जुषन्
भजति सरूपतां तदनु मृत्युमपेतभगः ।

नियम्यत्वमित्यर्थः । तत् जीवाख्यं वस्तु यन्मयम् अजनि जातं तत् विकारजातम् अविसृज्य अपरित्यज्य नियन्तृ भवेत्, तद्विकारजातस्येति शेषः । समं जीवनियन्तृत्वसमं भगवन्नियन्तृत्वमित्येवम् अनुजानतां यत् अमतम् अविज्ञातं—न हि ते जानन्तीति श्रुतिनिर्द्देशः—तत् मत-दुष्टतया मतस्य ज्ञातस्य दुष्टतया दोषयुक्ततया । अहमात्मानं जानामीति जीवो वक्तुं समर्थः, न तथा परमात्मा मया ज्ञातइति वक्तुं स समर्थः, यतो न कोऽपि तं सर्व्वथा जानाति ।

५६ । जीवस्य यन्नित्यत्वमपास्तं तत् तस्य सदैकरूपत्वमुद्दिश्येति प्रदर्शनाय भगवत्परप्रकृतित्वेन तस्याजत्वमभिदधाति न घटत इति । अजयोः प्रकृतिपूरुषयोः उद्भवः न घटते । उभययुजा उभययोः प्रकृति-पूरुषयोः युजा योगेन जलबुद्बुदवत् जलवायुयोगेनोत्पन्नबुद्बुद इव असु-भृतः प्राणादुपाधयः जीवाः भवन्ति जायन्ते इत्यर्थः । भगवत्प्रकृति-रूपेण ते नित्याः न पुनरुपाधियोगेन जीवत्वाप्तौ इति फलितार्थः । ततः तस्मात् ते इमे जीवाः विविधनामगुणैः परमे त्वयि—सरितः नद्यः अर्णवे समुद्रे, अशेषरसाः अम्लादिनिखिलरसाः मधुनि इव—लिल्युः लीनाः बभूवुः ।

५७ । जीवोऽयं बद्धः, भगवांस्तु नित्यमुक्त इति भेदं दर्शयति स यदिति । स तु जीवः यत् यस्मात् अजया मायया अजाम् अविद्याम्

त्वमुत जहासि तामहिरिव त्वचमात्तभगो
महसि महीयसेऽष्टगुणितेऽपरिमेयभगः ॥
१०।८७।३८ ।

५८ । नात्मा जजान न मरिष्यति नैधतेऽसौ
न क्षीयते सवनविद् व्यभिचारिणां हि ।
सर्व्वत्र शश्वदनपाय्युपलब्धिमात्रं
प्राणो यथेन्द्रियबलेन विकल्पितं सत् ॥

अज्ञानताम् अनुशयीत आलिङ्गेत, ततः गुणान् देहेन्द्रियादीन् जुषन् सेवमानः सरूपतां देहादिसमानधर्म्मत्वं भजति प्राप्नोति, तदनु तदनन्तरम् अपेतभगः विलुप्तैश्वर्य्यः मृत्युं संसारं मरणं परिवर्त्तनशीलत्वं भजति । भगवतो जीववैलक्षण्यं दर्शयति—त्वम् उत आत्तभगः नित्यप्राप्तैश्वर्य्यः तां मायाम्—अहिः त्वचम् इव—जहासि । अपरिमेयभगः अपरिमितैश्वर्य्यः अष्टगुणिते अणिमाद्यष्टविभूतिमति महसि परमैश्वर्य्ये महीयसे पूजात्वेन विराजसे ।

५८ । सदैकरूपत्वरूपं नित्यत्वं निषिध्य ज्ञानरूपत्वं तस्यापरिहाय स्वरूपे स्थितस्य जीवस्य ज्ञानत्वं नित्यत्वं चोपदिशति नात्मेति । आत्मा जीवात्मा—शुद्धः जीवइति श्रीमज्जीवः—न जजान न जातः, न मरिष्यति न मृतोभविष्यति । जन्ममरणाभावादेव तदन्तरास्तितालक्षणो विकारोऽपि नास्ति ; न एधते वर्द्धते, न असौ क्षीयते क्षयं प्राप्नोति, वृद्धिक्षयाभावादेव विपरिणामोऽपि निरस्तः, हि यस्मात् व्यभिचारिणाम् अननपायिनां बालयुवादिदेहानां सवनवित् तत्तत्कालद्रष्टा—न ह्यवस्थानिचयानां द्रष्टा तदवस्थो भवतीत्यर्थः । निरवस्थः कोऽयमात्मेत्यपेक्षयाह—सर्व्वत्र सकलदेशे शश्वत् सकलकाले अनपायि अनुवर्त्तमानम् उपलब्धिमात्रं ज्ञानैकरूपम् । सर्व्वदेशे सर्व्वकाले ज्ञानस्यानपायित्वं कुतः, यतो नीलज्ञानं नष्टं पीतज्ञानं जातमिति दृश्यते ? मैवं—सत्

५९ । अण्डेषु पेशिषु तरुष्वविनिश्चितेषु
प्राणो हि जीवमुपधावति तत्र तत्र ।
सन्ने यदिन्द्रियगणेऽहमि च प्रसुप्ते
कूटस्थ आशयमृते तदनुस्मृतिर्नः ॥
११।३।३८।३९ ।

६० । विसर्गाद्याः श्मशानान्ताभावा देहस्य नात्मनः ।
कलानामिव चन्द्रस्य कालेनाव्यक्तवर्त्मना ॥११।७।४८

नित्यकालस्थायि ज्ञानमेव इन्द्रियबलेन इन्द्रियशक्त्या तेषां ग्रहणसामर्थ्यात् विकल्पितं विविधभावेन कल्पितं नीलाद्याकारत्वेनोपस्थापितं नीलाद्याकारवृत्तय एव जायन्ते नश्यन्ति च, न ज्ञानमिति भावः । कुत्रास्य दृष्टान्तइत्यपेक्षयाह—यथा प्राणः । एको हि प्राणः सर्व्वविधेषु प्राणिष्वनुस्यूतो न यथा विकारं भजते तथा ।

५९ । प्रथमं प्राणस्याविकारित्वं प्रदर्श्य तदनन्तरमिन्द्रियलयेन निर्व्विकारात्मोपलब्धिं दर्शयति अण्डेष्विति । अण्डेषु अण्डजेषु, पेशिषु जरायुजेषु, तरुषु उद्भिज्जेषु, अविनिश्चितेषु अविनिर्णीतोत्पत्तिस्थानेषु—स्वेदजेष्विति व्याख्यातारः—प्राणः हि तत्र तत्र जीवम् उपधावति अनुवर्त्तते प्राणत्वेन सर्व्वत्र तिष्ठति । दृष्टान्ते निर्व्विकारत्वप्रदर्शनानन्तरं दार्ष्टान्तिके चात्मनि निर्व्विकारत्वं दर्शयति—यत् यदा इन्द्रियगणे प्रसुप्ते लीने, अहमि च सन्ने लीने आशयं लिङ्गशरीरम् ऋते विना कूटस्थः निर्व्विकारः आत्मा, अतः नः अस्माकं तदनुस्मृतिः तस्य विशेषज्ञानशून्यस्य सुखात्मनः सुषुप्तिसाक्षिणः अनुस्मृतिः—सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति—अनुस्मरणम् ।

६० । जाग्रदवस्थायां वस्तुनिचयः, स्वप्नावस्थायां तत्संस्कार उपतिष्ठते, सुषुप्तावस्थायां नापि वस्तु नापि संस्कारस्तिष्ठति । अत

६१। विलक्षणः स्थूलसूक्ष्माद्देहादात्मेक्षिता स्वदृक्।
यथाग्निर्दारुणो दाह्याद्दाहकोऽन्यः प्रकाशकः॥

६२। निरोधोत्पत्त्यणुबृहन्नानात्वं तत्कृतान् गुणान्।
अन्तःप्रविष्ट आधत्त एवं देहगुणान् परः॥

इन्द्रियनिचयः अहमिति ज्ञानञ्च विलयं प्राप्नोति। तद्विलये हि तन्मयस्य लिङ्गशरीरस्यापि विलयः। लिङ्गशरीरविलये आत्मनः सुखस्वरूपत्वं विना नान्यत् किञ्चिदनुभवविषयं तिष्ठतीति सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति सुप्तोत्थितस्य स्मरणं दर्शयति। एवं निखिलविषयसम्पर्कवर्ज्जनेनात्मनोऽविकारित्वं प्रदर्श्य बहिर्दृश्यमाना विविधा अवस्था अपि नात्मन इत्यभिदधाति विसर्गाद्या इति। विसर्गः जन्म आद्यः आरम्भः येषां, श्मशानान्ताः श्मशानं शवशयनं नाशः अन्तः परिसमाप्तिः येषां ते भावाः अवस्थाः—अव्यक्तवर्त्मना अपरिलक्षितमार्गेण कालेन आदित्येन चन्द्रस्य नित्यं स्वरूपेणावस्थितस्य कलानाम् आदित्यमण्डलसम्पर्काल्पसम्पर्कासम्पर्कवशादुदितानां भावाः क्षयवृद्ध्यवस्थाः यथा, तथा—देहस्य न आत्मनः। तथाहि ज्योतिःशास्त्रे—

तरणिकिरणसङ्गादेष पीयूषपिण्डो दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति।
तदितरदिशि बालाकुन्तलश्यामलश्रीर्घटइव निजमूर्त्तिच्छायया वातपस्थः॥ इति।

६१। स्थूलसूक्ष्माद्देहाज्जीवात्मनो विलक्षणत्वं दृष्टान्तेन प्रतिपादयति विलक्षण इति। आत्मा ईक्षिता द्रष्टा, स्वदृक् स्वप्रकाशः, सुतरां स्थूलसूक्ष्मात् स्थूलात् प्रकाश्यात् स्वप्रकाशत्वेन, सूक्ष्मात् प्रकाश्यात् द्रष्टृत्वेन विलक्षणः विसदृशः। तत्र दृष्टान्तः—यथा प्रकाशकः अग्निः दाह्यात् दारुणः काष्ठात् अन्यः।

६२। देहगुणाध्यासमाह निरोधेति। यथा अग्निः निरोधोत्पत्त्यणुबृहन्नानात्वं निरोधः नाशः उत्पत्तिः जन्म, अणुः सूक्ष्मत्वं, बृहत् महत्त्वं, नानात्वं च इति तत्कृतान् दारुकृतान् गुणान् आधत्ते, तथा

६३ । योऽसौ गुणैर्विरचितो देहोऽयं पुरुषस्य हि ।
संसारस्तन्निबन्धोऽयं पुंसोविद्या छिदात्मनः ॥
११।१०।८—१० ।

६४ । गुणाः सृजन्ति कर्म्माणि गुणोऽनुसृजते गुणान् ।
जीवस्तु गुणसंयुक्तो भुङ्क्ते कर्म्मफलान्यसौ ॥

६५ । यावत् स्याद्गुणवैषम्यं तावन्नानात्वमात्मनः ।
नानात्वमात्मनोयावत् पारतन्त्र्यं तदेव हि ॥

परः देहात् अन्यः आत्मा अन्तःप्रविष्टः देहाभ्यन्तरप्रविष्टः देहगुणान् अनित्यत्वादीन् आधत्ते ।

६३ । असङ्गस्य तस्य कथमेवं देहधर्म्मैर्धर्म्मवत्त्वं तदाह यइति । गुणैः सृज्यशक्तिभिः यः असौ सूक्ष्मः अयं च स्थूलः देहः विरचितः, पुरुषस्य जीवस्य संसारः तन्निबन्धः तद्धेतुकः, पुंसः जीवस्य आत्मनः विद्या ज्ञानं छित् छेत्री संसारस्येति शेषः ।

६४ । प्रकृतियोगादेव जीवस्य भोक्तृत्वमित्याह गुणाइति । गुणाः सृज्यशक्तयः कर्म्माणि सृजन्ति—सृज्यशक्तिनिर्म्मितदेहादीनां चेष्टाः तत्-सृज्यशक्तिप्रभावादेवोत्पद्यन्ते इति तत्त्वम्; गुणाः इन्द्रियाणि इति व्याख्या तु सृज्यशक्त्युत्पन्नानां तेषां करणत्वेन क्रियोत्पत्तिवशात् साध्वी । गुणः एका सृज्यशक्तिः गुणान् अन्याः सृज्यशक्तीः अनु अनुवर्त्त्य सृजते—सृज्यशक्तीनां परस्परसम्मेलनेन सृष्टिः, सा तु एका एका शक्तिः अन्याभिः अन्याभिः सृज्यशक्तिभिः सन्निपत्य सिद्ध्यति । असौ जीवः तु गुणसंयुक्तः सृजशक्तिसमन्वितः तत्कृतेन्द्रियादिभिः अन्वितः कर्म्म-फलानि भुंक्ते सृज्यशक्त्युत्पन्नकर्म्मजनितफलानि भोग्यत्वेन गृह्णाति ।

६५ । जीवस्य परमात्मतः जीवान्तरतश्च पार्थक्यं सृज्यशक्तियोगा-देवेत्याह यावदिति । यावत् गुणवैषम्यं गुणानां सृज्यशक्तीनां वैषम्यं

६६ । यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयम् ।
य एतत् समुपासीरंस्ते मुह्यन्ति शुचार्पिताः ॥
११।१०।३१—३३ ।

६७ । एकस्यैव ममांशस्य जीवस्यैव महामते ।
बन्धोऽस्याविद्ययानादेर्विद्यया च तथेतरः ॥
११।११।४ ।

भिन्नभिन्नभावापन्नता तावत् आत्मनः तदभिनिवेशवतः नानात्वं पार्थक्यम्, अहं सुखी, त्वं दुःखी, स तु सुखदुःखातीतः, इत्यादि जीवस्य जीवान्तरतः, पापाचरणेन मालिन्यवशात् परमात्मानुभूतिवर्ज्जितस्य ततः पार्थक्यम् । यावत् आत्मनः जीवस्य नानात्वं परमात्मनः जीवान्तरतः च पार्थक्यम् तत् तावत् एव हि पारतन्त्र्यं स्वरूपविच्युतिवशात् इन्द्रियाधीनत्वम् ।

६६ । स्वरूपविच्युतिरूपपारतन्त्र्यफलमाह यावदिति । यावत् अस्य जीवस्य अस्वतन्त्रत्वं तावत् ईश्वरतः नियन्तुः भयम्—तदानुगत्याभावात् पापाचरणमवश्यम्भावि, ततो दण्डभयं विद्यते । ये जीवाः एतत् अस्वतन्त्रत्वम् समुपासीरन् सेवेरन् ते शुचा अर्पिताः शुचा शोकेन अनुतापेन अर्पिताः प्रीताः सन्तः मुह्यन्ति मोहं प्राप्नुवन्ति ।

६७ । एवमस्वातन्त्र्येण पृथग्भावमुल्लिख्य तस्य बन्धमोक्षकारणमाहात्म्यमभिवाक्येन एकस्येति । हे महामते, एकस्य एव मम अंशस्य अंशस्येव अंशस्य परिमितचित्खण्डस्य अस्य जीवस्य अविद्यया विषयाभिनिवेशरूपाज्ञानेन अनादिः जीवपरम्परया प्रवाहक्रमेण उपस्थितः बन्धः; विद्यया परमात्माभिनिवेशवशादुत्पन्नेन ज्ञानेन तथा इतरः मोक्षः ।

६८। न तथा बध्यते विद्वांस्तत्र तत्रादयन् गुणान् ।
प्रकृतिस्थोऽप्यसंसक्तो यथा खं सवितानिलः ॥

११।११।१२ ।

६९। गुणेष्वाविशते चेतो गुणाश्चेतसि च प्रजाः ।
जीवस्य देहमुभयं गुणाश्चेतो मदात्मनः ॥

७०। गुणेषु चाविशच्चित्तमभीक्ष्णं गुणसेवया ।
गुणाश्च चित्तप्रभवा मद्रूप उभयं त्यजेत् ॥

६८। एवं प्रकृत्यभिनिवेशवशात् चेत् बन्धः, किं जीवः सर्व्वथा प्रकृतिसम्बन्धं परिहातुं समर्थः। विषयिणस्तस्य विषयः प्रकृतिः। विषयसम्बन्धाभावे तस्य विषयित्वमेव न स्यात्। विषयित्वविनाशे पुनः पुरुषार्थताहानिः, किं ततो बन्धमोक्षविचारेण? अस्योत्तरं पठति। यथा जीवान्तर्यामी नियमनादिव्यापारे प्रवृत्तोऽपि निर्लेपवशान्न बद्धः, तथा जीवो विषयान् भुञ्जानोऽप्यनासक्तिवशान्न तैर्बद्ध इत्याह तथेति। तत्र तत्र गुणान् विषयान् अदयन् भुञ्जानः प्रकृतिस्थः अपि असंसक्तः आसक्तिविरहितः सन् विद्वान् विवेकी—यथा खम् आकाशः, सविता सूर्य्यः, अनिलः वायुः—तथा न बध्यते बद्धः भवति।

६९। जीवस्य देहं निर्द्दिशति गुणेष्वति। हे प्रजाः पुत्रकाः, गुणेषु इन्द्रियवृत्तिषु चेतः आविशते, आविशति चेतसि गुणाः च इन्द्रियवृत्तयः च आविशन्ति। मदात्मनः अहम् अन्तर्यामी एव आत्मा नियन्ता यस्य तस्य जीवस्य गुणाः इन्द्रियवृत्तयः चेतः उभयं देहम्।

७०। भगवदभिनिवेश एवैतदुभयविधदेहस्य त्यागइत्याह गुणेष्विति। अभीक्ष्णं पुनः पुनः गुणसेवया विषयसेवया गुणेषु विषयग्राहकेन्द्रियवृत्तिषु चित्तम् आविशत्। गुणाः इन्द्रियवृत्तयः च चित्तप्रभवाः

७१ । जाग्रत् स्वप्नः सुषुप्तञ्च गुणतो बुद्धिवृत्तयः ।
तासां विलक्षणो जीवः साक्षित्वेन विनिश्चितः ॥
११।१३।२५—२७ ।

७२ । अनाद्यविद्यायुक्तस्य पुरुषस्यात्मवेदनम् ।
स्वतो न सम्भवेदन्यस्तत्त्वज्ञो ज्ञानदोभवेत् ॥

७३ । पुरुषेश्वरयोरत्र न वैलक्षण्यमण्वपि ।
तदन्यकल्पनापार्था ज्ञानञ्च प्रकृतेर्गुणः ॥
११।२२।१०।११ ।

चित्तसमुत्पन्नाः । मद्रूपः मद्भावापन्नः सन् उभयं गुणचित्ताभिनिवेशं त्यजेत् जह्यात् ।

७१ । गुणचित्तमयो जीवदेहो यदि तस्य स्वाभाविकः स्यात् न तं जातु स परित्यक्तुं शक्नेत, अतस्ततो जीवस्य वैलक्षण्यमाह जाग्रदिति । जाग्रत् जागरः, स्वप्नः, सुप्तं सुषुप्तिः गुणतः सत्त्वशक्तितः बुद्धिवृत्तयः । तासां बुद्धिवृत्तीनां साक्षित्वेन द्रष्टृत्वेन विनिश्चितः जीवः विलक्षणः विसदृशः ।

७२ । अज्ञानस्य जीवस्य ज्ञानप्राप्तिर्न स्वतो भवेदतस्ततोऽन्यो ज्ञानदाता ईश्वर इत्याह अनादीति । अनाद्यविद्यायुक्तस्य आदिरहिताज्ञानयुक्तस्य पुरुषस्य आत्मवेदनम् आत्मस्वरूपज्ञानं स्वतः न सम्भवेत्, सुतरां अन्यः तत्त्वज्ञः परमेश्वरः ज्ञानदः भवेत् ।

७३ । पुरुषः प्रकृतिश्च परमेश्वरस्यैव प्रकृतिः, सुतरां तेन तयोः स्वरूपैक्यं स्यादेव, यदि न स्यात् विषयविषयिणोः प्रकृतिपुरुषयोः परस्परं परमेशेन च नित्यसम्बन्धो न भवेत् । अतस्तयोरीश्वरेण स्वरूपैक्यं दर्शयति पुरुषेति । अत्र पुरुषेश्वरयोः जीवेश्वरयोः अणु अपि अल्पम् अपि न वैलक्षण्यम्, उभयोः ज्ञानस्वरूपत्वात्, सुतरां तदन्यकल्पना ईश्वरात् अन्यः पुरुषः इति कल्पना अपार्था व्यर्था । प्रकृतेरपि

७४ । नृत्यतो गायतः पश्यन् यथैवानुकरोति तान् ।
एवं बुद्धिगुणान् पश्यन्ननीहोऽप्यनुकार्य्यते ॥
११।२२।५२ ।

७५ । तयोरेकतरोह्यर्थः प्रकृतिः सोभयात्मिका ।
ज्ञानन्त्वन्यतमोभावः पुरुषः सोऽभिधीयते ॥११।२४।४

७६ । सत्त्वं रजस्तमइति गुणा जीवस्य नैव मे ।
चित्तजा यैस्तु भूतानां सज्जमानो निबध्यते ॥
११।२५।१२ ।

न स्वरूपानैक्यम्, कुतः ?—ज्ञानं च सत्त्वगुणत्वेन प्रकृतेः गुणः। प्रकाशः सत्त्वम्, प्रकाशोन्मुखं रजः, अप्रकाशस्तमः, सुतरामेकस्यैव प्रकाशस्य सत्त्वस्यावस्थाद्वयं रजस्तमइति 'ज्ञानञ्च प्रकृतेर्गुणः' इत्युक्तिः साध्वी ।

७४ । प्रवृत्तिहीनोऽपि जीवात्मा बुद्धिगुणाननुकृत्य प्रवृत्तिमान् प्रतीयत इत्याह नृत्यत इति । नृत्यतः गायतः जनान् पश्यन् यथा एव तान् अनुकरोति तद्गतस्वरतालादि गतिं रसांश्च अनुकरोति मनसि अनुवर्त्तयति, एवं बुद्धिगुणान् बुद्ध्युपस्थापितविषयान् पश्यन् अनीहः अक्रियः अपि अनुकार्य्यते बुद्धिगुणैरिति शेषः ।

७५ । प्रकृतिः कार्य्यकारणात्मिका जीवोज्ञानमात्रमित्याह तयोरिति । "वाङ्मनोऽगोचरं सत्यं द्विधा समभवत् बृहत् । (११।२४।३) इति तयोः द्विधाभूतयोः सत्स्वरूपस्य ब्रह्मणोऽंशयोः एकतरः हि अर्थः प्रकृतिः, सा उभयात्मिका कार्य्यकारणात्मिका ; अन्यतमः भावः तु ज्ञानम्, स पुरुषः जीवः अभिधीयते कथ्यते ।

७६ । नित्यस्वप्रकाशज्ञानस्वरूपस्येश्वरस्य ज्ञानस्य कदाचित् प्रकाशोन्मुखता, कदाचित् प्रकाश इति न सम्भवति, जीवस्य तु परिमितज्ञानस्य तथा भवतीत्याहान्तर्यामिवाक्येन सत्त्वमिति । सत्त्वं रजः

७७। सम्पद्यते गुणैर्मुक्तो जीवो जीवं विहाय माम्।
जीवो जीवविनिर्म्मुक्तो गुणैश्चाशयसम्भवैः।
मयैव ब्रह्मणा पूर्णो न बहिर्नान्तरं चरेत्॥११।२५।३५

७८। गुणमय्या जीवयोन्या विमुक्तो ज्ञाननिष्ठया।
गुणेषु मायामात्रेषु दृश्यमानेष्ववस्तुतः।
वर्त्तमानोऽपि न पुमान् युज्यतेऽवस्तुभिर्गुणैः॥
११।२६।२।

७९। नात्मा वपुः पार्थिवमिन्द्रियाणि
देवाह्यसुर्वायुजलं हुताशः।

तमः चित्तजाः चित्तप्रभवाः चित्ते अभिव्यक्ताः गुणाः जीवस्य एव न मे परमात्मनः गुणनियन्तुः। यैः गुणैः भूतानां देहरूपाणाम् अन्येषां च विषयाणां मध्ये सज्जमानः अभिनिविष्टः जीवः निबध्यते।

७७। भगवदभिनिवेश एव स्थूलसूक्ष्मदेहत्याग इत्युक्तम्। तदा ब्रह्मणैव पूर्णः न बहिष्ठेषु नान्तरस्थेषु विषयेषु रमते स इत्याहान्तर्यामिवाक्येन सम्पद्यत इति। जीवः गुणैः मुक्तः गुणातीतः सन् जीवं जीवत्वकारणमनोमयलिङ्गशरीरं विहाय त्यक्त्वा मां सम्पद्यते प्राप्नोति। जीवनिर्म्मुक्तः मनोमयलिङ्गशरीररहितः आशयसम्भवैः चित्तप्रभवैः गुणैः च मुक्तः जीवः मया ब्रह्मणा एव पूर्णः न बहिः विषयेषु न अन्तः तत्स्मृतिषु चरेत् रमेत।

७८। विषयेषु निर्लेपभावेन तदा स्थितिर्भवतीत्याह गुणमय्येति। ज्ञाननिष्ठया गुणमय्या जीवयोन्या ज्ञानोपाधिना विमुक्तः पुमान् जीवः अवस्तुतः असदिति भावेन दृश्यमानेषु मायमात्रेषु गुणेषु वर्त्तमानः अपि गुणैः अवस्तुभिः न युज्यते।

७९। कथं न युज्यते तत्कारणमाह नात्मेति। पार्थिवं वपुः,

मनोऽन्नमात्रं धिषणा च सत्त्व-
महङ्कृतिः खं क्षितिरर्थसाम्यम् ॥११।२८।२४।

८०। यथा नभो वाय्वनलाम्बुभूगुणै-
र्गतागतैर्वर्त्तुगुणैर्न सज्जते।
तथाक्षरं सत्त्वरजस्तमोमलै-
रहंमतेः संसृतिहेतुभिः परम् ॥११।२८।२६।

८१। यथा घनोऽर्कप्रभवोऽर्कदर्शितो
ह्यर्कांशभूतस्य च चक्षुषस्तमः।
एवं त्वहं ब्रह्मगुणस्तदीक्षितो
ब्रह्मांशकस्यात्मन आत्मबन्धनः ॥१२।४।३१।

इन्द्रियाणि, देवाः इन्द्रियाधिष्ठातारः, असुः प्राणः, मनः, धिषणा बुद्धिः, सत्त्वं चित्तम्, अहङ्कृतिः, वायुजलम् वायुः जलम्, खम् आकाशः, क्षितिः, एते न आत्मा भवति। कथम्? अन्नमात्रं शरीरवत् परोपभोग्यम्; वाय्वादिपञ्चभूतानि अर्थसाम्यम् अर्थाः शब्दादयः साम्यं प्रकृतिः अतः जड़त्वात् न आत्मा।

८०। एवं बुद्ध्यासङ्गत्वेन स्थितौ निर्लेपभाव उपतिष्ठते तदेवाह यथेति। वाय्वनलाम्बुभूगुणैः शोषणदहनक्लेदनरजोधूसरत्वादिभिः गतागतैः आगमापायिभिः स ऋतुगुणैः वा नभः आकाशः यथा न सज्जते तथा अहंमतेः परम् अक्षरं मुक्तात्मा संसृतिहेतुभिः सत्त्वरजस्तमोमलैः न सज्जते।

८१। जीवात्मपरमात्मनोः स्वरूपैक्येऽपि कथं वा स्वरूपमावृतं भवति येन दर्शनप्रतिबन्ध उपतिष्ठते तदाह यथेति। अर्कप्रभवः—सूर्य्याकृष्टरसजातं वृष्टिर्भूत्वा वर्षतीति—अर्कसमुत्पन्नः, अर्कदर्शितः अर्केणैव प्रकाशितः घनः मेघः यथा अर्कांशभूतस्य तैजसांशस्वरूपस्य

८२ । स्वप्ने यथा शिरश्छेदं पञ्चत्वाद्यात्मनः स्वयम् ।
यस्मात् पश्यति देहस्य तत आत्मा ह्यजोऽमरः ॥

८३ । घटे भिन्ने यथाकाश आकाशः स्याद्यथा पुरा ।
एवं देहे मृते जीवो ब्रह्म सम्पद्यते पुनः ॥

८४ । मनः सृजति वै देहान् गुणान् कर्म्माणि चात्मनः ।
तन्मनः सृजते मायां ततो जीवस्य संसृतिः ॥

चक्षुषः तमः अर्कदर्शनप्रतिबन्धकः अन्धकारः भवति, एवं ब्रह्मगुणः ब्रह्मकार्य्यभूतः अहम् अहङ्कारः तदीच्छितः तेन ब्रह्मणा प्रकाशितः ब्रह्मांशकस्य आत्मनः जीवस्य आत्मबन्धनः ब्रह्मस्वरूपदर्शनप्रतिबन्धकः भवति ।

८२ । स्वप्ने स्वशिरश्छेदनदर्शनवत् देहस्य पञ्चत्वादि आत्मनः पञ्चत्वादीति पश्यति, वस्तुतः आत्मा अजोऽमर इत्याह स्वप्न इति । स्वप्ने यथा आत्मनः शिरश्छेदं स्वयं पश्यति, तथा यस्मात् यतः देहस्य पञ्चत्वादि आत्मनः पञ्चत्वादि पश्यति, ततः आत्मा हि अजरः अमरः ।

८३ । मनोमयलिङ्गदेहोऽयं व्यवधायको जीवात्मपरमात्मनोः, तद्देहापगमे जीवस्य ब्रह्मसम्पन्नतेत्याह घट इति । घटे भिन्ने यथा आकाशः पुरा यथा तथा आकाशः स्यात्, एवं देहे मनोमयलिङ्गशरीरे मृते तत्त्वज्ञानेन विलीने जीवः पुनः ब्रह्म सम्पद्यते—

विशोको ब्रह्मसम्पत्त्या सञ्छिन्नद्वैतसंशयः ।
लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसम्भवः ॥ (१।१५।३१) ।

इत्यत्र ब्रह्मसम्पत्तिर्लिङ्गशरीरतिरोधानसहभाविनी ।

८४ । देहादिकं सर्व्वं मनोविलासमात्रमिति तत्त्वज्ञानेन तेषां विलयः सम्भवति, तदेवाह मन इति । मनः वै एव आत्मनः देहान् गुणान् कर्म्माणि च सृजति ; तत् मनः मायां सृजते ; ततः मायाद्यु-

८५ । स्नेहाधिष्ठानवर्त्त्यग्निसंयोगो यावदीयते ।
ततो दीपस्य दीपत्वमेवं देहकृतो भवः ।
रजःसत्त्वतमोवृत्त्या जायतेऽथ विनश्यति ॥
८६ । न तत्रात्मा स्वयंज्योतिर्यो व्यक्ताव्यक्तयोः परः ।
आकाश इव चाधारो ध्रुवोऽनन्तोपमस्ततः ॥
८७ । एवमात्मानमात्मस्थमात्मनैवामृश प्रभो ।
बुद्ध्यानुमानगर्भिण्या वासुदेवानुचिन्तया ॥
१२।५।४—९ ।

पाधिसमुदायात् जीवस्य संसृतिः संसारः । चिन्मात्रस्य देहादिष्वभिनिवेशो मनसैव भवति । एषोऽभिनिवेशो घनीभूतः मोहं जनयति । स एव मोहो मायारूपेण जीवस्य स्वरूपाच्छादनेन संसाराय भवति ।

८५ । अजस्यापि जीवस्य जन्म देहकृतमित्याह दृष्टान्तमुखेन स्नेहेति । स्नेहाधिष्ठानवर्त्त्यग्निसंयोगः स्नेहस्य तैलस्य अधिष्ठानम् आधारः तस्मिन् या वर्त्तिः तस्याम् अग्निसंयोगः यावत् ईयते अनुवर्त्तते, ततः तावत् दीपस्य दीपत्वम् । एवं देहकृतः भवः जन्म जीवस्येति शेषः । रजःसत्त्वतमोवृत्त्या जीवो जायते, अथ अनन्तरं विनश्यति अन्तर्धत्ते ।

८६ । तज्जन्ममरणं न वस्तुतो जीवस्येत्याह न तत्रेति । तत्र जन्मनि मरणे च न आत्मा । कुतः ? यः व्यक्ताव्यक्तयोः स्थूलसूक्ष्मदेहयोः परः अन्यः, ततः स स्वयं ज्योतिः स्वप्रकाशः, आकाशः इव देहादेः आधारः, ध्रुवः निर्व्विकारः, अनन्तोपमः अनन्तस्य ब्रह्मणः उपमः सदृशः 'स चानन्त्याय कल्पते' इति श्रुतत्वात् ।

८७ । सएव चिन्तनीय इत्याह परिक्षितं प्रति शुकः एवमिति । एवं पूर्व्वोक्तप्रकारेण, हे प्रभो राजन्, आत्मस्थं देहादिस्थम् आत्मानं

जीवम् आत्मना मनसा एव आमृश्य विचारय । केनोपायेन ? वासुदेवानुचिन्तया वासुदेवस्य सर्व्वचित्ताधिष्ठातुः अनुगता चिन्ता यस्यां तया अनुमानगर्भिण्या दृष्टदृष्टस्यान्वयव्यतिरेकयुक्तया बुद्ध्या ।

विषयिनिर्द्देशेऽस्मिन्नध्याये तस्य मनोमयदेहयुक्तत्वं, देहादिभ्यस्तस्य वैलक्षण्यं, ब्रह्मणा स्वरूपैक्यं, देहादिष्वनभिनिवेशेन स्थितौ तस्य मुक्तिः परमात्मनि स्थितिश्चेत्यादिकं निर्णीतम् ।

इति श्रीसात्त्वतसंहितोत्थायां व्याख्यानसहितायां
श्रीमद्गीताप्रपूर्त्तौ विषयिनिर्द्देशो नाम
पञ्चमोऽध्यायः ।

---

# षष्ठोऽध्यायः।

## विषयनिर्द्देशः।

१। जगृहे पौरुषं रूपं भगवान् महदादिभिः।
सम्भूतं षोड़शकलमादौ लोकसिसृक्षया ॥१।३।१।

२। स वै भवान् वेद समस्तगुह्य-
मुपासितो यत् पुरुषः पुराणः।
परावरेशो मनसैव विश्वं
सृजत्यवत्यत्ति गुणैरसङ्गः ॥१।५।६।

१। भगवतोऽपरा प्रकृतिर्विषयो विषयिणो जीवस्य भोग्यत्वात्। अतएव विषयिनिर्द्देशादनन्तरं विषयनिर्द्देश आरभ्यते। न हि पुनरसावपरा प्रकृतिर्भगवन्निरपेक्षा, स्वात्मप्रकाशे तदीक्षणसापेक्षत्वात्तस्याः। स च जीवो विराड़्देहे भगवत्प्रथमावतरणभूमिः। विराड़्देहस्तु प्रकृतियोगादभिव्यज्यते। विराड़् जीवएवेति सिद्धावपि न स भगवन्निरपेक्ष इति अन्तर्यामिणा परमात्मना नित्यसम्बद्ध एव स गृह्यते। तदेवं जीवः प्रकृतिः परमात्मा चेति त्रितयस्य नित्यसम्बन्धप्रदर्शनायाह जगृहइति। भगवान् सर्व्वातीतसर्व्वान्तर्भावकः परमपुरुषः लोकसिसृक्षया लोकप्रादुर्भावार्थम् आदौ सृष्टेः प्राक् महदादिभिः महदहङ्कारपञ्चतन्मात्रैः सम्भूतं सुनिष्पन्नं षोड़शकलम् एकादशेन्द्रियाणि पञ्चमहाभूतानीति षोड़शकलाः यस्मिन् तादृशं पौरुषं रूपं जीवदेहं जगृहे गृहीतवान् स्वीकृतवान्।

२। 'न प्रपञ्चस्वभावं ब्रह्म' इति न्यायात् प्राकृतिकगुणैस्तस्यासम्बन्धः, अथ च तत्सम्बन्धं विना न जातु सृष्टिः सम्भवति। तस्य सङ्कल्पमात्रेण चेत् सृष्टिः, कोऽयं सङ्कल्पः? भगवन्मन इति

३ । आद्योऽवतारः पुरुषः परस्य
कालः स्वभावः सदसन्मनश्च ।
द्रव्यं विकारो गुणइन्द्रियाणि
विराट् स्वराट् स्थाणु चरिष्णु भूम्नः ॥२।६।४०

मनसैवासृजत् पूर्व्वं प्रजापतिरिमाः प्रजाः ।
देवासुरमनुष्यादीन् नभस्थलजलौकसः ॥ (६।४।१८) ।
सृष्टेदं मनसा विश्वमात्मनानुप्रविश्य सः ।
गुणै कुर्व्वद्भिराभाति कर्त्तृवत् स्वप्नदृग् यथा (१२।१०।३०)

इत्यादिस्मरणात् । सङ्कल्पोवा मनोवा चेत् भगवतः पृथक् स्यात्, तस्य विकारित्वमवश्यम्भावि । स्याच्च तत्तस्योपाधिः जीवस्येव । अतोऽपृथक्त्वमेव तस्याभ्युपगन्तव्यं चित्स्वरूपेण । यद्यपृथक् कथं मन इति निर्द्देशः ? मनसि जीवोजगच्च तदभिन्नतया सत्ताकारेण तिष्ठति । एवं परेऽपि जीवजगतोस्तत्सत्ताभिन्नतया स्थितिप्रदर्शनाय मनइति निर्द्देशः । वस्तुतस्तु मनो न चितः पृथक् । मनसा सृष्टिरित्युक्ते चित्स्वरूपगतयोस्तत्-सत्तयापृथग्जीवजगतोरभिव्यक्तिरेव व्यज्यते । एतदेवाभिधत्ते व्यास-वाक्येन नारदं प्रति स वै इति । यत् यस्मात् भवता पुराणः पुरुषः उपासितः, तस्मात् सएव भवान् समस्तगुह्यं वेद । कोऽयं पुराणः पुरुषः किं वा गुह्यम् ? परावरेशः कार्य्यकारणनियन्ता गुणैः सृज्य-शक्तिभिः असङ्गः अविलिप्तः मनसा एव सङ्कल्पमात्रेण एव विश्वं सृजति, अवति रक्षति, अत्ति संहरति ।

३ । तस्मात् परमपुरुषात् पुरुषादीनामभिव्यक्तिस्तेषु च तस्याव-तरणमाह आद्य इति । परस्य भूम्नः पुरुषः प्रकृतिप्रवर्त्तकः जीवः आद्यः अवतारः, तदनन्तरं कालः, स्वभावः, सदसत् कार्य्यकारणात्मिका प्रकृतिः, मनः महत्तत्त्वं मननशक्तिः, द्रव्यं महाभूतानि, विकारः अह-ङ्कारः, गुणः सत्त्वादिसृज्यशक्तिः, इन्द्रियाणि, विराट् समष्टिशरीरम्,

स्वराट् वैराजः, स्थाणु स्थावरम्, चरिष्णु जङ्गमं व्यष्टिशरीरम् परस्य भूम्नः अवतार इति शेषः। अवतारः—'प्राकृतवैभवे स्वेच्छाविर्भावः' इति श्रीमज्जीवः। अत्र सर्व्वेषामविशेषेणावतारत्वमुक्तमिति स्वीकृत्य श्रीमत् स्वामिना कालादयः शक्तयः, 'मनआदीनि कार्य्याणि, ब्रह्मादयो गुणावताराः, दक्षादयो विभूतय इति विवेक्तव्यम्' इत्युच्यते। पुरुष-कालादिषु तस्यैवाविर्भावस्तात्त्विकोऽन्यथा तेषां क्रियाकारित्वाभावएव प्रसज्येत। अतएवात्राविशेषेण सर्व्वेषामवतारत्वेन ग्रहणम्। अतआह

द्रव्यं कर्म्म च कालश्च स्वभावो जीव एव च।
वासुदेवात्परो ब्रह्मन् न चान्योऽर्थोऽस्ति तत्त्वतः॥ (२।५।१४) इति।

स्कन्धेऽस्मिन् सृष्टिप्रक्रियैवं प्रदर्शिता ;—

कालं कर्म्म स्वभावं च मायेशो मायया स्वया।
आत्मन् यदृच्छया प्राप्तं विबुभूषुरुपाददे॥
कालाद्गुणव्यतिकरः परिणामः स्वभावतः।
कर्म्मणो जन्म महतः पुरुषाधिष्ठितादभूत्॥
महतस्तु विकुर्व्वाणाद्रजःसत्त्वोपबृंहितात्।
तमःप्रधानस्त्वभवद् द्रव्यज्ञानक्रियात्मकः॥
सोऽहङ्कार इति प्रोक्तो विकुर्व्वन् समभूत्त्रिधा।
वैकारिकस्तैजसश्च तामसश्चेति यद्भिदा।
द्रव्यशक्तिः क्रियाशक्तिर्ज्ञानशक्तिरिति प्रभो॥
तामसादपि भूतादेर्विकुर्व्वाणादभून्नभः।
तस्य मात्रागुणः शब्दो लिङ्गं यद्द्रष्टृदृश्ययोः॥
नभसोऽथ विकुर्व्वाणादभूत् स्पर्शगुणोऽनिलः।
परान्वयाच्छब्दवांश्च प्राणओजः सहो बलम्॥
वायोरपि विकुर्व्वाणात् कालकर्म्मस्वभावतः।
उदपद्यत तेजो वै रूपवत् स्पर्शशब्दवत्॥
तेजसस्तु विकुर्व्वाणादासीदम्भोरसात्मकम्।
रूपवत् स्पर्शवच्चाम्भो घोषवच्च परान्वयात्॥
विशेषस्तु विकुर्व्वाणादम्भसो गन्धवानभूत्।
परान्वयाद्रसस्पर्शशब्दरूपगुणान्वितः॥

४। सा वा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका।
माया नाम महाभाग ययेदं निर्म्ममे विभुः॥

५। कालवृत्त्या तु मायायां गुणमय्यामधोक्षजः।
पुरुषेणात्मभूतेन वीर्य्यमाधत्त वीर्य्यवान्॥३।५।२५।२६

६। विश्वं वै ब्रह्मतन्मात्रं संस्थितं विष्णुमायया।
ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्त्तिना॥३।१०।१२

> वैकारिकान्मनो जज्ञे देवा वैकारिका दश।
> दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः॥
> तैजसात्तु विकुर्व्वाणादिन्द्रियाणि दशाभवन्।
> ज्ञानशक्तिः क्रियाशक्तिर्बुद्धिः प्राणस्तु तैजसौ।
> श्रोत्रं त्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायवः॥
> यदैतेऽसङ्गता भावा भूतेन्द्रियमनोगुणाः।
> यदायतननिर्म्माणे न शेकुर्ब्रह्मवित्तम॥
> तदा संहत्य चान्योऽन्यं भगवच्छक्तिचोदिताः।
> सदसत्त्वमुपादाय चोभय सस्रजुर्ह्यदः॥ (२।५।२१—३३) इति।

एवं तृतीयस्कन्धस्याध्याये पञ्चमे, षष्ठे, दशमे, षड्विंशे सृष्टिप्रक्रिया द्रष्टव्या।

४। तस्य सर्ज्जनशक्तिमाह सेति। हे महाभाग, एतस्य संद्रष्टुः सा वा सदसदात्मिका कार्य्यकारणरूपा दृश्यादृश्यानुसन्धानरूपा वा माया नाम शक्तिः, यया शक्त्या इदं विश्वं विभुः निर्म्ममे सृष्टवान्।

५। न हि पुनः केवलं जड़शक्त्या सृष्टिः सम्भवति, अतस्तस्यां चिच्छक्त्यभिनिवेशमाह कालवृत्त्येति। कालवृत्त्या कालशक्त्या गुणमय्यां क्षुभितगुणायां मायायां वीर्य्यवान् चिच्छक्तियुक्तः परमात्मा आत्मभूतेन आत्मांशभूतेन पुरुषेण आद्यावतारेण वीर्य्यं जीवाख्यं आधत्त आहितं कृतवान्।

६। विश्वमिदं ब्रह्मसत्तायां तदभिन्नतयावस्थितं, कालशक्त्या—

७ । स एष प्रकृतिं सूक्ष्मां दैवीं गुणमयीं विभुः ।
यदृच्छया चोपगतामभ्यपद्यत लीलया ॥
८ । गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः ।
विलोक्य मुमुहे सद्यः सइह ज्ञानगूहया ॥३।२६।४।५

'वासुदेवात्परो न चान्योऽर्थोऽस्ति' इति न्यायात्—स्वेच्छया पृथक् कृतमित्याह विश्वमिति । विष्णुमायया विष्णोः सर्व्वान्तर्भावकस्य ईश्वरस्य मायया सर्ज्जनशक्त्या सह विश्वं वै ब्रह्मतन्मात्रं ब्रह्मतादात्म्यापन्नं सत् संस्थितं तस्मिन् विलीनभावेन स्थितम्, अव्यक्तमूर्त्तिना ईश्वरेण कर्त्रा कालेन स्वप्रभावरूपेण इच्छाशक्त्या निमित्तेन परिच्छिन्नं पृथक् प्रकाशितम् ।

७ । स्वेच्छयैव सर्ज्जनशक्तिस्वीकारमाह सइति । स एष विभुः सूक्ष्माम् अव्यक्तां, दैवीं देवस्य विष्णोः शक्तिं, गुणमयीं सृज्यशक्ति-सम्पन्नां लीलया उपगतां समीपस्थां प्रकृतिं यदृच्छया एव अभ्यपद्यत ऐच्छत ।

८ । तस्या जीवज्ञानावरकत्वमाह गुणैरिति । गुणैः सृज्यशक्तिभिः विचित्राः विविधरूपाः सरूपाः सदृशीः प्रजाः सृजतीं प्रकृतिं विलोक्य ज्ञानगूहया ज्ञानावृत्या सद्यः स जीवः मुमुहे आत्मानं विस्मृतवान् । इममेवार्थं स्पष्टतयाह सप्तविंशे—

प्रकृतिस्थोऽपि पुरुषो नाज्यते प्रकृतेर्गुणैः ।
अविकारादकर्त्तृत्वान्निर्गुणत्वाज्जलार्कवत् ॥
सएव यर्हि प्रकृतेर्गुणेष्वभिविषज्जते ।
अहंक्रियाविमूढात्मा कर्त्तास्मीत्यभिमन्यते ॥
तेन संसारपदवीमवशोऽभ्येत्य निर्वृतः ।
प्रासंगिकैः कर्म्मदोषैः सदसन्मिश्रयोनिषु ॥
अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्त्तते ।
ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा ॥ (३।२७।१—४) इति ।

९ । कार्य्यकारणकर्त्तृत्वे कारणं प्रकृतिं विदुः ।
भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम् ॥

३।२६।८।

१० । केचित् कर्म्म वदन्त्येनं स्वभावमपरे नृप ।
एके कालं परे दैवं पुंसः काममुतापरे ॥

११ । अव्यक्तास्याप्रमेयस्य नानाशक्त्युदयस्य च ।
न वै चिकीर्षितं तात कोवेदाथ स्वसम्भवम् ॥

४।११।२२।२३ ।

९ । विषयविषयिणोः पृथक् सम्बन्धं दर्शयति कार्य्येति । कार्य्य-कारणकर्त्तृत्वे कार्य्यं शरीरं कारणं समनस्कानीन्द्रियाणि तेषां कर्त्तृत्वे क्रियाकारित्वे प्रकृतिं कारणं हेतुं विदुः ; सुखदुःखानां भोक्तृत्वे प्रकृतेः परं पुरुषं कारणं विदुरिति शेषः ।

१० । 'वासुदेवात्परो न चान्योऽर्थोऽस्ति' इति न्यायात् कर्म्मा-दिकं यत् किञ्च कारणत्वेनाग्रे परिगृहीतं तत्सर्व्वं नेश्वरतो भिन्नमिति स्पष्टमाह केचिदिति मनुवाक्येन । हे नृप ध्रुव, केचित् एनं परमेश्वरं कर्म्म, अपरे स्वभावम्, एके कालं, परे दैवं, अपरे उत पुंसः पुरुषस्य कामं सङ्कल्पं वदन्ति ।

११ । एतेषां शक्तिरूपेण तस्मादुदयात् गौणकारणत्वं मूलकार-णत्वमीश्वरस्यैव । तत्त्वपश्यन्तो गौणकारणान्येव वादिनो मूलकारण-मिव गृह्णन्ति । नैतच्चित्रम्, तस्येच्छाशक्तेर्लेशमपि ज्ञातुमसमर्थोजनः कथं स्वात्मकारणं तं जानीयात् । एतदेवाह अव्यक्तस्येति । अव्यक्तस्य चक्षुराद्यगोचरस्य अप्रमेयस्य प्रमाणातीतस्य नानाशक्त्युदयस्य नानाशक्ती-नाम् उदयः सम्भवः यस्मात् तस्य, हे तात ध्रुव, चिकीर्षितम् एव इच्छा-

१२ । मन्यमान इदं विश्वं मायारचितमात्मनि ।
अविद्यारचितं स्वप्नगन्धर्व्वनगरोपमम् ॥

१३ । आत्मस्त्र्यपत्यसुहृदोबलमृद्धकोष-
मन्तःपुरं परिविहारभुवश्च रम्याः ।
भूमण्डलं जलधिमेखलमाकलय्य
कालोपसृष्टमिति स प्रययौ विशालाम् ॥
४।१२।१५।१६ ।

१४ । यथैव सूर्य्यात् प्रभवन्ति वारः
पुनश्च तस्मिन् प्रविशन्ति काले ।
भूतानि भूमौ स्थिरजङ्गमानि
तथा हरावेव गुणप्रवाहः ॥४।३१।१५ ।

शक्तिलेशम् एव कोऽपि न वेद, अथ स्वसम्भवं स्वस्य उत्पत्तिकारणं तं कः वेदः, न कोऽपीत्यर्थः ।

१२।१३ । अथेदानीं ध्रुवस्यानुभूत्यात्मनो देहाद्यतीतत्वं स्वाज्ञानकल्पितस्वप्नादिदृष्टान्तेन साधयति युग्मकेन मन्यमान इति आत्मेति । अविद्यारचितं स्वाज्ञानकल्पितं स्वप्नगन्धर्व्वनगरोपमम् आत्मनि स्वस्मिन् मायारचितं भगवच्छक्त्या निर्म्मितम् इदं विश्वं देहादि मन्यमानः ध्रुवः आत्मस्त्र्यपत्यसुहृदः आत्मा देहः च, स्त्री च, अपत्यं सन्ततिः च, सुहृत् च तान्, बलं सैन्यं, ऋद्धं कोशं धनागारं, अन्तःपुरं शुद्धान्तं, रम्याः परिविहारभुवः विहारभूमीः च, जलधिमेखलं भूमण्डलं कालोपसृष्टं कालेन संयोजितम् इति आकलय्य विगणय्य विशालां वदरिकाश्रमं प्रययौ ।

१४ । काले प्रभवं विलयञ्च प्रदर्श्य प्रभवविलययोर्मध्ये भगव-

१५ । स वासनात्मा विषयोपरक्तो
गुणप्रवाहो विकृतः षोड़शात्मा ।
बिभ्रत् पृथङ्नामभिरूपभेद-
मन्तर्वहिष्ट्वं च पुरैस्तनोति ॥

१६ । दुःखं सुखं व्यतिरिक्तञ्च तीव्रं
कालोपसन्नं फलमाव्यनक्ति ।
आलिङ्ग्य मायारचितान्तरात्मा
स्वदेहिनं संसृतिचक्रकूटः ॥५।११।५।६।

च्छक्तिनिर्म्मितत्त्वं द्रढ़यित्वा हरेरेव मूलकारणत्वं स्फोटयति यथेति । यथा एव वारः जलानि काले वर्षाकाले सूर्य्यात् प्रभवन्ति उद्भवन्ति, काले ग्रीष्मे पुनः तस्मिन् सूर्य्ये प्रविशन्ति, यथा च स्थिरजङ्गमानि भूतानि भूमौ प्रविशन्ति, तथा गुणप्रवाहः चेतनाचेतनात्मकः प्रपञ्चः हरौ प्रविशति तत उद्भूयेति शेषः ।

१५ । यद्यात्मा देहाद्यतीतः कुतस्तस्य नामरूपादिभेदस्तदाह स वासनेति । स वासनात्मा वासनायुक्तः आत्मा विषयोपरक्तः विषयैः उपरक्तः अनुविद्धः, अतः गुणप्रवाहः गुणैः इतस्ततः चाल्यमानः, विकृवः कामादिपरिणामवान्, षोड़शात्मा षोड़षकलासु भूतेन्द्रियरूपासु मुख्यः, पृथक् नामभिः सह पृथक् रूपभेदं देवमानवादिरूपं बिभ्रत् अन्तर्वहिष्ट्वम् उत्कृष्टत्वम् अपकृष्टत्वं च पुरैः देहैः हेतुभूतैः तनोति । नामाभिरूपभेदमित्यत्र रेफलोपे दीर्घाभाव आर्षः ।

१६ । सुखदुःखादिकञ्च सर्व्वं तस्य देहकृतमित्याह दुःखमिति । संसृतिचक्रकूटः संसृतिचक्रे कूटयति छलयतीति संसारचक्रे वञ्चनपरः मायारचितान्तरात्मा आत्मा शरीरं—मायया रचितः अन्तरात्मा अन्तःशरीरं जीवोपाधिः स्वदेहिनम् आलिङ्ग्य सुखं दुःखं व्यतिरिक्तं च

१७ । पदं तथा गुणकर्म्मानुबद्धं
वृत्तीर्मनः श्रयतेऽन्यच तत्त्वम् ।
एकादशा सन्मनसो हि वृत्तयः
आकूतयः पञ्चधियोऽभिमानः ॥

१८ । मात्राणि कर्म्माणि पुरञ्च तासां
वदन्ति हैकादश वीर भूमीः ।
गन्धाकृतिः स्पर्शरसश्रवांसि
विसर्गरत्यर्त्त्यभिजल्पशिल्पाः ॥

मोहं च तीव्रं दुर्निवारं कालोपसन्नं कालप्राप्तं फलं आप्यनक्ति सर्व्वतः सृजति ।

१७ । सम्प्रति मनसो वृत्तीर्दर्शयति पदमिति । तथा नैर्गुण्या-वस्थायाः अन्यत्र गुणकर्म्मानुबद्धं मनसः पदं स्वरूपम् । मनः तत्त्वं तदा वृत्तीः श्रयते । कति संख्यकास्ताहृत्तयः ? मनसः एकादश हि वृत्तयः आसन् । कास्ता ? आकूतयः क्रियाकारकाः पञ्च—कर्म्मेन्द्रियाणि, धियः ज्ञानकाराः पञ्च—ज्ञानेन्द्रियाणि, अभिमानः च इति ।

१८ । तासां वृत्तीनां विषयान् दर्शयति मात्राणीति । हे वीर रङ्गगण, मात्राणि मीयन्ते बुद्धिविषयीक्रियन्ते विषयाः एभिः इति मात्राणि रूपादयः पञ्च, कर्म्माणि विसर्गादयः पञ्च, पुरं च देहं च तासां वृत्तीनां एकादश भूमीः विषयान् वदन्ति । तत्र गन्धाकृतिः गन्धः च आकृतिः रूपं च, स्पर्शरसश्रवांसि स्पर्शः च, रसः च, श्रवः शब्दः च, एते पञ्चज्ञानेन्द्रियवृत्तीनां विषयाः, विसर्गरत्यर्त्त्यभिजल्पशिल्पाः विसर्गः त्यागः, रतिः सम्भोगः, अर्त्तिः गतिः, अभिजल्पः वाङ्नियोगः, शिल्पः करनिष्पाद्यक्रिया, एते विसर्गादयः पञ्चकर्म्मेन्द्रियद्वारा कर्म्माकारवृत्तीनां विषयाः ।

१९। एकादशं स्वीकरणं ममेति
शय्यामहं द्वादशमेक आहुः।
द्रव्यस्वभावाशयकर्म्मकालै-
रेकादशामी मनसो विकाराः।
सहस्रशः शतशः कोटिशश्च
क्षेत्रज्ञतो न मिथो न स्वतः स्युः॥५।११।९—११

२०। यदा क्षिताविव चराचरस्य
विदाम निष्ठां प्रभवञ्च नित्यम्।
तन्नामतोऽन्यद्व्यवहारमूलं
निरूप्यतां सत्क्रिययाऽनुमेयम्॥

१९। एकादशस्य पुरस्याभिमानविषयत्वमाह एकादशमिति। एकादशं पुरं शरीरं मम इति स्वीकरणम्—न हि शरीरं ज्ञेयतया गन्धादिवत्, न हि कार्य्यतया विसर्गादिवत्, किन्तर्हि अभिमानतः मम इति स्वीकरणात् भोगायतनम्। एके पुरम् एव शय्याम् अहम् अहङ्कारं द्वादशं विषयम् आहुः। तत्र हि जीवः अहङ्कारेण शेते यतः पुरि शयनात् पुरुष इत्युच्यते। मनोविकाराणामसंख्यभेदानाह— अमी एकादश मनसो विकाराः द्रव्यस्वभावाशयकर्म्मकालैः द्रव्याणि विषयाः, स्वभावः परिणामहेतुः, आशयः संस्कारः, कर्म्म अदृष्टं, कालः क्षोभकः, एतैः निमित्तभूतैः न क्षेत्रज्ञतः जीवतः, न मिथः परस्परतः, न स्वतः किन्तर्हि पारिशेष्यात् भगवच्छक्तितएव शतशः सहस्रशः कोटिशः स्युः।

२०। सर्व्वेषां विकारजातानां सन्मूलकत्वमाह यदेति। यदा क्षितौ मृदि एव चराचरस्य नित्यं प्रभवं जन्म निष्ठां नाशं च विदाम, तत् तदा नामतः नाममात्रात् अन्यत् सत्क्रियया सन्मात्रेण स्थिति-

२१ । एवं निरुक्तं क्षितिशब्दवृत्त-
मसन्निधानात्परमाणवो ये ।
अविद्यया मनसा कल्पितास्ते
येषां समूहेन कृतोविशेषः ॥

२२ । एवं कृशं स्थूलमणुर्वृहद्य-
दसच्च सज्जीवमजीवमन्यत् ।
द्रव्यस्वभावाशयकालकर्म्म
नाम्नाजयावेहि कृतं द्वितीयम् ॥५।१२।८—१०

व्यापारेण व्यवहारमूलं तत्तद्वस्तुव्यवहारस्य मूलं कारणं निरूप्यताम् । तथा च श्रुतिः—"वाचारम्भणं, विकारोनामधेयं, मृत्तिकेत्येव सत्यम् ।"

२१ । घटादिषु विकारजातेषु मृदित्येव सत्यमिति निर्द्धारणं न पुनः मृदः सत्यत्वं दर्शयतीत्याह एवमिति । असन्निधानात् असत्सु सूक्ष्मेषु परमाणुषु निधानात् लयात् क्षितिशब्दवृत्तं क्षितिशब्दस्य वर्त्तनम् सत्ता अपि एवं मिथ्यात्वेन निरुक्तम् । ये परमाणवः, ते मनसा कल्पिताः । कथं कल्पिताः ? येषां परमाणूनां समूहेन विशेषः क्षितिशब्दवाच्यः कृतः तेषां समूहरूपस्य विशेषस्य अन्यथानुपपत्त्या कल्पितास्ते परमाणवः । भवन्तु ते तदा सत्याः ? न, समूहरूपस्य विशेषस्यावयविनिरूपणाशक्यत्वात् अविद्यया अज्ञानेन कल्पिताः ते । परमाणूनां कल्पितत्वमाधुनिकाअपि स्वीकुर्व्वन्ति ।

२२ । 'एवं भगवच्छक्तिकृतं द्वैतं ब्रह्मातिरिक्तमसत्यमित्याह एवमिति । एवम् अन्यत् यत् कृशं, स्थूलम्, अणुः, वृहत्, असत् कारणं, सत् कार्य्यं, जीवं चेतनम्, अजीवम् अचेतनं, द्रव्यस्वभावाशयकालकर्म्म द्रव्यं च, स्वभावः च, आशयः संस्कारः च, कालः च, कर्म्म च द्वितीयं द्वैतं, तत् सर्व्वं नाम्ना उपलक्षितया अजया मायया भगवच्छक्त्या कृतम् ।

२३। सर्व्वेऽपि शूरसेनेमे शोकमोहभयार्त्तिदाः।
गन्धर्व्वनगरप्रख्याः स्वप्नमायामनोरथाः॥
२४। दृश्यमाना विनार्थेन न दृश्यन्ते मनोभवाः।
कर्म्मभिर्ध्यायतो नाना कर्म्माणि मनसोऽभवन्॥
६।१५।२३।२४।
२५। गुणव्यक्तिरियं देवी व्यञ्जको गुणभुक् भवान्।
त्वं हि सर्व्वशरीर्य्यात्मा श्रीः शरीरेन्द्रियाशयः।
नामरूपे भगवती प्रत्ययस्त्वमपाश्रयः॥६।१९।१२।

२३। विषयाणामनित्यत्वेन मिथ्यात्वनिरूपणमित्याह शूरसेनं प्रत्यङ्गिरावचनेन सर्व्वे इति। हे शूरसेन, शोकमोहभयार्त्तिदाः सर्व्वे अपि इमे शब्दादयः विषयाः गन्धर्व्वनगरप्रख्याः आगमापायित्वात् गन्धर्व्वनगरतुल्याः—गन्धर्व्वनगरं ह्यकस्मादेव क्वचिदायाति अपयाति-चेति प्रसिद्धम्, स्वप्नमायामनोरथाः स्वप्नः च, माया च, मनोरथः च यथा तद्वत्।

२४। एषामागमापायित्वं मनोमात्रविजृम्भितमित्याह दृश्यमाना इति। अर्थेन तात्त्विकस्वरूपेण विना दृश्यमाना एते पुनः न दृश्यन्ते, अतएव मनोभवाः मनोमात्रविजृम्भिताः। एते पापपुण्यकृता इति मीमांसकाः, तत् कथं मनोमात्रविजृम्भिता इति सिद्धान्तः? कर्म्मभिः कर्म्मवासनाभिः विषयान् ध्यायतः पुंसः मनसः मनोनिमित्तात् नाना कर्म्माणि अभवन्, अतो मनएव कारणम्।

२५। एवं विषयाणां मिथ्यात्वं प्रतिपाद्य तेषां भगवच्छक्तिमूल-कत्वं तस्याश्च तदस्वतन्त्रत्वमाह गुणव्यक्तिरिति। इयं देवी माया शक्तिः गुणव्यक्तिः गुणानां सृज्यशक्तीनां व्यक्तिः प्रकाशरूपा, भवान् परमपुरुषः व्यञ्जकः सृज्यशक्तीनां प्रकाशकः, गुणभुक् सृज्यशक्तीनां पालकः, त्वं

२६ । वितथाभिनिवेशोऽयं यद्गुणेष्वर्थदृग्वचः ।
यथा मनोरथः स्वप्नः सर्व्वमैन्द्रियकं मृषा ॥
७।२।४८ ।

२७ । प्रत्यगात्मस्वरूपेण दृश्यरूपेण च स्वयम् ।
व्याप्यव्यापकनिर्द्देश्यो ह्यनिर्द्देश्योऽविकल्पितः ॥
७।६।२२ ।

सर्व्वान्तर्यामी सर्व्वशरीर्य्यात्मा सर्व्वेषां शरीरिणाम् आत्मानाम् आत्मा, श्रीः प्रकृतिः मायाशक्तिः, शरीरेन्द्रियाश्रयः, तत्तद्रूपतया त्वत्तस्तेषामुद्भवः स्थितिश्च त्वद्व्यतिरिक्तानां तेषामसम्भवात्, भगवती मायाशक्तिः नामरूपे, त्वं परमात्मा नामरूपयोः प्रत्ययः प्रकाशकः अपाश्रयः आधारः । शक्त्यात्मभूतदृज्यशक्तिसंस्थानविशेषान्नामरूपे । शक्तिः परमात्मनः, तत्त-स्मात्तयोः प्रकाशः ।

२६ । यदि भगवच्छक्तिमूलकमेव सर्व्वं विषयजातं तत्कथं तस्य मिथ्यात्वं प्रतिपादितम् ? तस्य कारणमाह वितथेति । गुणेषु दृज्य-शक्तिषु अर्थदृग्वचः अर्थः विषय इति दृक् दृष्टिः वचः वचनं च यत्, सोऽयं वितथाभिनिवेशः वितथः मिथ्याभूतः अभिनिवेशः दृज्यशक्त्यति-रिक्तानां विषयाणां मिथ्याभूतत्वात् । यथा स्वप्नः यथा मनोरथः तथा ऐन्द्रियकं चक्षुरादिषु भासमानं सर्व्वं मृषा । दृज्यशक्तिसंनिवेशविशेषा एव विषया इत्याधुनिका अपि वदन्ति ।

२७ । जगति जीवे च प्रकाशमानत्वात् अनिर्द्देश्योऽपि अविकल्पि-तोऽपि निर्द्देश्यो भवति भगवानित्याह प्रत्यगात्मेति । अनिर्द्देश्यः अवि-कल्पितः भगवान् परमात्मा स्वयं प्रत्यगात्मस्वरूपेण प्रत्यगात्मा द्रष्टा भोक्ता तत्स्वरूपेण ज्ञानादिना तदभेदेन, दृश्यरूपेण च दृश्यं जगत् तद्रू-पेण तदभेदेन व्याप्यव्यापकनिर्द्देश्यः जगद्रूपेण व्याप्यतया प्रत्यगात्मरूपेण व्यापकतया निर्द्देश्यः उपलभ्यः ।

२८ । अष्टौ प्रकृतयः प्रोक्तास्त्रय एव हि तद्गुणाः ।
विकाराः षोड़शाचार्य्यैः पुमानेकः समन्वयात् ॥
७।७।२२ ।

२९ । आदावन्ते जनानां सद्बहिरन्तः परावरम् ।
ज्ञानं ज्ञेयं वचो वाच्यं तमोज्योतिस्त्वयं स्वयम् ॥

३० । आबाधितोऽपि ह्याभासो यथा वस्तुतया स्मृतः ।
दुर्घटत्वादैन्द्रियकं तद्वदर्थविकल्पितम् ॥

२८ । पूर्व्वाचार्य्यसिद्धानि तत्त्वान्याह अष्टाविति । अष्टौ प्रकृतयः—मूलप्रकृतिर्महदहङ्कारो पञ्चतन्मात्राणि च ; त्रयः—सत्त्वरजस्तमांसि एव हि तद्गुणाः तस्याः प्रकृतेः गुणाः न तु स्वतन्त्राः ; विकाराः षोड़श—एकादशेन्द्रियाणि पञ्चमहाभूतानि ; समन्वयात् एषां साक्षित्वेन सम्बन्धवशात् पुमान् एकः ; एते आचार्य्यैः कपिलादिभिः प्रोक्ताः ।

२९ । अधुना सर्व्वस्य परमात्मानन्यत्वेन विस्पष्टतोऽद्वैततत्त्वमुपदेष्टुमाह आदाविति । जनानाम् उत्पत्तिमतां देहादीनाम् आदौ जन्मतः प्राक् कारणत्वेन, अन्ते उत्पत्त्यनन्तरं अवधित्वेन सत्—'परमात्मलक्षणं सर्व्वकारणं वस्तु सत् वर्त्तमानम्'इति श्रीमज्जीवः—सन्मात्रं यत्, तदेव बहिः भोग्यम्, अन्तः भोक्तृ, परावरम् उच्चनीचम्, ज्ञानं ज्ञेयं, वचः वाच्यम्, तमः अप्रकाशः, ज्योतिः प्रकाशः, अयं स्वयं ज्ञानी तु जीवोऽपि, सर्व्वेषां तेषां सन्मूलकत्वात् ।

३० । यद्येवं परमात्मानन्यत्वमेव पारमार्थिकं तत् कथं तस्मादत्यन्तपृथगिवार्थजातं प्रतीयते तत्राह आबाधित इति । आबाधितः अपि युक्त्या सर्व्वतः बाधितः अपि निरस्तस्वतन्त्रसत्तः अपि यथा आभासः सूर्य्यादिप्रतिरश्मिः वस्तुतया स्वतन्त्रपदार्थतया स्मृतः कल्पितः,

३१ । क्षित्यादीनामिहार्थानां छाया न कतमापि हि ।
न संघातो विकारोऽपि न पृथङ्नान्वितो मृषा ॥
३२ । धातवोऽवयवित्वाच्च तन्मात्रावयवैर्विना ।
न स्युर्ह्यसत्यवयविन्यसन्नवयवोऽन्ततः ॥

तद्वत् ऐन्द्रियकं चक्षुरादिग्राह्यं सर्व्वं विकल्पितं विविधं कल्पितम् । कथं विकल्पितमिति ? दुर्घटत्वात् स्वातन्त्र्यनिरूपणस्य दुष्परिकल्पनीयत्वात् ।

३१ । कथं दुर्घटत्वमित्याह क्षित्यादीनामिति । इह क्षित्यादीनाम् अर्थानां छाया ऐक्यबुद्ध्यालम्बनं देहादि न कतमा अपि न अन्यतमा अपि भवति । केषां न कतमेति स्फोरयति—छायेयं न संघातः, न विकारः, न पृथक्, न अन्वितः, अतएव मृषा देहादेः स्वातन्त्र्येणावस्थितिरिति शेषः । तत्र प्रथमं संघातो न प्रतिपन्नो भवति, यतो देहादेरेकदेशाकर्षणेन न सर्व्वाकर्षणं सिद्ध्यति, न खलु वृक्षाकर्षणेन वनमाकृष्टं भवति । न च विकारः—तत्रारब्धावयविनः पृथक्त्वाप्रतीतेः । न पृथक्—देहादेरेकत्वप्रतीतेः । न च पुनरन्वितः—यदि प्रत्यवयवमन्वयः स्यात् अङ्गुलिमात्रेऽपि देहबुद्धिः स्यात् ; अंशेनान्वये पुनः अवयवानां सम्बन्धोऽविनिर्णय एव स्यात् अंशस्यानन्त्यात् ।

३२ । एवं देहादेः स्वातन्त्र्यरूपं मिथ्यात्वमुक्त्वा तद्धेतूनां क्षित्यादीनामपि तथात्वं प्रतिपादयति धातवइव । धातवः महाभूतानि तन्मात्रावयवैः तन्मात्रैः सूक्ष्मैः अवयवैः विना न स्युः तेषाम् अवयवित्वात् । तर्हि अवयव एव सत्यः स्वतन्त्रइति चेत् न—असति अवयविनि अवयवः अन्ततः असन्, अवयविसद्भावं विना परमाणुलक्षणावयवसद्भावे प्रमाणाभावात् । उक्तमेतत् 'एवं निरुक्तं क्षितिशब्दवृत्तम्' ( २१ ) इत्यत्र । उक्तमत्र श्रीमज्जीवेन—'तस्मादैक्यबुद्ध्यालम्बनरूपं यत् प्रतीयते तत् सर्व्वत परमात्मलक्षणं सर्व्वकारणं वस्त्वेवेति साधूक्तम्—"आदावन्ते

३३ । स्यात् सादृश्यभ्रमस्तावद्विकल्पे सति वस्तुनः ।
जाग्रत्स्वापौ यथा स्वप्ने तथा विधिनिषेधता ॥

जनानां सत्" इत्यादिना' इति । एवमेव हि तृतीयेऽप्युक्तम्—

इति तासां स्वशक्तीनां सतीनामसमेत्य सः ।
प्रसुप्तलोकतन्त्राणां निशाम्य गतिमीश्वरः ॥
कालसंज्ञां ततो देवीं बिभ्रच्छक्तिमुरुक्रमः ।
त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ॥
सोऽनुप्रविष्टो भगवांश्चेष्टारूपेण तं गणम् ।
भिन्नं संयोजयामास सुप्तं कर्म्म प्रबोधयन् ॥ इति ।

अतएव 'यस्य पृथिवी शरीरम्' इत्यादौ सर्व्वस्य परमात्मशरीरत्वेन प्रसिद्धिः, परमात्मवस्तु शरीरित्वेन । तदेवमवयवरूपेण प्रधानपरिणामः सर्व्वत्रावयवि तु परमात्मवस्त्वेवेति सिद्धम् । ततोमिथ्यात्वेऽप्यमिथ्यात्वमेव जगत उपपद्यत इति ।

३३ । परमात्मानन्यत्वसाधनाय देहादीनां स्वातन्त्र्यरूपमिथ्यात्वे साधितेऽपि तेषामतिरोधानात् तद्गतदोषाः परमात्मानमेव स्पृशन्ति । एतन्निवारणायाह स्यादिति । वस्तुनः परमात्मनः विकल्पे सति स्वशक्तिकृते (२५) बहिः अन्तः परम् अवरम् (२८) इत्यादिविविधभेदे सति तावत् सादृश्यभ्रमः तस्मिन्नेव बहिरन्तरित्यादि सदृशत्वस्य भ्रान्तिः स्यात् । स्वशक्तिकृतानां तेषां भेदानां तस्मिन्नारोपएव भ्रमः । एवं सति ज्ञानज्ञेयवचोवाच्यादीनामपि स्वज्यशक्तिकृतानां भ्रान्तित्वमेवायाति, सुतरां शास्त्रस्य विधिनिषेधकता न सिद्ध्यति, अतआह—स्वप्ने स्वप्नमध्ये यथा जाग्रत्स्वापौ जाग्रदवस्था निद्रावस्था इति व्यवस्था भवति अन्यथा समाधिरेव स्यात्, तथा भ्रममध्ये विधिनिषेधता व्यवस्थातः भविष्यति । अयं भावः, स्वप्नमध्ये जाग्रदवस्थाया विद्यमानत्वात् यथा वस्तुदर्शनं भवति, तथा भ्रममध्ये ज्ञानस्य विद्यमानत्वात् विधिनिषेधघटिता भगवत्प्रेरणा सम्भवति ।

३४ । भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं तथात्मनः ।
वर्त्तयन् स्वानुभूत्येह त्रीन् स्वप्नान् धुनुते मुनिः ॥

३५ । कार्य्यकारणवस्त्वैक्यमर्शनं पटतन्तुवत् ।
अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यते ॥

३६ । यद्ब्रह्मणि परे साक्षात् सर्व्वकर्म्मसमर्पणम् ।
मनोवाक्तनुभिः पार्थ क्रियाद्वैतं तदुच्यते ॥

३४ । कथं सिद्धेरद्वैतभावना तदाह भावनात्रयोपदेशेन भावाद्वैतमिति । भावाद्वैतं क्रियाद्वैतं तथा द्रव्याद्वैतं स्वानुभूत्या वर्त्तयन् आलोचयन् मुनिः आत्मनः त्रीन् स्वप्नान् वस्तुभेद-कर्म्मभेद-फलभेदरूपान् धुनुते निवर्त्तयते ।

३५ । अवस्तुद्वैतमाह कार्य्येति । पटतन्तुवत् तन्तुरेव वस्तु न तु पटइति सादृश्येन विकल्पस्य भेदस्य अवस्तुत्वात् यत् कार्य्यकारणवस्त्वैक्यमर्शनं कार्य्यकारणयोः वस्त्वैक्यस्य मर्शनम् आलोचनं तत् भावाद्वैतम् वस्त्वैक्यम् उच्यते । कार्य्यस्यागमापायित्वात् कारणस्य नित्यत्वात् कारणमेव वस्तु न तु कार्य्यमिति पटतन्तुकुण्डलकनकादिवज्ज्ञेयम् । किमिदं वस्त्वैक्यम् ? वस्तूनि सन्मात्रे ऐक्यम् अभिन्नता । दृश्यमानं सर्व्वमदृश्ये विलाप्य ब्रह्मसत्तायां स्थितिर्योगिनां शैली ; सैव च शक्तितत्क्रियामात्रदर्शनव्यग्राणाम् ।

३६ । क्रियाद्वैतमाह यदिति । हे पार्थ युधिष्ठिर, परे ब्रह्मणि मनोवाक्तनुभिः कृतानां कर्म्मणां समर्पणं यत् तत् क्रियाद्वैतम् उच्यते । 'उद्देश्यफलभेदो हि क्रियाभेदे हेतुः, ईश्वरार्पणे च तदभावात् क्रियाणामद्वैतम्' इति स्वामी । भगवदाज्ञापालनमेवोद्देश्यम् । आज्ञापालनेन फलमिदं लभ्यते मयेति फलस्पृहा उद्देश्यतः विच्छेदं साधयति । यदि

३७। आत्मजायासुतादीनामन्येषां सर्व्वदेहिनाम्।
यत् स्वार्थकामयोरैक्यं द्रव्याद्वैतं तदुच्यते॥

७।१५।५७—६५।

३८। सएव स्वप्रकृत्येदं सृष्ट्वाग्रे त्रिगुणात्मकम्।
तदनु त्वं ह्यप्रविष्टः प्रविष्ट इव भावसे॥

न फलस्पृहा स्यात्, तदा भगवदाज्ञायास्तदभेदात् तदनुसरणोत्पन्नक्रिया तत्क्रियैव भवेदविरोधादिति क्रियाद्वैतमुपतिष्ठते।

३७। द्रव्याद्वैतमुच्यते आत्मेति। आत्मनः स्वस्य जायासुतादीनाम् अन्येषां सर्व्वदेहिनां च स्वार्थकामयोः स्वार्थः—तत्तद्रव्याणां भगवन्निर्द्दिष्टप्रयोजनं—कामश्च तद्भोगाभिलाषश्च तदुभयोः ऐक्यम् अविरोधिभावः यत्, तत् द्रव्याद्वैतम् उच्यते। अतएवाह गीतायाम्—"धर्म्माविरुद्धोभूतेषु कामोऽस्मि भरतर्षभ।" (गी ७।११) इति। यस्मै प्रयोजनाय यस्य सृष्टिः, तदेव तस्य धर्म्माविरुद्धभाव इति ज्ञेयम्।

किमिदं सात्त्वतसंहितासम्मतमद्वैतत्त्वं श्लोकत्रयेणात्र स्पष्टमभिव्यक्तम्। प्रथमन्तावत् कार्य्यकारणयोरनन्यत्वेन सर्व्वेषां कार्य्यभूतानां वस्तूनां तत्कारणेन भगवतैक्यदर्शनं, द्वितीये तु यया जीवानुष्ठितक्रियया द्वैतभाव उपतिष्ठते तस्याः क्रियाया भगवत्प्रेरणासम्भूतत्वात् तस्यैव सेति क्रियासम्भूतद्वैतनिवृत्तिः, तृतीये पुनः अन्यैर्व्यवहारकालेऽनुभूतं द्वैतं तदेव निवर्त्तते यदा तत्तदुद्भूताभिलाषास्तत्तन्निहितभगवदभिप्रायेणैक्यं भजन्ते।

३८। एवमद्वैततत्त्वे सिद्धेऽपि न जातु प्रकृतेस्तत्क्रियायाश्चासत्यत्वमापतति सृष्टिप्रक्रियातस्तदेव दर्शयति स एवेति। स एव प्रकृतेः परः पुरुषः एव त्वं स्वप्रकृत्या स्वशक्त्या त्रिगुणात्मकं प्रकाशप्रकाशोन्मुख्याप्रकाशरूपाः त्रयः गुणाः सृज्यशक्तयः तदात्मकं तदुपादानम्

३९ । यथेमेऽविकृताभावास्तथा ते विकृतैः सह ।
नानावीर्य्याः पृथग्भूता विराजं जनयन्ति हि ॥

४० । सन्निपत्य समुत्पाद्य दृश्यन्तेऽनुगता इव ।
प्रागेव विद्यमानत्वान्न तेषामिह सम्भवः ॥

१०।३।१४—१६ ।

४१ । त्वत्तोऽस्य जन्मस्थितिसंयमान् विभो
वदन्त्यनीहादगुणादविक्रियात् ।
त्वयीश्वरे ब्रह्मणि नो विरुध्यते
त्वदाश्रयत्वादुपचर्य्यते गुणैः ॥१०।३।१९ ।

इदं जगत् सृष्ट्वा तदनु सृष्ट्यनन्तरम् अप्रविष्टः हि प्रविष्टः इव भाव्यसे निरूप्यसे । पृथिव्यादिष्वन्तर्यामितया विद्यमानोऽपि तदतीतो हि सः, अतस्तेषु प्रविष्ट इव भासमानोऽप्यप्रविष्ट एव ।

३९।४० । न केवलं परमपुरुषस्यैव सर्व्वकारणतया सृष्टेः प्राक् विद्यमानतया ह्यप्रविष्टत्वे प्रविष्टवत् भासमानता, किन्तर्हि तत्त्वच्छक्ति-विकाराणामपि तथा, अतएव तान् दृष्टान्तत्वेनोपन्यस्यति यथेति सन्नि-पत्येति । इमे अविकृताः भावाः महदादयः यथा तथा इति दृष्टान्तः । ते अविकृताः भावाः पृथग्भूताः नानावीर्य्याः परस्परासंश्लिष्टसामर्थ्याः सुतरां विशिष्टकार्य्यासमर्थाः, अतः समुत्पाद्य षोड़शविकारानुत्पाद्य तैः विकृतैः षोड़शविकारैः सह सन्निपत्य विराजं जनयन्ति, अनुगताः इव दृश्यन्ते । तेषाम् अविकृतभावानां प्राक् एव उत्पत्तेः पूर्व्वम् एव विद्य-मानत्वात्, न तेषाम् इह सृष्टे कार्य्ये सम्भवः प्रवेशः ।

४१ । अप्रविष्टोऽपि प्रविष्ट इव स भातीत्युक्त्वा कर्त्तृत्वेऽप्यकर्त्तृत्व-माह त्वत्त इति । हे विभो, अनीहात् प्रयत्नशून्यात् अगुणात्

४२। सत्त्वं रजस्तम इति भजते निर्गुणो गुणान्।
क्रीड़न्नतीतोऽत्र गुणैः सृजत्यवति हन्त्यजः॥
१०।४६।४०।

४३। खं वायुर्ज्योतिरापोभूस्तत्कृतेषु यथाशयम्।
आविस्तिरोऽल्पभूर्य्येको नानात्वं यात्यसावपि॥
१०।८५।२५।

प्रकाशप्रकाशैन्मुख्याप्रकाशरूपत्वविरहितात् अविक्रियात् विकारविहीनात् त्वत्तः अस्य जगतः जन्मस्थितिसंयमान् वदन्ति, तदेतत् ईश्वरे ब्रह्मणि त्वयि नो न विरुद्ध्यते। कथम्? त्वदाश्रयत्वात् गुणैः सृज्यशक्तिभिः कुर्व्वद्भिः त्वयि उपचर्य्यते सृष्ट्यादिकर्त्तृत्वमिति शेषः।

४२। न हि सृज्यशक्तिस्वीकारं विना सृष्टिः सम्भवति, स्वयं सृज्यशक्तयश्च तं विना न सृष्टिव्यापारं साधयितुं समर्थाः; एवं सति सृष्ट्यादिकर्त्तृत्वोपचारस्तस्मिन् कथमुपदिश्यते? अत्र सिद्धान्तमाह सत्त्वमिति। निर्गुणः गुणातीतः—अन्यथा तैरेव बद्धः स्यात्—सत्त्वं रजः तमः इति गुणान् सृज्यशक्तीः भजते स्वीकरोति तेषामाश्रयत्वात्; अतीतः गुणातीतः अपि अत्र गुणेषु क्रीड़न् लीलां विदधत् अजः जन्मरहितः स गुणैः सृज्यशक्तिभिः सृजति अवति रक्षति हन्ति च। स्वयन्तु तान् प्रयोजयन्नपि तदाश्रयत्वात् तदीतत्वात् निर्व्विकारस्तिष्ठतीति भावः।

४३। सृजशक्तिभिरुत्पन्नेषु पृथ्यादिषु तस्य प्रकाशस्तत्तदुपाध्यनुसारेण प्रकटाप्रकटाल्पभूरित्वेन भवतीत्याह खमिति। खं, वायुः, ज्योतिः, आपः, भूः, तत्कृतेषु एषु यथाशयं यथोपाधि आविः आविर्भावः तिरः तिरोभावः अल्पभूरि इत्यादिरूपेण एकः अपि असौ नानात्वं याति। वस्तुतस्तु सोऽपरिवर्त्तनीय एव तिष्ठति; द्रष्टुरुपाधिभेदासामर्थ्यादेवं प्रतीयते।

४४ । जनिमसतः सतो मृतिमुतात्मनि ये च भिदां
विपणमृतं स्मरन्त्युपदिशन्ति त आरुपितैः ।
त्रिगुणमयः पुमानिति भिदा यदबोधकृता
त्वयि न ततः परत्र स भवेदवबोधरसे ॥
१०।८७।२५ ।

४५ । सतदृदमुत्थितं सदिति चेन्ननु तर्कहतं
व्यभिचरति क्व च क्व च मृषा न तथोभययुक् ।
व्यवहृतये विकल्पइषितोऽन्धपरम्परया
भ्रमयति भारती त उरुवृत्तिभिरुक्थजड़ान् ।
१०।८७।३६ ।

४४ । विविधभ्रमस्वरूपाणि विवृणोति जनिमिति । असतः जनिम् उत्पत्तिं जगतः ये वैशेषिकाः, ब्रह्मत्वस्य तु ये पातञ्जलादयः, सतः एव—षड़िन्द्रियाणि षड़् बुद्धयः षड़् विषयाः सुखं दुःखं शरीरश्चेति एकविंशतिप्रकारस्य दुःखस्य—मृतिं नाशं मोक्षं ये नैयायिकाः, उत अपि आत्मनि भिदां भेदं ये च सांख्यादयः, विपणं कर्म्मफलव्यवहारं ऋतं सत्यं ये च मीमांसकाः स्मरन्ति वदन्ति, ते आरुपितैः आरोपितैः भ्रमैः एव उपदिशन्ति । कथमेषामुपदेशो भ्रमविजृम्भित इति निर्द्देशः ? यत् यस्मात् त्वयि त्रिगुणमयः पुमान् पुरुषः इति भिदा भेदः अबोधकृता अज्ञानविजृम्भिता—न हि तव त्रिगुणमयत्वं विना तत्तद्वादिनां पक्षः सिद्ध्यति ; त्वयि तु त्रिगुणमयत्वं न सम्भवति—ततः परत्र परे असङ्गे अवबोधरसे ज्ञानघने त्वयि न स अबोधः अज्ञानता भवेत् सम्भवेत् ।

४५ । न हि जातु नित्याया भगवच्छक्तेर्मिथ्यात्वं कुत्रचिच्छास्त्रे प्रतिपादितं किन्तर्हि तदुत्थितं दर्शनादिविषयं सर्व्वमागमापायित्वा-

४६। शोकमोहौ सुखं दुःखं देहोत्पत्तिश्च मायया।
स्वप्नो यथात्मनः ख्यातिः संसृतिर्न तु वास्तवी॥
४७। विद्याविद्ये मम तनू विद्धुद्धव शरीरिणाम्।
मोक्षबन्धकरी आद्ये मायया मे विनिर्म्मिते॥
११।११।२।३।

मृषेति निर्णीतम्। ननु भगवच्छक्तेः सत्यत्वे तदुत्थितं सर्व्वं सत्यमनश्वरमित्यायाति, न ह्येतद्युक्त्या प्रतिपन्नं भवति तदाह सतइति। सतः इदं जगत् उत्थितम्, अतः सत् नित्यकालस्थायि इति चेत्, न, तर्कहतं युक्त्या नित्यकालस्थायित्वं व्याहतम्—नु-तर्के, यतः क्व च कस्मिन् काले व्यभिचरति रूपान्तरतां भजते, क्व च कस्मिन् काले मृषा असत्त्वं याति। चेन्नित्यकालस्थायि सत्यं स्यात्, न तथा उभययुक् रूपान्तरत्वमसत्त्वमित्युभययुक् भवेत्। एवमस्याचिरस्थायित्वे कथं चिरस्थायित्वज्ञानमुत्पद्यते? तत्राह—व्यवहृतये संसारप्रसिद्धये अन्धपरम्परया विकल्पः अचिरस्थायित्वे स्थायित्वभ्रमः इषितः इष्टः। न केवलं पृथग्जनानां स्थायित्वबुद्धिरस्मिन् दृश्यते, किन्तर्हि वेदवादिनामपीत्याह—ते तव भारती वेदलक्षणा उरुवृत्तिभिः बह्वीभिः गौणलक्षणादिवृत्तिभिः उकथजड़ान् कर्म्मश्रद्धाभाराक्रान्तमन्दमतीन् भ्रमयति मोहयति। कर्म्मानुष्ठानादनुष्ठाता स्वर्गे पुनरक्षय्यं भोगं लभेतेति वाक्यैः भोग्यानां चिरस्थायित्वे तेषां मृषाश्वासः समुत्पन्नः।

४६। संसारस्य स्वप्नवदचिरस्थायित्वं स्पष्टवाक्येनाह शोकमोहाविति। मायया भगवच्छक्त्या शोकमोहौ सुखं दुःखं देहोत्पत्तिः च। यदि भगवच्छक्तिरेव तेषां जनयित्री, स्यात्तेषां तदा नित्यत्वं; न तथेत्याह—स्वप्नः यथा आत्मनः ख्यातिः सांस्कारिकाचिरस्थायिज्ञानं, तथा संसृतिः संसारः न तु वास्तवी वस्तुत्वेन स्थायिनी।

४७। विद्यया मुक्तिरविद्यया बन्धनमिति यत् तदपि भगवच्छक्ति-

४८ । सत्त्वं ज्ञानं रजः कर्म्म तमोऽज्ञानमिहोच्यते ।
गुणव्यतिकरः कालः स्वभावः सूत्रमेव च ॥

४६ । पुरुषः प्रकृतिर्व्यक्तमहङ्कारो नभोऽनिलः ।
ज्योतिरापः चितिरिति तत्त्वानुक्तानि मे नव ॥

५० । श्रोत्रं त्वग्दर्शनं घ्राणं जिह्वेति ज्ञानशक्तयः ।
वाक्पाण्युपस्थपाय्वङ्घ्रिः कर्म्माण्यङ्गोभयं मनः ॥

कृतमित्याह विद्येति । हे उद्धव, मे मम अन्तर्यामिणः मायया चिच्छक्त्या निर्म्मिते मम अन्तर्यामिणः मोक्षबन्धकरी मोक्षबन्धसाधिके आद्ये अनादी विद्याविद्ये तनू क्रियाप्रकाशभूमौ विद्धि जानीहि । अत्रेदं विवेच्यम्, विद्याविद्ययोर्भगवच्छक्तिनिर्म्मितत्त्वे जीवबुद्धिनिष्ठत्वमेव तयोरायाति, सर्व्वविधनिर्म्माणस्य तद्बुद्धौ विहितत्वात् । एवं सति सुबुद्धिर्विद्या कुबुद्धिरविद्येति सिद्धाति । शोकमोहादिकं सर्व्वं कुबुद्धेरदेति, भगवदुपासनादिकन्तु सुबुद्धेरित्येकस्या बन्धकत्वम्, अपरस्या मोचकत्वम् ।

४८ । सृज्यशक्तीनां स्वरूपाण्याह सत्त्वमिति । सत्त्वं ज्ञानं प्रकाशस्वरूपं, रजः कर्म्म प्रकाशोन्मुख्यं प्रकाशोन्मुखतायां क्रियाशीलत्वं घटते इति कर्म्म तत्स्वरूपम, तमः अज्ञानम् अप्रकाशः, गुणव्यतिकरः गुणानां व्यतिकरः क्षोभः यस्मात् स कालः, स्वभावः, सूत्रं महत्तत्त्वम् ।

४६ । तत्त्वान्याह पुरुषइति । पुरुषः, प्रकृतिः, व्यक्तं महत्तत्त्वम्, अहङ्कारः, नभः आकाशम्, अनिलः वायुः, ज्योतिः तेजः, आपः, चितिः मे मम नव तत्त्वानि उक्तानि । नभइत्यादिभिः पञ्चतन्मात्राणीति व्याख्यातारः । तत्त्वमुक्तं गीताभाष्ये ।

५० । ज्ञानेन्द्रियाणि कर्म्मेन्द्रियाण्याह श्रोत्रमिति । अङ्ग हे उद्धव, श्रोत्रं, त्वक्, दर्शनं, घ्राणं, जिह्वा इति ज्ञानशक्तयः पञ्च ज्ञाने-

५१ । शब्दः स्पर्शोरसो गन्धो रूपं चेत्यर्थजातयः ।
गत्युक्त्युत्सर्गशिल्पानि कर्म्मायतनसिद्धयः ॥

५२ । सर्गादौ प्रकृतिर्ह्यस्य कार्य्यकारणरूपिणी ।
सत्त्वादिभिर्गुणैर्धत्ते पुरुषोऽव्यक्त ईक्षते ॥
११।२२।१३—१७ ।

न्द्रियाणि ; वाक्, पाणिः, उपस्थः, पायुः, अङ्घ्रिः कर्म्माणि कर्म्मशक्तयः कर्म्मेन्द्रियाणि, मनः उभयम् उभयेन्द्रियसाधारणम् ।

५१ । इन्द्रियाणां विषयानाह शब्द इति । शब्दः, स्पर्शः, रसः, गन्धः, रूपं च इति अर्थजातयः विषयतया परिणतानि पञ्चभूतानि ; गत्युक्त्युत्सर्गशिल्पानि गतिः च, उक्तिः च, उत्सर्गौ च, शिल्पं च कर्म्मायतनसिद्धयः कर्म्मायतनानां कर्म्मेन्द्रियाणां सिद्धयः फलानि ।

५२ । प्रकृतिपुरुषविवेकमाह सर्गादाविति । अस्य विश्वस्य सर्गादौ सृष्टेः प्राक् प्रकृतिः कार्य्यकारणरूपिणी कार्य्याणि षोड़श-विकाराः कारणानि महदहङ्कारपञ्चतन्मात्राणि तद्रूपिणी, सत्त्वादिभिः गुणैः सृज्याद्यवस्थां धत्ते उपादानकारणत्वात्, पुरुषः तु अव्यक्तः अपरिणामी निमित्तभूतः केवलम् ईक्षते । अतः परिणामिन्याः प्रकृतेः पुरुषो भिन्नः । अत्र ( ११।२२।१८—२४ ) भिन्नभिन्नैर्ऋषिभिः कृतं तत्त्वप्रसंख्यानं निबद्धम् ; तद्यथा—(१) सप्त तत्त्वानि—आकाशादयः पञ्च, जीवः, आत्मा च ; (२) षट्तत्त्वानि—आकाशादयः पञ्च, परमात्मा च ; (३) चत्वारि तत्त्वानि—तेजः, आपः, अन्नम्, आत्मा च । (४) सप्तदश तत्त्वानि—पञ्चभूतानि, पञ्चतन्मात्राणि, पञ्चेन्द्रियाणि, मनः, आत्मा च ; (५) षोड़शतत्त्वानि—पञ्चभूतानि, पञ्चतन्मात्राणि, पञ्चेन्द्रियाणि मनश्च ; (६) त्रयोदश तत्त्वानि—पञ्चभूतानि, पञ्चेन्द्रियाणि, मनः, आत्मा, परमात्मा च ; (७) एकादश तत्त्वानि—पञ्च-

५३ । ममाङ्ग माया गुणमय्यनेकधा
विकल्पबुद्धीश्च गुणैर्विधत्ते ।
वैकारिकस्त्रिविधोऽध्यात्ममेक-
मथाधिदैवमधिभूतमन्यत् ॥

५४ । दृग्रूपमार्कं वपुरत्र रन्ध्रे
परस्परं सिद्ध्यति यः स्वतः खे ।
आत्मा यदेषामपरो य आद्यः
स्वयानुभूत्याऽखिलसिद्धसिद्धिः ।
एवं त्वगादि श्रवणादि चक्षु-
र्जिह्वादि नासादि च चित्तयुक्तम् ॥

११।२२।३०।३१ ।

भूतानि, पञ्चेन्द्रियाणि, आत्मा च ; ( ८ ) नव तत्त्वानि—प्रकृतिः, महान्, अहङ्कारः, पञ्चतन्मात्राणि, पुरुषश्च । एवं प्रसंख्यानमुक्त्वाह—

इति नाना प्रसंख्यानं तत्त्वानामृषिभिः कृतम् ।
सर्व्वं न्याय्यं युक्तिमत्त्वाद् विदुषां किमशोभनम् ॥ (११।२२।२५) इति ।

५३ । वैकारिकसर्गमाह

प्रकृतिः पुरुषश्चेति विकल्पः पुरुषर्षभ ।
एष वैकारिकः सर्गो गुणव्यतिकरात्मकः ॥ (११।२२।२९)

इति पुरुषो ह्यपरिणामी प्रकृतिः परिणामिनीति प्रकृतिपुरुषयोरत्यन्त भेदमुद्दिश्य ममेति । अङ्ग हे उद्धव, गुणमयी मम माया गुणैः सृज्य-शक्तिभिः अनेकधा विकल्पबुद्धीः विकल्पो भेदः तद्बुद्धीः च विधत्ते । विकल्पबुद्धीनामनेकत्वेऽपि स्थूलतस्त्रिविधो वैकारिकः सर्गः ।—एकम् अध्यात्मम्, अथ अपरम् अधिदैवम्, अन्यत् अधिभूतम् ।

५४ । तानि स्फुटतया दर्शयति दृगिति । दृक् चक्षुः—अध्यात्मम्,

५५। मनः कर्म्ममयं नृणामिन्द्रियैः पञ्चभिर्युतम्।
लोकाल्लोकं प्रयात्यन्य आत्मा तदनुवर्त्तते॥

११।२२।३६।

रूपं—अधिभूतम्, अत्र रन्ध्रे चक्षुर्गोलके प्रविष्टम् आर्कं वपुः अंशः—अधिदैवम्। एतत् त्रयं परस्परं सिद्ध्यति। न हि चक्षुर्विना दर्शनं सिद्ध्यति; न चेत् रूपं स्यात्, किं वा चक्षुषोर्दर्शनविषयं स्यात्; स्याच्चेत् रूपं तथापि तत्प्रकाशकः सूर्य्यश्चेन्न स्यात् चक्षुषः प्रवृत्तिरेव नोपपद्येत, अत आह—खे आकाशे यः सूर्य्यः स स्वतः सिद्ध्यति। अध्यात्माधिभूताधिदैवतातिरिक्त आत्मा तेभ्यो भिन्नः स्वप्रकाशः परप्रकाशकश्चेत्याह—यत् यस्मात् आत्मा एषाम् अध्यात्मादीनाम् आद्यः कारणं, तस्मात् एतेभ्यः अपरः भिन्नः। यः आत्मा स्वया अनुभूत्या स्वतःसिद्धप्रकाशेन अखिलसिद्धसिद्धिः अखिलानां सिद्धानां परस्परप्रकाशकानां सिद्धिः प्रकाशकः सर्व्वेषां तेषां सामान्यतश्चित्प्रकाश्यत्वात्। चक्षुषि दर्शितं त्रैविध्यमिन्द्रियान्तरेष्वतिदिशति एवमिति,—एवं चक्षुर्यथा तथा त्वगादि—त्वक्, स्पर्शः, वायुः। श्रवणादि—श्रवणं, शब्दः, दिशः; जिह्वादि—जिह्वा, रसः, वरुणः; नासादि—नासा, गन्धः, अश्विनौ:, चित्तयुक्तम् चित्तेन युक्तम्। अन्तःकरणमपि त्रिविधं तद्यथा—चित्तं, चेतयितव्यं, वासुदेवः; मनः मन्तव्यं, चन्द्रः; बुद्धिः, बोद्धव्यं, ब्रह्मा; अहङ्कारः, अहङ्कर्त्तव्यम्, रुद्रः।

५५। सम्प्रतीन्द्रियाणां मनसश्च विवृतेर्मूलोद्देश्यं जीवगतिप्रदर्शनेन दर्शयति मम इति। नृणां मनुष्याणां कर्म्ममयं मनः पञ्चभिः इन्द्रियैः ज्ञानेन्द्रियैः युतं लोकात् लोकं प्रयाति, अन्यः मनसो भिन्नः एव आत्मा तत् मनः अनुवर्त्तते अनुगच्छति। एतल्लोकलोकान्तरगमनं जीवस्य गीताभाष्ये विशेषतः प्रदर्शितम्।

५६ । सत्त्वसङ्गादृषीन् देवान् रजसासुरमानुषान् ।
तमसा भूततिर्य्यक्त्वं भ्रामितो याति कर्म्मभिः ॥
११।२२।५१ ।

५७ । यथाम्भसा प्रचलता तरवोऽपि चला इव ।
चक्षुषा भ्राम्यमाणेन दृश्यते भ्रमतीव भूः ॥

५८ । यथा मनोरथधियो विषयानुभवो मृषा ।
स्वप्नदृष्टाश्च दाशार्ह तथा संसार आत्मनः ॥
११।२२।५३।५४ ।

५९ । शमो दमस्तितिक्षेक्षा तपः सत्यं दया स्मृतिः ।
तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दयादिः स्वनिर्वृतिः ॥

५६ । एवं लोकलोकान्तरभ्रमणे सत्त्वादीनां गतिनियामकत्वमाह सत्त्वेति । कर्म्मभिः भ्रामितः लोकलोकान्तरे भ्राम्यमाणः सत्त्वसङ्गात् ऋषीन् देवान्, रजसा असुरमानुषान्, तमसा भूततिर्य्यक्त्वं याति प्राप्नोति ।

५७।५८ । आत्मा चेत् मन एवानुगच्छति, स्वयमविकार्य्येव तिष्ठति, कथं तस्मिन् चलत्वमनुभूयते दृष्टान्तमुखेन तत्कारणं दर्शयति युग्मकेन यथेति यथेति । यथा प्रचलता अम्भसा तटस्थाः तरवः अपि चलाः इव दृश्यन्ते, चक्षुषा भ्राम्यमाणेन यथा भूः भ्रमती इव दृश्यते, यथा मनोरथधियः स्वप्नदृष्टाः च मृषा, तथा, हे दाशार्ह उद्धव, आत्मनः संसारः विषयानुभवः मृषा मिथ्या ।

५९ । सत्त्वादिनिमित्तगत्युल्लेखादनन्तरं तेषां वृत्तीराह शम इति । शमः अन्तरेन्द्रियनियमनं, दमः बाह्येन्द्रियनियमनम्, तितिक्षा दुःखसहनम्, ईक्षा विवेकः, तपः स्वधर्म्मवर्त्तित्वम्, सत्यं यथाभूतार्थभाषणम्, दया भूतेषु दुःखग्रस्तेषु, स्मृतिः पूर्व्वपरानुसन्धानम्, तुष्टिः यथालाभ-

६० । काम ईहा मदस्तृष्णा स्तम्भ आशीर्भिदा सुखम् ।
मदोत्साहो यशः प्रीतिर्हास्यं वीर्य्यं बलोद्यमः ॥

६१ । क्रोधो लोभोऽनृतं हिंसा याञ्चा दम्भः क्लमः कलिः ।
शोकमोहौ विषादार्त्ती निद्राशा भीरनुद्यमः ॥

६२ । सत्त्वस्य रजसश्चैतास्तमसश्चानुपूर्व्वशः ।
वृत्तयो वर्णितप्रायाः सन्निपातमथो शृणु ॥

सन्तोषः, त्यागः व्ययशीलता, अस्पृहा विषयवैराग्यम्, श्रद्धा आस्तिक्यम्, ह्रीः अनुचितकर्म्मणि लज्जा, दया दानम् ; आदिशब्देन आर्ज्जवविनयादि, स्वनिर्वृतिः आत्मरतिः । "सत्त्वस्य रजसश्चैतास्तामसश्चानुपूर्व्वशः" इत्युक्तत्वात् एते सत्त्ववृत्तयः ।

६० । रजसोवृत्तीराह कामेति । कामः अभिलाषः—स्वर्गादि, ईहा व्यापारः—यज्ञादि, मदः दर्पः, तृष्णा लाभे सत्यसन्तोषः, स्तम्भः गर्व्वः, आशीः धनाद्यभिलाषेण देवतादिप्रार्थनम्, भिदा अहमन्य इति भेदबुद्धिः, सुखं विषयभोगः, मदोत्साहः मदेन युद्धाद्यभिनिवेशः, यशःप्रीतिः स्तुतिप्रियता, हास्यम् उपहासः, वीर्य्यं प्रभावाविष्कारः, बलोद्यमः बलेन उद्यमः,—न्यायेनोद्यमः सात्त्विकएव ।

६१ । तमोवृत्तीराह क्रोधइति । क्रोधः असहिष्णुता, लोभः व्ययपराङ्मुखता, अनृतम् असत्यम्, हिंसा परपीड़ा, याञ्चा दैन्यप्रदर्शनम्, दम्भः आत्मनो धार्म्मिकत्वख्यापनम्, क्लमः श्रमः, कलिः कलहः, शोकमोहौ अनुशोचनं भ्रमश्च, विषादार्त्ती दुःखं दैन्यं च, निद्रा तन्द्रा, आशा ममेदं भविष्यतीति प्रतीक्षा, भीः भयम्, अनुद्यमः जाड्यम् ।

६२ । सत्त्वादीनां वृत्तीरुद्दिश्य सम्प्रति मिश्राणां तेषां वृत्तीर्वर्णयितुमुपक्रमते सत्त्वस्येति । अनुपूर्व्वशः क्रमेण श्लोकत्रयेण सत्त्वस्य, रजसः च, तमसः च एताः वृत्तयः वर्णितप्रायाः अन्या अपि ऊह्या इति भावः ; अथ अनन्तरं सन्निपातं विमिश्रं शृणु ।

६३ । सन्निपातस्त्वहमिति ममेत्युद्धव या मतिः ।
व्यवहारः सन्निपातो मनोमात्रेन्द्रियासुभिः ॥

६४ । धर्म्मे चार्थे च कामे च यदासौ परिनिष्ठितः ।
गुणानां सन्निकर्षोऽयं श्रद्धारतिधनावहः ॥

६५ । प्रवृत्तिलक्षणे निष्ठा पुमान् यर्हि गृहाश्रमे ।
स्वधर्म्मे चानु तिष्ठेत गुणानां समितिर्हि सा ॥

६६ । पुरुषं सत्त्वसंयुक्तमनुमीयाच्छमादिभिः ।
कामादिभीरजोयुक्तं क्रोधाद्यैस्तमसा युतम् ॥

६३ । मिश्राणां वृत्तीराह सन्निपात इति त्रिभिः । हे उद्धव, सन्निपातः तु—अहमिति ममेति या मतिः—अहं शान्तः, अहं कामी, अहं क्रोधी, मम शान्तिरस्ति, मम कामोऽस्ति, मम क्रोधोऽस्ति इत्यादि सन्निपातकार्य्यमेव, अहमिति ममेतीत्यस्य सर्व्ववृत्तिसामानाधिकरण्य-दर्शनात् । मनोमात्रेन्द्रियासुभिः मनः च, मात्राणि स्पर्शादीनि च, इन्द्रियाणि च, असवः प्राणाः च तैः सात्त्विकराजसतामसैः व्यवहारः सन्निपातः विमिश्रएव ।

६४ । धर्म्मइति । धर्म्मे च अर्थे च कामे च यदा असौ पुरुषः परिनिष्ठितः निष्ठायुक्तः, तदा श्रद्धारतिधनावहः श्रद्धादिसमुत्पादकः गुणानां सत्त्वरजस्तमसां सन्निकर्षः सन्निपातः अयं, धर्म्मादीनां सत्त्वरज-स्तमःकार्य्यत्वात् ।

६५ । प्रवृत्तीति । प्रवृत्तिलक्षणे काम्यधर्म्मे निष्ठा, तथा पुमान् यर्हि यदा गृहाश्रमे तिष्ठेत अनु पश्चात् स्वधर्म्मे च तिष्ठेत, सा हि धर्म्म-निष्ठायां गुणानां सत्त्वरजस्तमसां समितिः सन्निपातः ।

६६ । कैर्लक्षणैः सत्त्वादियुक्तत्वं पुरुषस्य निर्णीयात् तदाह पुरुष-

६७। यदा भजति मां भक्त्या निरपेक्षः स्वकर्म्मभिः।
तं सत्त्वप्रकृतिं विद्यात् पुरुषं स्त्रियमेव च॥

६८। यदा त्वाशिष आशास्य मां भजेत स्वकर्म्मभिः।
तं रजःप्रकृतिं विद्याद्धिंसामाशास्य तामसम्॥

६९। सत्त्वं रजस्तम इति गुणा जीवस्य नैव मे।
चित्तजा यैस्तु भूतानां सज्जमानो निबद्ध्यते॥

७०। यदेतरौ जयेत् सत्त्वं भास्वरं विशदं शिवम्।
तदा सुखेन युज्येत धर्म्मज्ञानादिभिः पुमान्॥

मिति त्रिभिः। शमादिभिः सत्त्वसंयुक्तं, कामादिभिः रजोयुक्तं, क्रोधाद्यैः तमसा युतं पुरुषम् अनुमीयात्।

६७। यदेति। यदा निरपेक्षः सन् स्वकर्म्मभिः भक्त्या माम् अन्तर्यामिणं भजति, तं पुरुषं स्त्रियम् एव च सत्त्वप्रकृतिं विद्यात्।

६८। यदेति। यदा तु आशिषः धनाभिलाषान् आशास्य आकाङ्क्ष्य स्वकर्म्मभिः माम् अन्तर्यामिणं भजते पुरुषः, तं रजःप्रकृतिं, हिंसाम् आशास्य यः भजते तं तामसं तमःप्रकृतिं विद्यात् जानीयात्।

६९। सत्त्वरजस्तमांसि जीवोपाधौ चित्ते व्यज्यन्ते न तु परमात्मनीत्याह सत्त्वमिति। सत्त्वं रजः तमः इति गुणाः जीवस्य, मे मम सर्व्वान्तर्यामिणः न एव। कथम्? एते चित्तजाः चित्ते एव जायन्ते अभिव्यक्ताः भवन्ति। यैः गुणैः तु भूतानां देहरूपाणाम् अन्येषां च मध्ये सज्जमानः निमज्जमानः जीवः निबद्ध्यते बद्धो भवति।

७०। एकेन गुणेनान्यगुणद्वये पराभूते तस्यैकस्योद्रेके किं भवति तदाह यदेति त्रिभिः। यदा सत्त्वम् इतरौ रजस्तमसौ जयेत् अभिभवेत्, तदा तत् भास्वरं प्रकाशकं विशदं स्वच्छं शिवं शान्तं भवति,

७१ । यदा जयेत् तमः सत्त्वं रजः सङ्गं भिदा बलम् ।
तदा दुःखेन युज्येत कर्म्मणा यशसा श्रिया ॥
७२ । यदा जयेद्रजः सत्त्वं तमो मूढ़ं लयं जड़म् ।
युज्येत शोकमोहाभ्यां निद्रया हिंसयाशया ॥
७३ । यदा चित्तं प्रसीदेत इन्द्रियाणाञ्च निर्वृतिः ।
देहेऽभयं मनोऽसङ्गं तत् सत्त्वं विद्धि मत्पदम् ॥
७४ । विकुर्व्वन् क्रियया चाधीरनिवृत्तिश्च चेतसाम् ।
गात्रास्वास्थ्यं मनोभ्रान्तं रजएतैर्निशामय ॥

तेन च पुमान् सुखेन धर्म्मज्ञानादिभिः युज्येत। आदिशब्दात् शमादिभिश्च।

७१। यदेति। यदा रजः तमः सत्त्वं जयेत् अभिभवेत्, तदा तत् सङ्गं सङ्गहेतुः भिदा भेदहेतुः, बलं बलहेतुः भवति, तेन च दुःखेन, कर्म्मणा, यशसा, श्रिया च पुमान् युज्येत।

७२। यदेति। यदा तमः रजः सत्त्वं जयेत् अभिभवेत्, तदा तत् मूढ़ं विवेकभ्रंशकं, लयम् आवरणात्मकं, जड़म् अनुद्यमात्मकं भवति। तेन च शोकमोहाभ्यां, निद्रया, हिंसया, आशया च पुमान् युज्येत।

७३। पुनश्चोद्रिक्तसत्त्वस्य लक्षणान्याह यदेति। यदा चित्तं प्रसीदेत स्वच्छं भवेत्, इन्द्रियाणां च निवृतिः उपरतिः, देहे अभयं, मनः असङ्गं भवेत्, तत् तदा मत्पदं मम अन्तर्यामिणः पदम् उपलब्धि-स्थानं सत्त्वम् उद्रिक्तं विद्धि।

७४। पुनश्चोद्रिक्तरजसो लक्षणान्याह विकुर्व्वन्निति। यदा क्रियया विकुर्व्वन् विकारं प्राप्नुवन् आधीः समन्तात् विक्षिप्तधीः चेतसां बुद्धीन्द्रियाणाम् अनिवृत्तिः अनुपरतिः च, गात्रास्वास्थ्यं गात्राणां कर्म्म-

७५ । सीदच्चित्तं विलीयेत चेतसो ग्रहणेऽक्षमम् ।
मनो नष्टं तमोग्लानिस्तमस्तदुपधारय ॥
७६ । एधमाने गुणे सत्त्वे देवानां बलमेधते ।
असुराणाञ्च रजसि तमस्युद्धव रक्षसाम् ॥
७७ । सत्त्वाज्जागरणं विद्याद्रजसः स्वप्नमादिशेत् ।
प्रस्वापं तमसा जन्तोस्तुरीयं त्रिषु सन्ततम् ॥
७८ । उपर्य्युपरि गच्छन्ति सत्त्वेन ब्राह्मणा जनाः ।
तमसाधोऽध आमुख्याद्रजसान्तरचारिणः ॥

न्द्रियाणाम् अस्वास्थ्यं विकाराधिक्यं, मनो भ्रान्तं चञ्चलम् अस्थिरं भवति, तदा रजः उद्रिक्तं निशामय जानीहि ।

७५ । पुनश्चोद्रिक्ततमसो लक्षणान्याह सीददिति । सीदत् तिरोभवत् चेतसः ग्रहणे चिदाकारपरिणामे अक्षमं सत् चित्तं विलीयते, मनः नष्टं लीनं, तमः अज्ञानम्, ग्लानिः विषादः च भवति, तत् तदा तमः उद्रिक्तम् उपधारय विद्धि ।

७६ । एधमान इति । हे उद्धव, सत्त्वे गुणे एधमाने वृद्धिं प्राप्ते देवानां निवृत्तिप्रधानानाम् इन्द्रियाणां बलम् एधते वर्द्धते, रजसि एधमाने असुराणां प्रवृत्तिप्रधानानाम् इन्द्रियाणां बलं वर्द्धते, तमसि एधमाने रक्षसां मोहप्रधानानाम् इन्द्रियाणां बलं वर्द्धते ।

७७ । सत्त्वादिति । सत्त्वात् जागरणं विद्यात् जानीयात्, रजसा स्वप्नम् आदिशेत् निर्द्दिशेत्, तमसा प्रस्वापं गभीरनिद्राम् आदिशेदिति-शेषः । तुरीयं चतुर्थावस्थान्तरं त्रिषु जागरणादिषु सन्ततम् अनवच्छिन्नम् एकम् आत्मतत्त्वं जानीयात् ।

७८ । सत्त्वादिभिरूर्द्ध्वादिगतीराह उपर्य्युपरीति । सत्त्वेन ब्राह्मणा ब्रह्मन्नाः—आब्रह्मण इति पाठे ब्रह्मलोकम् अभिव्याप्य,—जनाः उप-

७९ । सत्त्वे प्रलीनाः स्वर्यान्ति नरलोकं रजोलयाः ।
तमोलयास्तु निरयं यान्ति मामेव निर्गुणाः ॥

८० । मदर्पणं निष्फलं वा सात्त्विकं निजकर्म्म तत् ।
राजसं फलसङ्कल्पं हिंसाप्रायादि तामसम् ॥

८१ । कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकञ्च यत् ।
प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥

र्ध्वमुपरि गच्छन्ति, तमसा अधोधः, रजसा आमुख्यात् स्थावरान् पार्थिव-लोकान् अभिव्याप्य अन्तरचारिणः मध्यलोकविहारिणः, भवन्ति । तत्त्वमस्य गीताभाष्ये द्रष्टव्यम् ।

७९ । मृत्युकाले गुणानुसारतो गतीराह सत्त्वइति । सत्त्वे प्रवृद्धे प्रलीनाः मृताः स्वर् स्वर्गं यान्ति, रजोलयाः रजसि प्रवृद्धे लयः मृत्युः येषां ते नरलोकं यान्ति, तमोलयाः तमसि प्रवृद्धे लयः मृत्युः येषां ते निरयं यान्ति, निर्गुणाः गुणातीताः माम् अन्तर्यामिणम् एव यान्ति ।

८० । गुणभेदेन कर्म्माण्याह मदर्पणमिति । निष्फलं फलस्पृहा-शून्यं मदर्पणं मम अन्तर्यामिणः प्रीत्युद्देशेन कृतं यत् निजकर्म्म स्वभाव-विहितं कर्म्म तत् सात्त्विकम् । फलसङ्कल्पं फलं सङ्कल्पते अस्मिन् इति फलसङ्कल्पं यत् निजकर्म्म तत् राजसं । हिंसाप्रायादि हिंसोद्देशेन कृतं हिंसाबहुलञ्च यत् निजकर्म्म तत् तामसम् । आदिशब्दात् दम्भमात्स-र्य्यादिकृतम् ।

८१ । गुणनिर्गुणभेदेन ज्ञानचातुर्व्विध्यमाह कैवल्यमिति । कैवल्यं देहादिव्यतिरिक्तात्मविषयं ज्ञानं सात्त्विकम् ; यत् च ज्ञानं वैकल्पिकं देहाद्यतिरिक्तात्मविषयं तत् राजसम् ; प्राकृतं बालमूढादिज्ञानतुल्यं ज्ञानं तामसम् ; मन्निष्ठं परमात्मविषयं ज्ञानं निर्गुणं गुणातीतं स्मृतम् ।

८२ । वनन्तु सात्त्विको वासो ग्रामो राजस उच्यते ।
तामसं द्यूतसदनं मन्निकेतन्तु निर्गुणम् ॥

८३ । सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः ।
तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥

८४ । सात्त्विक्याध्यात्मिकी श्रद्धा कर्म्मश्रद्धा तु राजसी ।
तामस्यधर्म्मे या श्रद्धा मत्सेवायान्तु निर्गुणा ॥

८५ । पथ्यं पूतमनायस्तमाहार्य्यं सात्त्विकं स्मृतम् ।
राजसञ्चेन्द्रियप्रेष्ठं तामसं चार्त्तिदाशुचि ॥

८२ । गुणनिर्गुणभेदेन वासचातुर्व्विध्यमाह वनमिति । वनं विविक्तत्वात् सात्त्विकः वासः, ग्रामः अविविक्तत्वात् राजसः वासः ; द्यूतसदनं द्यूतक्रीड़ास्थानं तामसम् ; मन्निकेतं तु मम अन्तर्यामिणः निकेतनं प्रकाशभूमिः तु निर्गुणं गुणातीतस्थानम् ।

८३ । गुणनिर्गुणभेदेन कर्त्तृचातुर्व्विध्यमाह सात्त्विकइति । सात्त्विकः कारकः कर्त्ता असङ्गी अनासक्तः, राजसः कर्त्ता रागान्धः अत्यभिनिवेशवान् स्मृतः, तामसः कर्त्ता स्मृतिविभ्रष्टः अनुसन्धानशून्यः, मदपाश्रयः मदेकशरणः निर्गुणः निरहङ्कारत्वात् ।

८४ । गुणनिर्गुणभेदेन श्रद्धाचातुर्व्विध्यमाह सात्त्विकीति । सात्त्विकी श्रद्धा आध्यात्मिकी, राजसी श्रद्धा तु कर्म्मश्रद्धा, अधर्म्मे या श्रद्धा सा तामसी, मत्सेवायां मम अन्तर्यामिणः भजने श्रद्धा तु निर्गुणा गुणातीता ।

८५ । गुणभेदेनाहारभेदमाह पथ्यमिति । पथ्यं हितं, पूतं शुद्धम्, अनायस्तम् अनायासतः प्राप्तम् आहार्य्यं सात्त्विकं स्मृतम् ; इन्द्रियप्रेष्ठं कट्वम्ललवणादि राजसम् आहार्य्यम्, आर्त्तिदाशुचि पीड़ा-

८६ । सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् ।
तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयम् ॥

८७ । द्रव्यं देशः फलं कालो ज्ञानं कर्म्म च कारकः ।
श्रद्धाऽवस्थाकृतिर्निष्ठा त्रैगुण्यः सर्व्व एव हि ॥

८८ । सर्व्वे गुणमया भावाः पुरुषाव्यक्तधिष्ठिताः ।
दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ ॥

११।२५।२—३२ ।

करम् अशुचि च तामसम् आहार्य्यम् । चशब्दात् मन्निवेदितं निर्गुणम् इत्यभिप्रेतमिति श्रीमत्स्वामी ।

८६ । गुणनिर्गुणभेदेनसुखचातुर्व्विध्यमाह सात्त्विकमिति । आत्मोत्थं सुखं सात्त्विकम्, विषयोत्थं सुखं तु राजसं, मोहदैन्योत्थं सुखं तामसम्, मदपाश्रयं सुखं निर्गुणम् ।

८७ । उक्तं संसारहेतुभूतं त्रैगुण्यमुपसंहरति द्वाभ्यां द्रव्यमिति । द्रव्यं पथ्यपूतादि, देशः वनग्रामादिः, फलं 'सात्त्विकं सुखम्' इत्यादि । कालः 'यदा भजेत मां भक्त्या' 'यदेतरौ जयेत् सत्त्वम्' इत्यादिना यः अर्थात् उक्तः, ज्ञानं 'कैवल्यं सात्त्विकम्' इत्यादि, कर्म्म 'मदर्पणम्' इत्यादि, कारकः कर्त्ता 'सात्त्विकः कारकोऽसङ्गी' इत्यादि, श्रद्धा 'सात्त्विक्याध्यात्मिकी' इत्यादि, अवस्था 'सत्त्वाज्जागरणम्' इत्यादि, आकृतिः 'उपर्य्युपरि गच्छन्ति' इत्यादिना उक्ता देवत्वादिरूपा, निष्ठा 'सत्त्वे प्रलीना स्वर्यान्ति' इत्यादिनोक्तः स्वर्गादिः, सर्व्व एव हि त्रैगुण्यः त्रिगुणात्मकः गुणव्यतिकरस्यापरिहार्य्यत्वात्, सात्त्विकं राजसमित्यादि-कथनन्तु तत्तत्प्राधान्यविवक्षया ।

८८ । अनुक्तसंग्रहं करोति सर्व्वे इति । हे पुरुषर्षभ, दृष्टं, श्रुतं,

८९ । शोकहर्षभयक्रोधलोभमोहस्पृहादयः ।
अहङ्कारस्य दृश्यन्ते जन्म मृत्युश्च नात्मनः ॥
११।२८।१५ ।

९० । यत् सामान्यविशेषाभ्यामुपलभ्येत स भ्रमः ।
अन्योन्यापाश्रयात् सर्व्वमाद्यन्तवदवस्तु यत् ॥

९१ । विकारः ख्यायमानोऽपि प्रत्यगात्मानमन्तरा ।
न निरूप्योऽस्त्यणुरपि स्याच्चेच्चित्सम आत्मवत् ॥

बुद्ध्या वा अनुध्यातं यत्किञ्च, पुरुषाव्यक्ताधिष्ठिताः पुरुषप्रकृत्यधिष्ठिताः सर्व्वे भावाः गुणमयाः ।

८९ । यावदहंज्ञानं स्फुरति तावदेव शोकादयो दृश्यन्ते ; अतो वस्तुविचाराच्छोकादयो देहाद्यभिमानवतोऽहंज्ञानस्यैव प्रतीयन्ते नत्वात्मनो देहाद्यतीतस्य । तस्मात्तदेवाह शोकेति । शोक-हर्ष-भय-क्रोध-लोभ-मोह-स्पृहादयः जन्म मृत्युश्च अहङ्कारस्य दृश्यन्ते, न आत्मनः । आदिशब्देन 'स्थूलोऽहं,' 'कृशोऽहम्' इत्याद्यहंज्ञानम् ।

९० । कार्य्यकारणवादस्य दोषमुद्भावयति यदिति । सामान्यविशेषाभ्यां सामान्यं कारणं विशेषः कार्य्यं ताभ्यां यत् उपलभ्येत, स भ्रमः । कथम् ? अन्योन्यापाश्रयात् । न हि कारणं विना कार्य्यं, कार्य्यं विना कारणं सिद्ध्यति । यदि ब्रूषे सत्यां कार्य्योत्पत्तौ कारणस्य कारणसंज्ञा न तु तत्पूर्व्वं, तर्हि यत् आद्यन्तवत्, तत् सर्व्वम् अवस्तु । यदि हि कारणस्य कारणत्वं नासीत् पश्चात् कार्य्यरूपस्रात्तज्जातं, तदा आदौ कारणत्वाभावादन्तेऽपि कारणत्वाभावः प्रसज्येत । अतस्तस्य आद्यन्तवत्त्वादवस्तुत्वं, कार्य्यस्यापि तथा ।

९१ । किं पुनस्तत्त्वं तदाह विकार इति । विकारः ख्यायमानः प्रकाशमानः अपि प्रत्यक्षतः दृश्यमानः अपि तदस्वीकारासामर्थ्या-

९२ । न हि सत्यस्य नानात्वमविद्वान् यदि मन्यते ।
नानात्वं छिद्रयोर्यद्वज्ज्योतिषोर्वातयोरिव ॥

९३ । यथा हिरण्यं बहुधा प्रतीयते
नृभिः क्रियाभिर्व्यवहारवर्त्मसु ।
एवं वचोभिर्भगवानधोक्षजो
व्याख्यायते लौकिकवैदिकैर्जनैः ॥

१२।४।२७—३० ।

इत्यपीति भावः प्रत्यगात्मानं परमात्मानम् अन्तरा विना स्वातन्त्र्येणेति भावः अणुरपि अल्पांशः अपि न निरूप्यः, सर्व्वस्य चित्प्रकाश्यत्वात् । तं विनाणुरपि चेत् स्यात्, चित्समः स स्वप्रकाशः आत्मवत् एकरूपः स्यात् । अतो विकारः प्रकाश्योविषयः, प्रत्यगात्मा प्रकाशको विषयीति सिद्धम् । अतएवोक्तम्—

द्रव्यं कर्म्म च कालश्च स्वभावो जीव एव च ।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥ (२।१०।१२) ।

९२ । विकारश्चेत् चित्प्रकाश्यः, तं विना न तस्य सिद्धिः, तदा तस्यास्वातन्त्र्ये परमात्मनः सोपाधिकत्वमायाति, सोपाधिकत्वे पुनस्तस्य नानात्वमनिवार्य्यम् । तस्मिन् प्रकाशमानैर्विकारैर्न भवति तस्य नानात्वमिति दृष्टान्तयोगादुपपादयति न हीति । न हि सत्यस्य सर्व्वविकारमूलस्य नानात्वं, यदि तस्य नानात्वं मन्यते स अविद्वान् अज्ञानी । कथं तदा नानात्वं प्रतीयते ? छिद्रयोः महाकाशघटाकाशयोः, ज्योतिषोः गृहाङ्गनगतसर्व्वव्यापितेजसोः, वातयोः वाह्यशरीरस्थयोः वाय्वोः इव नानात्वम् । सर्व्वातीतः स परात्मा सर्व्वमन्तर्भूय विद्यमानः, सुतरामन्तर्वाह्यविद्यमानत्वात् प्रतिवस्तु परिच्छिन्नवत् प्रतीयते, वस्तुतो न स तथेति फलितार्थः ।

९३ । यदि नैवं नानात्वं कथं वा भगवांस्तत्तन्नामभिर्बहुधाभि-

धीयते तदाह यथेति। यथा व्यवहारवर्त्मसु नृभिः हिरण्यं स्वर्णं क्रियाभिः तत्तद्रचनाभेदैः बहुधा कटकुण्डलादिरूपेण समीयते प्रतीयते, एवं लौकिकैः वैदिकैः वचोभिः भगवान् अधोक्षजः सर्व्वेन्द्रियातीतः जनैः बहुधा व्याख्यायते। नामभेदे न वस्तुभेद इति फलितार्थः। दृष्टान्ततः पुनः कार्य्यकारणयोरनन्यत्वं ध्वनितम्।

विषयनिर्द्देशाख्येऽस्मिन्नध्याये भगवत्सर्ज्जनशक्तेस्तदात्मभूतस्य्च्यशक्तीनाञ्च नित्यत्वं, विश्वस्य तदुत्पन्नस्य स्वातन्त्र्येणासत्त्वम्, अद्वैततत्त्वं, जीवस्य गुणानुसारि लोकलोकान्तरभ्रमणं, भगवन्निष्ठत्वस्य गुणातीतत्वमित्यादिकं निरूपितम्।

इति श्रीसात्त्वतसंहितोत्थायां व्याख्यानसहितायां श्रीमद्गीताप्रपूर्त्तौ विषयनिर्द्देशो नाम षष्ठोऽध्यायः।

---

# सप्तमोऽध्यायः।

## दर्शनश्रवणनिर्द्देशः।

१। तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया।
पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया॥

१।२।१२।

१। एवं ब्रह्मपरमात्मभगवत्तत्प्रकृतिद्वयनिर्द्देशानन्तरमपरोक्ष-ज्ञानमूलं दर्शनं श्रवणञ्च निर्णेतुमध्याय आरभ्यते

यो मां पश्यति सर्व्वत्र सर्व्वं च मयि पश्यति। (६।३०)

सम सर्व्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।
विनश्यत्स्वविनश्यन्तं य. पश्यति स पश्यति॥ (१३।२७)

इत्यादिषु यद्दर्शनं—

न श्रोष्यसि विनङ्क्ष्यसि (१८।५८)

इत्यत्र च यच्छ्रवणमुद्घोषितं तत्प्रपूर्त्तिरूपः। तत्रादौ साधारणतो दर्शनं निर्णीयते तदिति। श्रद्दधानाः मुनयः ज्ञानवैराग्ययुक्तया श्रुतगृहीतया वेदान्तश्रवणेन प्राप्तया भक्त्या आत्मनि क्षेत्रज्ञे तत्—ब्रह्मपरमात्मभगव-च्छब्दसंज्ञितमद्वयं ज्ञानतत्त्वम्—आत्मानं परात्मानं पश्यन्ति साक्षात् कुर्व्वन्ति। आत्मानं—'स्वरूपाख्य-जीवाख्य-मायाख्य-शक्तीनामाश्रयम्' इति श्रीमज्जीवः। ज्ञानवैराग्ययुक्तया भक्त्येत्यनेन निवृत्तियोगादनन्तरं निवृत्तिपरिपुष्टप्रवृत्तियोगस्योल्लेखः। संहितायामस्यामयं पारमहंस्य-धर्म्मत्वेनोक्तः, तद्यथा पञ्चमस्कन्धे—"महानुभावः परमसुहृद्भगवानृषभ-भापदेश उपशमशीलानामुपरतकर्म्मणां महामुनीनां भक्तिज्ञानवैराग्य-लक्षणं पारमहंस्यधर्म्ममुपशिक्षमाणः......भरतं धरणीपालनायाभिषिच्य

२ । भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः ।
क्षीयन्ते चास्य कर्म्माणि दृष्टएवात्मनीश्वरे ॥
१।२।२१ ।

३ । पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः ।
तमसस्तु रजस्तस्मात् सत्त्वं यद्ब्रह्मदर्शनम् ॥
१।२।२४ ।

..... ब्रह्मवर्त्तात् प्रवव्राज ।" (५।५।२८) इति । उपरतकर्म्मणां वैदिकयागादितो निवृत्तानां । हरितोषणकर्म्म तु भक्तावन्तर्भूतम् ।

२ । क्षेत्रज्ञे परमात्मनि दृष्टे सति किं भवति तदाह भिद्यत इति । आत्मनि क्षेत्रज्ञे ईश्वरे दृष्टे सति एव अस्य हृदयग्रन्थिः चिज्जड़ग्रथनरूपः भिद्यते, अतः सर्व्वसंशयाः सर्व्वे संशयाः असम्भावनादिरूपाः छिद्यन्ते, कर्म्माणि अनारब्धफलानि च क्षीयन्ते ।

३ । भगवद्दर्शनेषद्दर्शनादर्शनभेदं दर्शयति दृष्टान्तमुखेन पार्थिवादिति । पार्थिवात् स्वतःप्रवृत्तिप्रकाशरहितात् दारुणः काष्ठात् धूमः प्रवृत्तिस्वभावः, तस्मात् प्रवृत्तिस्वभावात् धूमात् त्रयीमयः वेदोक्तकर्म्मप्रचुरः अग्निः प्रकाशस्वभावः यथा, तथा तमसः ब्रह्मदर्शनप्रतिरोधिनः रजः ; रजसः प्रवृत्तिमतः उपाधियोगादीषद्दर्शनोपयोगिनः यत् सत्त्वं, तद् ब्रह्मदर्शनम् । अयं भावः—यज्ञीयकाष्ठस्य देवाधिष्ठानजनितक्रियाप्रदर्शकता नास्ति, तस्य प्रवृत्तिप्रकाशविरहितत्वात् ; धूमस्य पुनः प्रवृत्तिमत्त्वात् तत्र देवाधिष्ठानजनितेषत्क्रियाप्रदर्शकत्वमस्ति ; अग्निस्तु प्रकाशवत्त्वात् देवाधिष्ठानजनितक्रियां साक्षात् दर्शयति । एवं तमसा अज्ञानेनाच्छन्नस्य न भवति जातु ब्रह्मदर्शनम्, रजसा तु सर्व्वत्र भगवत्क्रियादर्शनं भवति, न तु स्वयं भगवान् दृक्पथगतो भवति ; सत्त्वेन तु चित्तनैर्म्मल्यात् साक्षात् तस्य दर्शनं सिद्ध्यति ।

४ । यत्रेमे सदसद्रूपे प्रतिषिद्धे स्वसंविदा ।
अविद्ययात्मनि कृते इति तद्ब्रह्मदर्शनम् ॥
५ । यद्येषोपरता देवी माया वैशारदी मतिः ।
सम्पन्न एवेति विदुर्महिम्नि स्वे महीयते ॥
१।३।३३।३४ ।

६ । स वेद धातुः पदवीं परस्य
दुरन्तवीर्य्यस्य रथाङ्गपाणेः ।

४ । उपाधियोगाद्भगवद्दर्शनं न चेत् साक्षाद्दर्शनं कदा साक्षाद्दर्शनं भवति तदाह यत्रेति । अविद्यया अज्ञानेन आत्मनि चित्स्वरूपे, इमे —महदादिभिर्मायागुणैर्वैराजेन क्षेत्रज्ञेन च विरचिते—सदसद्रूपे स्थूल-सूक्ष्मरूपे कृते इति स्वसंविदा स्वरूपसम्यग्ज्ञानेन यत्र यदा प्रतिषिद्धे भवतः तत् तदा ब्रह्मदर्शनं भवति । "विराड़विदुषाम्" (१०।४३।१७) इत्याद्यनुसारेण स्थूलसूक्ष्मरूपत्यागेन भवति साक्षाद्ब्रह्मदर्शनमिति ज्ञेयम् ।

५ । कथमेवं भवति तदाह यदीति । यदि एष भगवत्स्वरूपा-च्छादकसदसद्रूपविधात्री वैशारदी—विशारदः निर्म्माणकुशलः ईश्वरः तस्येयं वैशारदी देवी क्रीड़ननिरता माया उपरता निवृत्ता भवति स्वय-मावरणमपाकरोति, तदा मतिः साक्षाद्भगवज्ज्ञानं भवति । तया च जीवः सम्पन्नः ब्रह्मसम्पन्नः एव इति विदुः पण्डिताः । कथं सम्पन्नः ? स्वे महिम्नि स्वमहिमहेतुभूते ब्रह्मणि तन्निरपेक्षमहिमत्वाभावात् मही-यते पूज्यते महिमान्वितः भवति । तथा च श्रुतिः—

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्य मीशमस्य महिमानमेति वीतशोकः ॥ (मु, ३।१।२) इति ।

६ । भगवद्भजनशीलायैव न तु सर्व्वस्मै माया स्वयमावरणमपा-करोतीत्याह स वेदेति । दुरन्तवीर्य्यस्य अनभिभवनीयसामर्थ्यस्य रथाङ्ग-

योऽमायया सन्ततयानुवृत्त्या
भजेत तत्पादसरोजगन्धम् ॥१।३।३८।

७। तस्मिंस्तदा लब्धरुचेर्महामुने
प्रियश्रवस्यस्खलिता मतिर्मम ।
ययाहमेतत् सदसत् स्वमायया
पश्ये मयि ब्रह्मणि कल्पितं परे ॥१।५।२७।

८। तस्मिन्निर्मनुजेऽरण्ये पिप्पलोपस्थ आश्रितः ।
आत्मनात्मस्थमात्मानं यथाश्रुतमचिन्तयम् ॥

पाणेः—रथाङ्गं तेजस्तत्त्वं तदेव पाणौ करे यस्य—स्वकरगतेन स्वाधीनेन तेजसा शक्त्या क्रियानिर्व्वाहकस्य तस्य परस्य धातुः विधातुः पदवीं स्वरूपं मायावरणविमुक्तं स वेद जानाति, यः अमायया अकुटिलभावेन सन्ततया निरन्तरया अनुवृत्त्या तदानुकूल्येन तत्पादसरोजगन्धं भजेत । गन्धमिति पदेनापापविद्धशुद्धस्वरूपं व्यनक्ति, न हि तच्छरणापन्नतां विना वासनाविकारनिवृत्तिर्मायावरणविमुक्तभगवत्स्वरूपप्रकाशश्च जीवसन्निधौ ।

७। अनन्तरं श्रीमन्नारदानुभवेन दर्शनं श्रवणञ्चोभयं निर्णेतुं श्रीमद्व्याससन्निधावुपवर्णितं तस्य स्वजीवनवृत्तमुपन्यसितुमुपक्रमते तस्मिन्निति । हे महामुने व्यास, लब्धरुचेः अज्ञानन्तरं प्राप्तरुचेः मम तस्मिन् प्रियश्रवसि प्रियं श्रवः श्रवणं यस्य तस्मिन् भगवति अस्खलिता अप्रतिहता मतिः अभवत् ; यया मत्या परे ब्रह्मणि मयि च एतत् सदसत् स्थूलसूक्ष्मं स्वमायया स्वविषयकभगवन्मायया कल्पितम् अहं पश्ये । मायावरणविमुक्तो भूत्वात्मनो भगवतश्च साक्षाज्ज्ञानं लब्धवानिति भावः ।

८। एवमुपक्रम्य श्रीमन्नारदजीवनवृत्तमुपन्यस्यति तस्मिन्निति ।

९ । ध्यायतश्चरणाम्भोजं भावनिर्ज्जितचेतसा ।
औत्कण्ठ्याश्रुकलाक्षस्य हृद्यासीन्मे शनैर्हरिः ॥

१० । प्रेमातिभरनिर्भिन्नपुलकाङ्गोऽतिनिर्वृतः ।
आनन्दसंप्लवे लीनो नापश्यमुभयं मुने ॥

११ । रूपं भगवतो यत्तत् मनःकान्तं शुचापहम् ।
अपश्यन् सहसोत्तस्थे वैक्लव्याद्दुर्मना इव ॥

गृहान्निर्गमानन्तरं तस्मिन् निर्मनुजे जनशून्ये अरण्ये पिप्पलोपस्थे अश्वत्थमूले आस्थितः उपविष्टः आत्मना बुद्ध्या आत्मस्थं हृदिस्थम् आत्मानं परमात्मानं यथाश्रुतं भिक्षुभिरुपदिष्टां रीतिमनतिक्रम्य अचिन्तयम् अध्यायम् ।

९ । एवं चिन्तयतस्तस्य हृदि भगवानाविर्बभूवेत्युच्यते ध्यायत इति । भावनिर्ज्जितचेतसा भावेन भक्त्या निर्ज्जितं वशीकृतं यत् चेतः तेन भगवतः चरणाम्भोजं ध्यायतः औत्कण्ठ्याश्रुकलाक्षस्य औत्कण्ठ्येन वैवश्येन अश्रुकलायुक्ते अक्षिणी यस्य तस्य मे मम हृदि हरिः शनैः स्वरूपविभवाविष्कारक्रमेण आसीत् आविर्बभूव ।

१० । तदाविर्भावे किमभवत् तदाह प्रेमेति । प्रेमातिभरनिर्भिन्नपुलकाङ्गः प्रेम्णः अतिभरेण निर्भिन्नः अभिव्यक्तः पुलकः अङ्गेषु यस्य, अतिनिर्वृतः निरतिशयप्रशान्तः, आनन्दसंप्लवे आनन्दानां महापूरे लीनः सन् उभयम् आत्मानं परमात्मानं च न अपश्यम् । आनन्दजनितमूर्च्छाऽभवदिति तत्त्वम् ।

११ । नेयं मूर्च्छा दीर्घकालव्यापिनी । मूर्च्छापगमे स्वसौन्दर्य्यमहिम्ना भगवद्विद्यमानता पुनः प्रतिभाति । न तदानन्दजनितमूर्च्छाया विह्वलावस्थापगता, अतः शून्यमनस्कत्वमुपतिष्ठते, तद्रूपञ्च तिरोधत्त । तान्येवाह रूपमिति । मनःकान्तम् अभीष्टं, शुचापहं

१२ । दिदृक्षुस्तदहं भूयः प्रणिधाय मनो हृदि ।
वीक्षमाणोऽपि नापश्यमवितृप्त इवातुरः ॥
१३ । एवं यतन्तं विजने मामाहागोचरो गिराम् ।
गम्भीरश्लक्ष्णया वाचा शुचः प्रशमयन्निव ॥
१४ । हन्तास्मिन् जन्मनि भवान् मा मां द्रष्टुमिहार्हति ।
अविपक्वकषायाणां दुर्दर्शोऽहं कुयोगिनाम् ॥

शोकापनुदं भगवतः यत् रूपं स्वरूपसौन्दर्य्यं तत् सहसा अपश्यन् नालोकयन् वैक्लव्यात् वियोगक्लेशात् दुर्म्मनाः इव उत्तस्थे व्युत्थितः रूपदर्शनाद्वियुक्तः बभूवे । स्मृतावानयनद्योतनार्थमुत्तमपुरुषे लिट् ।

१२ । रूपदर्शनवियोगानन्तरं न तत् पुनर्यत्नेन दृग्गोचरीभवतीत्याह दिदृक्षुरिति । भूयः पुनः तत् रूपं दिदृक्षुः द्रष्टुमिच्छुः हृदि मनः प्रणिधाय स्थिरीकृत्य वीक्षमाणः विशिष्टभावेन निरीक्षणपरायणः अपि न अपश्यं दृष्टवान् । अतः अवितृप्तः तृप्तिमलभमानः इव आतुरः क्लिष्टः अभवम् ।

१३ । दर्शनानन्तरं श्रवणं परिसान्त्वनायाभवत्, तदेवाह एवमिति । एवं विजने यतन्तं मां गिरामगोचरः वाचामतीतः ईश्वरः गम्भीरश्लक्ष्णया गम्भीरा हृदवगाहिनी अथच श्लक्ष्णा सूक्ष्मा आन्तरप्रतीतिमात्रविषया एवम्भूतया वाचा—'महद्भूतम्' इति वचनान्निश्वसितमेवेति तत्त्वम्—शुचः प्रशमयन् इव आह ।

१४ । किमाह तद्वर्णयति हन्तेति । हन्त—सानुकम्पसम्बोधने—हे नारद, अस्मिन् जन्मनि अपरिहृतचित्तमलावस्थायां भवान् माम् इह अस्मिन् प्रदेशे द्रष्टुं मा अर्हति न योग्यः भवति । कथम् ? अविपक्वकषायाणां न विपक्वाः न दग्धाः कषायाः मलाः कामादयः येषां तेषां कुयोगिनाम् अनिष्पन्नयोगानाम् अहं दुर्दर्शः सति सन्निधावपि तैर्न दर्शनीयः ।

१५ । सकृद्यद्दर्शितं रूपमेतत् कामाय तेऽनघ ।
मत्कामः शनकैः साधुः सर्व्वान् मुञ्चति हृच्छयान् ॥

१६ । सत्सेवयाऽदीर्घयापि जाता मयि दृढ़ा मतिः ।
हित्वावद्यमिमं लोकं गन्ता मज्जनतामसि ॥

१७ । मतिर्मयि निबद्धेयं न विपद्येत कर्हिचित् ।
प्रजासर्गनिरोधेऽपि स्मृतिश्च मदनुग्रहात् ॥

१५ । भगवद्दर्शनकामानां चित्तकषाये विद्यमानेऽपि तेषामनुरागोद्दीपनाय, तेन च विषयवितृष्णापादनाय करुणया सकृद्दर्शनदानं घटते । साधकसम्प्रदायानुभूतस्यास्यानुग्रहस्याभिप्रायं स्वयं भगवान् विवृणोति सकृदिति । हे अनघ अनिष्फलप्रयास, एतत् रूपं सकृत् मया यत् दर्शितं तत् ते तव कामाय अनुरागाय । त्वत्कामेन किमित्यत आह—मत्कामः पुमान् शनकैः क्रमेण साधुः सन् सर्व्वान् हृच्छयान् कामान् अन्यवासनाः मुञ्चति परित्यजति ।

१६ । अनुग्रहकारणं दर्शयति सदिति । अदीर्घया स्वल्पकालव्यापिन्या अपि सत्सेवया सतां साधूनां सेवया मयि ते मतिः दृढ़ा जाता । किमनया भविष्यति ? इमं पार्थिवविषयाभिनिवेशवशात् अवद्यं निन्दनीयं लोकं पार्थिवजीवनप्रचुरं संसारं हित्वा त्यक्त्वा मज्जनतां मत्पार्षदतां गन्ता असि गमिष्यसि । परिहृतपार्थिवजीवनस्य भगवानेव लोकोभवति 'एषोऽस्य परमोलोकः' इति श्रवणात् ; सुतरां संसारे स्थितोऽपि स भगवत्येव निवसति, स च तदा तस्यैव जनो भवति नान्यस्य—

स जहाति मतिं लोके वेदे च परिनिष्ठिताम् । (४।२९।४६)

इति स्मरणात् ।

१७ । "सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" ( गी १४।२ )

१८। एतावदुक्त्वोपरराम तन्मह-
द्भूतं नभोलिङ्गमलिङ्गमीश्वरम्।
अहञ्च तस्मै महतां महीयसे
शीर्ष्णावनामं विदधेऽनुकम्पितः॥

१।६।१५—२५।

इत्येतदध्यायारम्भे निर्द्दिश्यान्ते

मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते॥ (गी १४।२६)

इत्यत्र गुणातीतत्वेन ब्रह्मणि स्थितिं

ब्रह्मणोहि प्रतिष्ठाहममृतस्याव्ययस्य च।
शाश्वतस्य च धर्म्मस्य सुखस्यैकान्तिकस्य च॥ (गी १४।२७)

इति भक्तेः पारम्योक्त्वा कोऽयं तत्परमज्ञानफलं लभते तदवबोधयत् परात्मा। तदेतन्नित्यकालिकमाशावचनं श्रीमन्नारदायाप्यवोचत् स इत्याह मतिरिति। मयि निबद्धा इयं मतिः न कर्हिचित् विपद्येत। न केवलं मतिर्न विपद्येत किन्तर्हि मद्दर्शनश्रवणविषया स्मृतिरपीत्याह मदनुग्रहात् मदनुकम्पावशात् प्रजासर्गनिरोधे प्रजानां सर्गे सृष्टौ, निरोधे लये आत्मन्यवरोधे अपि स्मृतिः च न विपद्येत इति शेषः।

१८। कोऽयमेवमाह तन्निर्णयपूर्व्वकं तल्लक्षणं श्रीमन्नारदस्यानुग्रहस्वीकारञ्चाभिदधाति एतावदिति। तत् नभोलिङ्गं नभः आकाशम् एव लिङ्गं मूर्त्तिः यस्य अमूर्त्तमिति यावत्, अलिङ्गं—सन्निहित अपि न लिङ्ग्यते केनापि वाह्यचिह्नेन न ज्ञायते इति अलिङ्गं—चक्षुराद्यविषयम् ईश्वरं सर्व्वनियन्तृ महत् भूतं—"अस्य महतो भूतस्य निश्वसितमेतद्यत् ऋग्वेदः" इत्याद्यनुसारतः ऋगादिप्रवक्तृ एतावत् उक्त्वा उपरराम निवृत्तम् अभवत्, अहं च अनुकम्पितः सन् तस्मै महतां महीयसे शीर्ष्णा शिरसा अवनामं प्रणामं विदधे कृतवान्।

१९ । प्रगायतः स्ववीर्य्याणि तीर्थपादः प्रियश्रवाः ।
आहूत इव मे शीघ्रं दर्शनं याति चेतसि ॥१।६।३३

२० । भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले ।
अपश्यत् पुरुषं पूर्णं मायाञ्च तदपाश्रयाम् ॥१।७।४ ।

२१ । शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः
स्मरन्ति नन्दन्ति तवेहितं जनाः ।
तएव पश्यन्त्यचिरेण तावकं
भवप्रवाहोपरमं पदाम्बुजम् ॥१।८।३६ ।

१९ । काले कषायविगमे किमभवत्तदाह प्रगायत इति । तीर्थपादः तीर्थभूतः पादः यस्य यत्पादस्पर्शात् पापमालिन्यमपगतं भवति एवम्भूतः प्रियश्रवाः प्रियं श्रवः श्रवणं यस्य स स्ववीर्य्याणि स्वस्य वीर्य्याणि सामर्थ्याविष्कारान् लीलाः इति यावत् प्रगायतः मम चेतसि आहूत इव—'आह्वानं विनापी'ति—श्रीमद्विश्वनाथः—शीघ्रं दर्शनं याति स्वरूपसौन्दर्य्यम् आविष्करोति ।

२० । श्रीमद्व्यासोऽपि तं परमपुरुषमपश्यदित्याह भक्तियोगेनेति । भक्तियोगेन सम्यक् प्रणिहिते निश्चलीकृते, अमले कषायविरहिते मनसि पूर्णं पुरुषं तदपाश्रयां तदधीनां मायां च अपश्यत् साक्षात्कृतवान् ।

२१ । के पुनस्त्वं पश्यन्ति तदाह गृणन्तीति । ये जनाः तव ईहितं लीलां शृण्वन्ति, गायन्ति, गृणन्ति स्तुवन्ति, स्मरन्ति पूर्व्वानुभूतं स्मरणविषयं कुर्व्वन्ति, नन्दन्ति अन्यैः कीर्त्त्यमानम् अभिनन्दन्ति, ते एवं अचिरेण तूर्णं तावकं त्वदीयं भवप्रवाहोपरमं संसारपरम्परायाः उपरमः निवृत्तिः यस्मिन् तादृशं पदाम्बुजं पश्यन्ति साक्षात् कुर्व्वन्ति ।

२२। जलाशयमचक्षाणः प्रविवेश तमाश्रमम्।
दर्दर्श मुनिमासीनं शान्तं मीलितलोचनम्॥
२३। प्रतिरुद्धेन्द्रियप्राणमनोबुद्धिमुपारतम्।
स्थानत्रयात् परं प्राप्तं ब्रह्मभूतमविक्रियम्॥
१।१८।२५।२६।

२४। एवं स्वचित्ते स्वतएव सिद्ध
आत्मा प्रियोऽर्थो भगवाननन्तः।
तन्निर्वृतो नियतार्थो भजेत
संसारहेतूपरमश्च यत्र॥२।२।६।

२२।२३। परिच्छिदाख्यानेन शमीकर्षेर्ब्रह्मसाक्षात्कारं दर्शयति द्वाभ्यां जलाशयमिति प्रतिरुद्धेति। जलाशयम् अचक्षाणः अपश्यन् तं प्रसिद्धम् आश्रमं प्रविवेश। शान्तं, मीलितलोचनम्, आसीनम् उपविष्टं, प्रतिरुद्धेन्द्रियप्राणमनोबुद्धिं प्रतिरुद्धाः प्रत्याहृताः इन्द्रियादयो येन तम्, अतएव उपारतं सर्व्वतो निवृत्तं, स्थानत्रयात् जाग्रदादिलक्षणात् परं तुरीयं पदं प्राप्तं, ब्रह्मभूतं ब्रह्मणि स्थितम्, अविक्रियं विकाररहितं मुनिं शमीकं ददर्श।

२४। कथं वा सर्व्वातीतस्य परब्रह्मणः साक्षात्कारः सम्भवति तत् प्रदर्शयति एवमिति। एवं स्वचित्ते स्वस्य हृदि स्वतः एव सिद्धः नियतविद्यमानः, आत्मा आत्मनः आत्मा, प्रियः सर्व्वस्मादन्तरतमत्वात्, अर्थः सत्यः सारात्सारः स्वस्य विद्यमानताया हेतुः, भगवान् सर्व्वैश्वर्य्यपूर्णः अतएव ऐश्वर्य्यभूतजगदादौ नियतप्रकाशमानः, अनन्तः अणुवदात्मनः अन्तविशिष्टजगतः च आधाररूपः। एवं विशेषणनिचयेन साक्षात्कारसम्भावनां प्रतिपाद्य साधकस्य कर्त्तव्यमाह—तन्निर्वृतः तदनुभवानन्देन निर्वृतः, नियतार्थः दृढ़निश्चयः सन् तं भजेत सेवेत, यत्र भजने संसार-

२५ । तेनात्मनात्मानमुपैति शान्त-
मानन्दमानन्दमयोऽवसाने ।
एतां गतिं भागवतीं गतो यः
स वै पुनर्नेह विषज्जतेऽङ्ग ॥२।२।३१ ।

२६ । भूयस्त्वं तप आतिष्ठ विद्याञ्चैव मदाश्रयाम् ।
ताभ्यामन्तर्हृदि ब्रह्मन् लोकान् द्रक्ष्यस्यपावृतान् ॥

२७ । तत आत्मनि लोके च भक्तियुक्तः समाहितः ।
द्रष्टासि मां ततं ब्रह्मन् मयि लोकांस्त्वमात्मनः ॥

हेतूपरमः च भवति । एवमेवाह श्रीमत्प्रह्लादः—

कोऽतिप्रयासोऽसुरबालका हरेरुपासने स्वे हृदि छिद्रवत् सतः ।
स्वस्यात्मनः सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः ॥ (३।१४) इति ।

२५ । आत्मसाक्षात्कारानन्तरं भगवत्साक्षात्कारो भवतीत्याह तेनेति । तेन आत्मना विज्ञानतत्त्वेन आनन्दमयः शुद्धस्वरूपानुभवेन आनन्दपूर्णः सन् अवसाने तदतिक्रमेणोर्द्धभूमावारोहणे शान्तं प्रपञ्चोपशमम् आनन्दं रसस्वरूपम् आत्मानम् आत्मनामात्मानम् उपैति उपगच्छति तत्साक्षात्कारं करोति । यः एतां भागवतीं भगवत्प्राप्तिरूपां गतिं गतः प्राप्तः, अङ्ग हे राजन्, स पुनः इह संसारे न विषज्जते न आसक्तः भवति—"विषयेषु गरिष्ठोऽपि रागो यत्र विलीयते" इति न्यायात् ।

२६ । भगवद्दर्शनेन तस्मिन् स्थितान् लोकानपि पश्यन्ति साधकाः स्वहृदये भगवतीत्याह श्रीमद्ब्रह्माणं प्रति भगवद्वाक्येन भूय इति । हे ब्रह्मन्, त्वं भूयः तपः मदाश्रयां विद्यां च आतिष्ठ। किन्तेन भविष्यति ? ताभ्यां तपोविद्याभ्यां अन्तर्हृदि अपावृतान् अव्यक्ताद्व्यक्तिमापन्नान् लोकान् द्रक्ष्यसि ।

२७ । अन्तर्हृदि लोकाभिव्यक्तौ किं कर्त्तव्यं किं वा ततोभवेत्

२८ । यदा तु सर्व्वभूतेषु दारुष्वग्निमिव स्थितम् ।
　　प्रतिचक्षीत मां लोको जह्यात् तर्ह्येव कश्मलम् ॥

२९ । यदा रहितमात्मानं भूतेन्द्रियगुणाशयैः ।
　　स्वरूपेण मयोपेतं पश्यन् स्वाराज्यमृच्छति ॥

३।९।३०—३३ ।

३० । कृत्वा दयाञ्च जीवेषु दत्वा चाभयमात्मवान् ।
　　मय्यात्मानं सह जगत् द्रक्ष्यस्यात्मनि चापि माम् ॥

३।२१।३१ ।

तदाह तत इति । ततः लोकदर्शनानन्तरं भक्तियुक्तः समाहितः च सन् आत्मनि स्वस्मिन् लोके च ततं व्याप्तं स्थितं मां परमात्मानं मयि च लोकान् आत्मनः जीवान् च त्वं द्रष्टासि द्रक्ष्यसि ।

२८ । सर्व्वत्रैवं भगवद्दर्शनेन किं भवति तदाह यदेति । दारुषु अग्निम् इव सर्व्वभूतेषु स्थितं मां परमात्मानं लोकः जनः यदा प्रतिचक्षीत पश्येत् तर्हि तदा एव कश्मलं मोहं जह्यात् त्यजेत् ।

२९ । एवं दर्शनानन्तरं जीवब्रह्मणोः स्वरूपैक्यं तेन च स्वस्मिन् विराजमानत्वमुपतिष्ठत इत्याह यदेति । यदा भूतेन्द्रियगुणाशयैः रहितम् आत्मानं स्वरूपेण स्वरूपैक्येन मया उपेतं नित्ययुक्तम् एकीभूतं पश्यन् भवति जनः, तदा स्वाराज्यं स्वस्मिन् विराजमानत्वं मोक्षम् ऋच्छति प्राप्नोति ;

३० । भगवत्यात्मानं जगच्चैकीभूतं पश्यति साधक इति पुनश्च श्रीमत्कर्द्दमं प्रति भगवद्वाक्येन प्रतिपादयति कृत्वेति । जीवेषु दयाञ्च कृत्वा अभयं च दत्वा आत्मवान् वशीकृतमना: त्वम् आत्मनि स्वस्मिन् मां, मयि च आत्मानं स्वं जगत् च सह एकीभूतं द्रक्ष्यसि ।

३१ । मामात्मानं स्वयंज्योतिः सर्व्वभूतगुहाशयम् ।
आत्मन्येवात्मना वीक्ष्य विशोकोऽभयमृच्छसि ॥
३।२४।३९ ।

३२ । आत्मानं सर्व्वभूतेषु भगवन्तमवस्थितम् ।
अपश्यत् सर्व्वभूतानि भगवत्यपि चात्मनि ॥३।२४।४६

३३ । एतद्वै श्रद्धया भक्त्या योगाभ्यासेन नित्यशः ।
समाहितात्मा निःसङ्गो विरक्त्या परिपश्यति ॥
३।३२।३० ।

३४ । तत्त्वं कुरु मया दिष्टमप्रमत्तः प्रजापते ।
मदादेशकरो लोकः सर्व्वत्राप्नोति शोभनम् ॥
४।२०।३३ ।

३१ । भगवद्दर्शनेन किं भवति तदाह श्रीमत्कर्द्दमं प्रति तत्पुत्र श्रीमत्कपिलवाक्येन मामिति । स्वयंज्योतिः सर्व्वभूतगुहाशयं माम् आत्मानं परमात्मानम् आत्मना मनसा आत्मनि स्वस्मिन् वीक्ष्य दृष्ट्वा विशोकः अपगतशोकः सन् अभयं मोक्षम् ऋच्छसि प्राप्स्यसि ।

३२ । श्रीमत्कर्द्दमस्य भगवद्दर्शनमाह आत्मानमिति । सर्व्वभूतेषु अवस्थितं आत्मानं स्वं भगवन्तं च, अपि च भगवति आत्मनि स्वस्मिन् च सर्व्वभूतानि अपश्यत् सः ।

३३ । कैरुपायैर्ब्रह्मदर्शनं भवति तदाह एतदिति । श्रद्धया, भक्त्या, नित्यशः योगाभ्यासेन, विरक्त्या वैराग्येण समाहितात्मा समाहितचित्तः, निःसङ्गः अनासक्तः सन् एतत् वै ब्रह्म परिपश्यति साक्षात् प्रत्यक्षं करोति ।

३४ । भगवदादेशपालनेन बन्धकविषयोऽपि न बन्धनाय किन्तर्हि

३५ । तस्मिन्नु ह वा उपशमशीलाः परमर्षयः सकलजीवनिकायवासस्य भगवतो वासुदेवस्य भीतानां शरणभूतस्य श्रीमच्चरणारविन्दाविरतस्मरणाविगलितपरमभक्तियोगानुभावेन परिभावितान्तर्हृदयाधिगते भगवति सर्व्वेषां भूतानामात्मभूते प्रत्यगात्मन्येवात्मनस्तादात्म्यमविशेषेण समीयुः ।५।१।२७ ।

कल्याणाय भवतीत्याह तत्त्वमिति । हे प्रजापते पृथो, अप्रमत्तः सन् मया आदिष्टं तत् प्रजापालनं कुरु । प्रजापालनव्यापारे प्रवृत्तस्य मम योगभ्रंशएव स्यादित्याशङ्कां निवर्त्तयितुमाह—मदादेशकरः मम आदेशकरः आज्ञाप्रतिपालकः सर्व्वत्र राज्यपालनादिसर्व्वविषयेषु शोभनं कल्याणम् आप्नोति । तथा चाष्टमे

तथापि वदतो भूमन् करिष्याम्यनुशासनम् ।
एतच्छ्रेयः परं पुंसां यत्तवाज्ञानुपालनम् ॥ (८।२३।१७) इति ।

३५ । ज्ञानवैराग्ययुक्तया भक्त्या पारमहंस्यधर्म्माभिधेयया भगवतैकत्वमुपतिष्ठते तत्साक्षात्कारद्वारेणेत्याह तस्मिन्निति । तस्मिन् पारमहंस्याश्रमे उपशमशीलाः परमर्षयः अग्नीध्रादयः दश सकलजीवनिकायवासस्य निखिलजीवसमूहनिलयस्य भीतानां त्रस्तानां शरणभूतस्य आश्रयभूतस्य भगवतः वासुदेवस्य श्रीमच्चरणारविन्दयोः अविरतस्मरणेन अविगलितः अखण्डितः यः परमभक्तियोगः तस्य अनुभावेन सामर्थ्येन परिभाविते विशोधिते अन्तर्हृदये अन्तःकरणे अधिगते साक्षात्कृते सर्व्वेषां भूतानाम् आत्मभूते भगवति प्रत्यगात्मनि आत्मनामात्मनि आत्मनः स्वस्य च अविशेषेण तादात्म्यं तद्भावापन्नत्वम् एकत्वं समीयुः प्रापुः ।

३६ । आश्वास्य भगवानित्थं चित्रकेतुं जगद्गुरुः ।
पश्यतस्तस्य विश्वात्मा ततश्चान्तर्दधे हरिः ॥६।१६।५६

३७ । क्वचिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः ।
अस्पन्दप्रणयानन्दसलिलामीलितेक्षणः ॥७।४।४१ ।

३८ । यथा भ्राम्यत्ययोब्रह्मन् स्वयमाकर्षसन्निधौ ।
तथा मे भिद्यते चेतश्चक्रपाणेर्यदृच्छया ॥७।५।१४ ।

३९ । त्वं माययात्माश्रयया स्वयेदं
निर्म्माय विश्वं तदनुप्रविष्टम् ।

३६ । स्वयं भगवान् साधकान् मधुरेण वचसाऽऽश्वासयतीति दर्शयति चित्रकेत्वाख्यानेन आश्वास्येति । इत्थं भगवान् जगद्गुरुः विश्वात्मा हरिः चित्रकेतुं पुत्रवियोगखिन्नम् आश्वास्य सान्त्वयित्वा ततः तस्य चित्रकेतोः पश्यतः अन्तर्दधे तिरोहितवान् ।

३७ । भगवत्संस्पर्शानुभावमाह प्रह्लादानुभावेन क्वचिदिति । क्वचित् उत्पुलकः रोमाञ्चिततनुः तूष्णीं मौनम् आस्ते, क्वचित् संस्पर्शनिर्वृतः संस्पर्शः तद्भावापत्तिः तेन निर्वृतः सन्, अस्पन्दप्रणयानन्दसलिलामीलितेक्षणः अस्पन्दः स्थिरः यः प्रणयः तेन यः आनन्दः तेन यत् सलिलं तेन युक्ते आमीलिते ईषन्नीमिलिते ईक्षणे नयने यस्य सः, तथाभूत आस्ते इति शेषः ।

३८ । भक्तिविमलचेतस्यनवच्छिन्ना भगवत्प्रेरणोपतिष्ठत इत्याह प्रह्लाददृष्टान्तेन । हे ब्रह्मन्, आकर्षसन्निधौ अयस्कान्तसमीपे यथा अयः लोहं स्वयं भ्राम्यति, तथा चक्रपाणेः नित्यक्रियाशीलस्य यदृच्छया मे मम चेतः भिद्यते लोकवेदाचरतोऽन्यथा आपद्यते ।

३९ । न पुनः सृष्टिर्भगवद्दर्शनव्यवधायिका योगयुक्तानां सन्निधायित्वात् त्वमिति । आत्माश्रयया स्वया स्वाधीनया मायया इदं विश्वं

पश्यन्ति युक्ता मनसा मनीषिणो
गुणव्यवायेऽप्यगुणं विपश्चितः ॥८।६।११।

४०। साधूनां समचित्तानां सुतरां मत्कृतात्मनाम्।
दर्शनान्नो भवेद्बन्धः पुंसोऽक्ष्णोः सवितुर्यथा ॥
१०।१०।४१।

४१। एवंविधं त्वां सकलात्मनामपि
स्वात्मानमात्मात्मतया विचक्षते।
गुर्व्वर्कलब्धोपनिषत्सुचक्षुषा
ये ते तरन्तीव भवानृताम्बुधिम् ॥
१०।१४।२४।

निर्म्माय तदनु त्वं प्रविष्टः। एवं गुणव्यवाये गुणानां दृश्यशक्तीनां व्यवाये व्यवधायकत्वे अपि विपश्चितः शास्त्रज्ञाः मनीषिणः विवेकिनः युक्ता योगयुक्ताः त्वाम् अगुणं दृश्यशक्तिस्वभावविरहितं पश्यन्ति प्रत्यक्षीकुर्व्वन्ति।

४०। भगवद्दर्शनेनैव साधूनां बन्धमुक्तिर्न तु स्वधर्म्मानुष्ठानेनेत्याह साधूनामिति। दर्शनात् मम साक्षात्कारात् समचित्तानां मानापमानाक्षुब्धचित्तानां सुतरां मत्कृतात्मनां मय्यर्पितचित्तानां साधूनां स्वधर्म्मवर्त्तिनां बन्धः नो न भवेत्, सवितुः दर्शनात् पुंसः अक्ष्णोः चक्षुषोः यथा न बन्धः। साधूनां दर्शनादित्यन्वये तेषु भगवद्दर्शनस्यैव प्राधान्यम्।

- ४१। किंस्वरूपेण भगवान् साक्षात्क्रियते तदाह एवमिति। एवंविधं प्रागुक्तं (२।४१) सकलात्मनाम् स्वात्मानं त्वां गुर्व्वर्कलब्धोपनिषत्सुचक्षुषा गुरुरेव अर्कः तस्मात् लब्धा उपनिषत् ज्ञानं तदेव सुचक्षुः, तेन

४२ । त्वं हि ब्रह्म परंज्योतिर्गूढ़ं ब्रह्मणि वाङ्मये ।
यं पश्यन्त्यमलात्मान आकाशमिव केवलम् ॥
१०।६३।३४ ।

४३ । शृण्वतां गदतां शश्वदर्च्चतां त्वाभिवन्दताम् ।
नृणां सन्दधतामन्तर्हृदि भास्यमलात्मनाम् ॥
१०।८६।४६ ।

४४ । यथा यथात्मा परिमृज्यतेऽसौ
मत्पुण्यगाथाश्रवणाभिधानैः ।
तथा तथा पश्यति वस्तु सूक्ष्मं
चक्षुर्यथैवाञ्जनसंप्रयुक्तम् ॥११।१४।२६ ।

आत्मात्मतया स्वस्य आत्मतया ये विचक्षते सम्यक् पश्यन्ति ते भवानृताम्बुधिं भवः एव अनृताम्बुधिः मिथ्यासमुद्रः तं तरन्ति इव । इवशब्देन— संसारे स्थिता अपि ते संसारमतिक्रम्य स्थिता इति लक्ष्यन्त इति ।

४२ । तमात्मनामात्मानं सर्व्वविकारातीतमाकाशमिव विमलहृदयास्तत्स्वरूपसाम्यात् पश्यन्तीत्याह त्वमिति । त्वं हि ब्रह्म स्वयंज्योतिः ज्ञानघनं ज्ञेयमात्राणां प्रकाशकं वाङ्मये ब्रह्मणि वेदे निगूढ़ं रहस्यतया स्थितम् । यं त्वां विमलात्मानः त्वच्छुद्धस्वरूपेण विशोधितहृदयाः केवलम् आकाशम् इव पश्यन्ति ।

४३ । कैरुपायैस्तेऽमलात्मानस्त्वां पश्यन्तीत्याह शृण्वतामिति । शृण्वतां श्रवणपराणां, शश्वत् गदतां कीर्त्तयताम्, अर्च्चतां पूजयतां, त्वा त्वाम् अभिवन्दतां नमस्कुर्व्वतां, सन्दधताम् आत्मन्यन्विष्यताम् अमलात्मनां शुद्धहृदां नृणां हृदि भासि आत्मानं प्रकटयसि । विष्णुभक्त्यङ्गपञ्चवर्गोऽयं मुक्ताफले ।

४४ । अमलात्मनामधिकृतविषयानुसारेण सूक्ष्मसूक्ष्मतत्त्वदर्शनं

४५। मामेव सर्व्वभूतेषु बहिरन्तरपावृतम्।
ईक्षेतात्मनि चात्मानं यथा खममलाशयः॥

११।२९।१२।

४६। संकीर्त्त्यमानो भगवाननन्तः
श्रुतानुभावो व्यसनं हि पुंसाम्।
प्रविश्य चित्तं विधुनोत्यशेषं
यथा तमोऽर्कोऽभ्रमिवातिवातः॥

१२।१२।४७।

भवतीत्याह यथेति। असौ भजनशील: मत्पुण्यगाथाश्रवणाभिधानैः मत्पुण्यगाथाः मदीयाः पुण्यकथाः तासां श्रवणैः अभिधानैः कीर्त्तनैः यथा यथा यत्र यत्र विषये आत्मा परिमृज्यते शोध्यते, तथा तथा तत्र तत्र सूक्ष्मं वस्तु—'मदीयस्वरूपरूपगुणलीलायाथार्थ्यम्'इति श्रीमज्जीवः—पश्यति। तत्र दृष्टान्तः, यथा अञ्जनसंप्रयुक्तं चक्षुः।

४५। यथान्तस्तथा बहिर्भगवद्दर्शनं भवत्यमलाशयानामित्याह मामिति। सर्व्वभूतेषु आत्मनि च बहिः अन्तः अपावृतम् अनावरणं माम् एव यथा आकाशं तथा आत्मनि च आत्मानं आत्मनामात्मानं अमलाशयः निर्म्मलात्मा ईक्षेत पश्येत।

४६। भगवद्दर्शनेनाशेषदुःखं निःशेषं निवर्त्तत इत्याह सङ्कीर्त्त्यमान इति। श्रुतानुभावः श्रुतः अनुभावः विशेषसामर्थ्यं यस्य सः अनन्तः नित्यपूर्णः भगवान् सङ्कीर्त्त्यमानः चित्तं प्रविश्य पुंसाम् अशेषं व्यसनं दुःखं विधुनोति अपनुदति। तत्र दृष्टान्तः, यथा अर्कः तमः, अतिवातः अभ्रं मेघम् इव।

दर्शनश्रवणनिर्द्देशेऽस्मिन्नध्यायेऽनुरागोद्दीपनाय सक्तृद्दर्शनदानं तद-

नन्तरं विच्छेदः, विच्छेदेन कषायविमुक्तौ स्वेच्छया दर्शनं, भगवन्निदेश-श्रवणन्तु दर्शनानुसारि, तन्निदेशानुसरणे राज्यपालनादिकमपि न बन्धाय भवतीत्यादिकं निर्णीतम् ।

इति श्रीसात्वतसंहितोक्तायां व्याख्यानसहितायां
श्रीमद्गीताप्रवृत्तौ दर्शनश्रवणनिर्देशो नाम
सप्तमोऽध्यायः ।

# अष्टमोऽध्यायः।

## साधननिर्द्देशः।

१। आपन्नः संसृतिं घोरां यन्नाम विवशो गृणन्।
तत: सद्यो विमुच्येत यद्बिभेति स्वयं भयम्॥

२। यत्पादसंश्रयाः सूत मुनयः प्रशमायनाः।
सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया॥

३। कोवा भगवतस्तस्य पुण्यश्लोकेड्यकर्म्मणः।
शुद्धिकामो न शृणुयाद् यशः कलिमलापहम्॥

१।१।११—१३।

१।२।३। दर्शनश्रवणनिर्द्देशादनन्तरं तत्साधनानि निर्द्देष्टुमध्याय आरभ्यते। तत्र प्रथमं भगवन्नामग्रहणतद्भक्ताश्रयणमाहात्म्यमुद्घोष्य तद्यशःश्रवणप्राधान्यं प्रख्यायते आपन्न इति, यत्पादसंश्रया इति, कोवेति त्रिभिः। घोरां भयावहां संसृतिं संसारम् आपन्नः प्राप्तः जनः विवशः भयविह्वलः सन् यन्नाम यस्य नाम गृणन् कीर्त्तयन् ततः संसृतेः सद्यः तत्क्षणात् विमुच्येत मुक्तो भवेत्। कथमेवं भवति? यत् यतः भयं स्वयं नाम्नः बिभेति भीतं भवति; हे सूत, यत्पादसंश्रयाः यस्य पादौ संश्रयौ येषां, प्रशमायनाः प्रशमः प्रशान्तिः भगवन्निष्ठबुद्धिता स एव अयनं वर्त्म आश्रयो वा येषां ते मुनयः मननशीलाः नियतभगवच्चिन्तनपरायणाः उपस्पृष्टाः सामीप्यतः स्पृष्टाः सन्तः पुनन्ति, स्वर्धुन्यापः गाङ्गेयजलम् अनुसेवया नैरन्तर्य्येण सेवनेन "आपोऽस्मान् मातरः शुन्धयन्ति". (१०।१७।१०) इति ऋगुक्तनित्याभिषेकक्रियया पुनन्ति पवित्रीकुर्व्वन्ति; तस्य एवम्भूतस्य पुण्यश्लोकेड्यकर्म्मणः पुण्यैः पवित्रैः श्लोकैः

४ । वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानञ्च यदहैतुकम् ॥

५ । धर्म्मः स्वनुष्ठितः पुंसां विष्वक्‌सेनकथासु यः ।
नोत्पादयेद्यदि रतिं श्रमएव हि केवलम् ॥

यशोभिः इद्यानि स्तवनीयानि कर्म्माणि यस्य तस्य भगवतः कलि-मलापहं यशः शुद्धिकामः को वा न शृणयात् ? शृणुयादेव । "अवि-पक्वकषायाणां दुर्द्दर्शोऽहं कुयोगिनाम्" (७।१४) इति हेतोः भगव-द्दर्शनतदाज्ञाश्रवणानुकूला शुद्धिरेव साधकैः प्रार्थ्येति तत्साधनं तल्लीला-श्रवणं प्रथममुपन्यस्तम् ।

४ । निवृत्तानां चेत् प्रवृत्तिप्रधाने भक्तियोगे प्रवेशो नान्येषां तदा प्रथमसाधनप्रवृत्तानां हृदयवतां नास्मिन्नधिकार इत्यायाति, न च सिद्ध्यति श्रवणादिलक्षणसाधनभक्तियोगः । मैवमित्युपपादयितुमाह वासुदेव इति । वासुदेवे सर्व्वान्तर्यामिणि भक्तियोगः श्रवणादिलक्षण-साधनभक्तियोगः प्रयोजितः वैराग्यं भगवदनभिप्रेतविषयेषु विरक्तिं यत् च अहैतुकं शुष्कतर्काद्यगोचरं परब्रह्मतत्त्वविषयकौपनिषदं ज्ञानं तत् आशु अविलम्बेन जनयति उत्पादयति । भक्तियोगोऽयं साधन-भक्तियोगः, अन्यथा ज्ञानवैराग्ययोः भक्त्यनन्तरमुत्पत्तिर्न सिद्ध्यति । ज्ञानवैराग्यपरिशोधितहृदये या भक्तिरुदेति सैव निवृत्त्यनन्तरं प्रवृत्ति-प्रधानभक्तियोग इति तत्त्वम् ।

५ । न खलु विषयिणां विषयचर्च्चासृते भगवद्गुणश्रवणादिषु प्रवृत्ति-रुत्पद्यते । कथं तेषां तत्र स्यादनुरागः ? स्वकर्म्मणा भगवदाराधनया तेषामपि भवेत् सः । यद्येवं स्वकर्म्मानुष्ठानेन न स जायते, सर्व्वं तद्विफलमित्याह धर्म्म इति । पुंसां जनानां धर्म्मः स्वभावविहितकर्म्म स्वनुष्ठितः सम्यग् अनुष्ठितः सन् विष्वक्‌सेनकथासु—विषु बहुपदा-

६ । धर्म्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्पते ।
नार्थस्य धर्म्मैकान्तस्य कामो लाभाय हि स्मृतः ॥

७ । कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता ।
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्म्मभिः ॥

१।२।७—१० ।

र्थानां विस्तारः, विषु अञ्चतीति विष्वक्—विष्वक् व्यापिनी सेना—षिञ्बन्धन इति धातोरुत्पत्तेः—स्ववशानयनोपायः यस्य तस्य कथासु यदि न रतिम् अनुरागम् उत्पादयेत् जनयेत् श्रमएव हि केवलम् श्रममात्रसारः विफल इति यावत् । एव हि केवलम् इत्यव्ययत्रययोगेन स्वर्गादिसर्व्वविधफलं वारयति । कथम् ? भगवद्व्यतिरिक्तः कोऽप्यन्यः फलदातास्तीति विश्वासस्याविद्याविजृम्भितत्वात् । विष्वक्सेन इति भगवद्विशेषनाम दर्शयति फलान्तरप्रतिबन्धेन चरमे तदुन्मुखत्वमेव तादृशानामवश्यम्भावि, अन्यथा तस्य स्ववशानयनसामर्थ्यं व्याहन्येत, विफलञ्च भवेत् विशेषमिदं नाम । स्ववशानयनन्तु तेषामनन्तकल्याणाय न तु स्वगौरवख्यापनार्थमिति सर्व्वमनवद्यम् ।

६।७ । न खल्वस्ति धर्म्मानुष्ठानस्यान्यसुद्देश्यमिति परमतखण्डनेन स्थापयति धर्म्मस्येति, कामस्येति । धर्म्मस्य फलम् अर्थः,—ये हि धर्म्मानाचरन्ति तेऽर्थवन्तो भवन्ति इति ये वदन्त्यज्ञाना एव ते । कथम् ? आपवर्ग्यस्य मुक्तिसाधकस्य धर्म्मस्य अर्थः न अर्थाय फलत्वाय । अर्थस्य च फलं कामः विषयभोग इति सिद्धान्तोऽप्यज्ञानविजृम्भितः । कथम् ? धर्म्मैकान्तस्य धर्म्मैकोद्देश्यकस्य कामः विषयभोगो न लाभाय फलत्वाय स्मृतः भोगलालसया धर्म्महानेः सम्भावनात् । इन्द्रियप्रीतिरेव विषयभोगस्य फलमिति ये मन्यन्ते ते जड़मतिः । कथम् ? कामस्य विषयभोगस्य इन्द्रियप्रीतिः न लाभः फलम्, किन्तर्हि यावता जीवेत तावान्

८। अतः पुंभिर्द्विजश्रेष्ठा वर्णाश्रमविभागशः ।
स्वनुष्ठितस्य धर्म्मस्य संसिद्धिर्हरितोषणम् ॥

९। तस्मादेकेन मनसा भगवान् सात्त्वतां पतिः ।
श्रोतव्यः कीर्त्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥

एव कामस्य लाभः । अर्थसम्बन्धेऽप्येवं ज्ञेयं तथाहि सप्तमे—

यावद्भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम् ।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ॥ (७।१४।८) इति ।

जीवनधारणं केवलं कर्म्मानुष्ठानायेति ये निश्चिन्वते तान् निराकरोति—इह जीवस्य जीवनस्य कर्म्मभिः यः अर्थः फलं, न स अर्थः, किन्तर्हि तत्त्वजिज्ञासा—तत्त्वमद्वयं ज्ञानवस्तु तज्ज्ञातुमिच्छैव ।

८। "वदन्ति तत्तत्त्वविदः" (१।२।११) इत्यादिना तत्त्वम्, "तच्छ्रद्दधाना मुनयः" (१।२।१२) इत्यादिना तत्त्वसाक्षात्कारञ्चोक्त्वा स्वभावविहित-वर्णाश्रमाचारधर्म्मस्योद्देश्यं निर्णीयते अत इति । अतः तत्त्वसाक्षात्कार-हेतोः, हे द्विजश्रेष्ठाः शौनकादयः, वर्णाश्रमविभागशः वर्णाश्रमविभागा-नुसारेण स्वस्वप्रकृत्यनुसारतः विभक्तानां वर्णाश्रमाणां स्वकर्म्माण्यनुसृत्य पुंभिः जनैः स्वनुष्ठितस्य सम्यक् अनुष्ठितस्य धर्म्मस्य संसिद्धिः फलं हरि-तोषणम् हरेः आराधनं, तदाज्ञापालनेन तदनुमोदनलाभः ।

९। किन्तद्धरेराराधनं तदाज्ञापालनञ्च तदेवाह तस्मादिति । तस्मात् हरितोषणैकलक्ष्यत्वात् सात्त्वतां भक्तानां सत्त्ववतां—कैवल्य-दीपिका—पतिः भगवान् एकेन मनसा ऐकान्तिकभावेन नित्यदा कालानवच्छेदेन श्रोतव्यः कीर्त्तितव्यः च, ध्येयः पूज्यः च । विष्णु-भक्त्यङ्गचतुर्व्वर्गोऽयं मुक्ताफले । न खलु श्रवणं कीर्त्तनं ध्यानं पूजनं च स्वभावविहितं किन्तर्हि भक्तिसाधनम् । तत्कथं वर्णाश्रमविभागोचित-कर्म्मणा हरेराराधनमुक्त्वा तद्विहाय भक्तिसाधनमुच्यते ? उच्यते—एतान्यपि—

१० । यदनुध्यासिना युक्ताः कर्म्मग्रन्थिनिबन्धनम् ।
छिन्दन्ति कोविदास्तस्य कोनु कुर्य्यात् कथारतिम् ॥

११ । शुश्रूषोः श्रद्दधानस्य वासुदेवकथारुचिः ।
स्यान्महत्सेवया विप्राः पुण्यतीर्थनिषेवणात् ॥

देवानां गुणलिङ्गानामानुश्रविककर्म्मणाम् ।
सत्त्वएवैकमनसो वृत्तिः स्वाभाविकी तु या ॥
अनिमित्ता भागवती भक्तिः——(१०।१०) ।

इत्युक्तत्वात् स्वाभाविकानुष्ठेयानि वर्णाश्रमधर्म्माविरोधीनि, अतो न पूर्व्वापरविरोधः । वर्णाश्रमधर्म्मः श्रवणादिप्रधानो भगवत्तोषणाय नित्यमनुष्ठेयः, अन्यथा तत्त्वसाक्षात्कारः सुदूरपराहतएव स्यादित्यभिप्रायः । तत्तत्कर्म्मसाधनेषु यथा ब्रह्मदृष्टिस्तथा तल्लीलादर्शनादि कर्त्तव्यम् ।

१० । वर्णाश्रमधर्म्मेषु ध्यानस्य प्राधान्यमन्यथा तत्तदनुष्ठेयानि भगवत्सम्बन्धविरहादधर्म्मायैवोपकल्पेरन् । एवं कर्म्मसु भगवच्चिन्तनप्रवेशात् कर्म्मबन्धनोच्छेदोजायते । यस्य चिन्तनस्यैवं महत् फलं तस्य लीलाश्रवणे स्वतएवोदेत्यनुरागः । तदेव कथयति यदिति । कोविदाः विवेकिनः यदनुध्यासिना यस्य अनुध्या अनुध्यानं सा एव असिः खड्गः तेन युक्ताः कर्म्मग्रन्थिनिबन्धनं कर्म्ममूलकाहङ्काररज्जुं छिन्दन्ति तस्य कथारतिं कथासु अनुरागं कोन कुर्य्यात् ? कुर्य्यादेव ।

११ । भगवत्कथायामनुरागः स्वाभाविकोऽपि विषयवासनामलिने चित्ते न स स्थिरतामुपैति विषयाभिलाषव्याहतत्वात्, कैरुपायैः सोऽविचलः स्यात्तानेवाह शुश्रूषोरिति । हे विप्राः, पुण्यतीर्थनिषेवणात् महत्सेवया तत्र भ्रमतां निवसतां वा महतां साधूनां या सेवा उपतिष्ठते तया विरलकषायस्य श्रद्दधानस्य साधुषु कथासु च श्रद्धायुक्तस्य शुश्रूषोः तैः कीर्त्तितानां भगवत्कथानां श्रवणेच्छोः वासुदेवकथारुचिः वासुदेवस्य सर्व्वान्तर्यामिणः कथायां रुचिः स्यात् । अज्ञातः साधुसङ्गः, साधुसङ्गात्

१२ । शृण्वतां स्वकथाः कृष्णः पुण्यश्रवणकीर्त्तनः ।
हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत् सताम् ॥

१३ । नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया ।
भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी ॥

१४ । तदा रजस्तमोभावाः कामलोभादयश्च ये ।
चेतएतैरनाविद्धं स्थितं सत्त्वे प्रसीदति ॥

श्रवणेच्छा, श्रवणेच्छातः रुचिरिति क्रमोऽत्र द्रष्टव्यः । रुचिरत्र भजन-विषयेषु, अतएवाह वासुदेवकथारुचिरिति ।

१२ । कथारुच्यनन्तरं किं भवति तदेवाह शृण्वतामिति । सतां साधूनां सुहृत् हितकारी पुण्यश्रवणकीर्त्तनः पुण्यं पवित्रं श्रवणं कीर्त्तनञ्च यस्य स कृष्णः चित्ताकर्षणः—"कः कृष्ण ?" इत्यस्योत्तरे "पापकर्षणः" इति श्रीमच्चैतन्यदेवसम्मानिता गोपालतापनी । "पापानि प्रारब्धाप्रारब्धसञ्चितानि कर्षयति नाशयति, पापं चित्तमपि स्वलीलायामाकर्षयति ।" इत्यस्या व्याख्या । स्वमाधुर्य्येण चित्तमाकर्षतीति निरुक्तिरेव नाम्नग्रस्मिन् श्रीमद्वैष्णवाचार्य्याणामादरे हेतुः, अतएव 'रसो वै सः', इत्यस्याः श्रुतेर्योजना तैरस्मिन्नेव नामनि—स्वकथाः स्वस्य आत्मनः कथाः शृण्वतां जनानां हृद्यन्तस्थः सन् अभद्राणि रागादिवासनाः विधुनोति निराकरोति ।

१३ । एवं रागादिवासनानिरासे निष्ठोत्पत्तिमाह नष्टेति । अभद्रेषु रागादिवासनासु नष्टप्रायेषु—सर्व्वाभद्रनाशस्य ज्ञानोत्तरकालत्वात् प्रायग्रहणं—नित्यं भागवतसेवया भक्तानां भगवदधिकृतशास्त्राणां वा सेवया उत्तमश्लोके भगवति नैष्ठिकी निश्चला विक्षेपकाभावात् भक्तिः भवति ।

१४ । ततः किं भवति तदाह तदेति । तदा नैष्ठिकभक्त्युदयक्षणे

१५ । एवं प्रसन्नमनसो भगवद्भक्तियोगतः ।
भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते ॥
१।२।१३—२० ।

१६ । वासुदेवपरा वेदा वासुदेवपरा मखाः ।
वसुदेवपरा योगा वासुदेवपराः क्रियाः ॥

१७ । वासुदेवपरं ज्ञानं वासुदेवपरं तपः ।
वासुदेवपरोधर्म्मो वासुदेवपरा गतिः ॥१।२।२८।२९

ये रजस्तमोभावाः रजश्च तमश्च तत्प्रभवाः भावाश्च कामलोभादयः, एतैः चेतः अनाविद्धम् अनभिभूतं सत्त्वे स्थितं प्रसीदति उपशाम्यति ।

१५ । एवं चित्तप्रसादे किं भवति तदाह एवमिति । एवं भगवद्भक्तियोगतः प्रसन्नमनसः, अतएव मुक्तसङ्गस्य त्यक्तकामादिवासनस्य भगवत्तत्त्वविज्ञानं भगवत्तत्त्वसाक्षात्कारः—'विज्ञानं साक्षात्कारः मनसि बहिर्व्वा भावनां विनैवानुभवः' इति श्रीमज्जीवः—जायते ।

१६।१७ । भगवत्तत्त्वसाक्षात्कारोन्मुखानां वेदादयः सर्व्वे भगवत्-परत्वेन द्रष्टव्याः । ते पुनर्भगवत्परा एवेत्याह द्वाभ्यां वासुदेवेति । वेदा वासुदेवपराः सर्व्वान्तर्यामिपराः—अग्न्यादिषु तदधिष्ठातारमन्त-र्यामिणमेव वैदिका आराधितवन्तः ; मखाः यज्ञाः वासुदेवपराः—यज्ञो वै विष्णुरिति श्रवणात् सर्व्वान्तर्याम्याराधनपरा एव ते ; योगाः—

योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।
ज्ञानं कर्म्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥ (११।२०।६)

इति ज्ञानकर्म्मभक्तियोगाः वासुदेवपराः ; क्रियाः नित्यानुष्ठेयनैसर्गिक-कर्म्माणि वासुदेवपराः सर्व्वान्तर्यामिप्रेरणासम्भूतत्वात् ; ज्ञानं शास्त्र-जज्ञानं वासुदेवपरं सर्व्वेषां शास्त्राणां तदुद्देश्यकत्वात् ; तपः शारीरं वाङ्मयं मानसमिति त्रिविधं ( गी १७।१४—१६ ) वासुदेवपरम्, तत्र

१८ । उच्छिष्टलेपाननुमोदितो द्विजैः
सकृत् स्म भुञ्जे तदपास्तकिल्बिषः ।
एवं प्रवृत्तस्य विशुद्धचेतस-
स्तद्धर्म्मएवात्मरुचिः प्रजायते ॥

१९ । तत्रान्वहं कृष्णकथाः प्रगायता-
मनुग्रहेणाश्रृणवं मनोहराः ।
ताः श्रद्धया मेऽनुपदं विश्रृण्वतः
प्रियश्रवस्यङ्ग ममाभवद्रुचिः ॥१।५।२५।२६ ।

सर्व्वान्तर्यामिप्रेरणानुसरणात् ; धर्म्मः स्वकर्म्म वासुदेवपरः तदाराधना-रूपेणानुष्ठेयत्वात् ; गतिः लोकाल्लोकान्तरगमनं वासुदेवपरा सर्व्वत्र तस्यैवाधिष्ठानात्, उक्तमेतदनुगीतासु—

सम्यग्युक्ता स आत्मानमात्मन्येव प्रतिष्ठते ।
विनिवृत्तजरादुःखसुखं स्वपिति चापि सः ॥
देहान् यथेष्टमभ्येति हित्वेमां मानुषीं तनुम् ।
निर्व्वेदस्तु न कर्त्तव्यो भुञ्जानेन कथञ्चन ॥ (१९।३०।३१) इति ।

१८ । श्रीमन्नारदजीवनवृत्तेन साधनानि तत्सिद्धीश्च दर्शयति उच्छिष्टेति । द्विजैः प्रावृषि स्वप्रभुगृहस्थगृहाश्रितैः अनुमोदितः अनुज्ञातः उच्छिष्टलेपान् उच्छिष्टस्य लेपान् पात्रसंलग्नान् सकृत् भुञ्जे स्म भुक्तवान्, तदपास्तकिल्बिषः तेन भोजनेन अपगतचित्तमालिन्यः । एवं प्रवृत्तस्य विशुद्धचेतसः मम तद्धर्म्मे एव तेषां द्विजानां धर्म्मे परमेश्वर-भजने एव आत्मरुचिः आत्मनः मनसः रुचिः प्रजायते स्म ।

१९ । न केवलं भजने किन्तर्हि भगवति तस्य रुचिरभवदित्याह तत्रेति । तत्र गृहस्थगृहे अन्वहं प्रतिदिनं मनोहराः कृष्णकथाः कृष्णस्य चित्ताकर्षणस्य कथाः प्रगायतां कीर्त्तयतां द्विजानाम् अनुग्रहेण आश्रृणवं श्रुतवानस्मि । मे मम श्रद्धया सहजया ताः कथाः अनुपदं

२० । इत्थं शरत्प्रावृषिकावृतू हरे-
विंशृण्वतो मेऽनुसवं यशोऽमलम् ।
सङ्कीर्त्त्यमानं मुनिभिर्महात्मभि-
र्भक्तिः प्रवृत्तात्मरजस्तमोपहा ॥१।५।२८ ।
२१ । यदत्र क्रियते कर्म्म भगवत्परितोषणम् ।
ज्ञानं यत्तदधीनं हि भक्तियोगसमन्वितम् ॥
२२ । कुर्व्वाणा यत्र कर्म्माणि भगवच्छिक्षयाऽसकृत् ।
गृणन्ति गुणनामानि कृष्णस्यानुस्मरन्ति च ॥
१।५।३५।३६ ।

प्रतिपदं शृण्वतः मम, अङ्ग हे व्यास, प्रियश्रवसि प्रियकीर्त्तौ भगवति रुचिः अभवत् ।

२० । भगवति रुच्यनन्तरं "तस्मिंस्तदा लब्धरुचेः" (७।७) इत्यादिना साक्षात्सम्बन्धं प्रस्तूयानुरागोदयमाह इत्थमिति । इत्यम् एवम्प्रकारेण शरत्प्रावृषिकौ ऋतू अनुसवं त्रिकालं महात्मभिः सङ्कीर्त्त्यमानं हरेः अमलं यशः विशृण्वतः मे मम आत्मरजस्तमोपहा आत्मनः मनसः रजस्तमोनिवर्त्तिका भक्तिः परानुरक्तिः प्रवृत्ता ।

२१ । भगवत्परितोषकर्म्मणा कर्म्मनिर्हारः स्यादित्याह यदिति । अत्र भगवत्परितोषणं यत् कर्म्म क्रियते, ज्ञानं यत् तदधीनं तत्कर्म्माधीनम् । कथम् ? हि यस्मात् भक्तियोगसमन्वितं स्मरणकीर्त्तनादिसंयुक्तम् । भगवत्स्मरणकीर्त्तनादिना ज्ञानमुत्पद्यते, अतः भगवत्परितोषणकर्म्माधीनं तदिति तत्त्वम् । एतेन सर्व्वत्र भागवते कर्म्मयोगः साधनभक्तावन्तर्भुत इति ज्ञेयम् ।

२२ । कथमनुतिष्ठेत् कर्म्मयोगं तदाह कुर्व्वाणा इति । यत्र यदा—

२३ । एतद्ध्यातुरचित्तानां मात्रास्पर्शेच्छया मुहुः ।
भवसिन्धुप्लवो दृष्टो हरिचर्य्यानुवर्णनम् ॥

२४ । यमादिभिर्योगपथैः कामलोभहतो मुहुः ।
मुकुन्दसेवया यद्वत्तथात्माऽद्धा न शाम्यति ॥

१।६।३३।३४ ।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥ ( गी ९।२७ )

इति भगच्छिक्षया भगवतः शिक्षया कर्म्माणि असकृत् नित्यं कुर्व्वाणाः सन्तः कृष्णस्य चित्ताकर्षणस्य गुणनामानि शृण्वन्ति कीर्त्तयन्ति अनुस्मरन्ति च तमिति शेषः । भगवदर्पणेन क्रियमाणं कर्म्म तद्गुणाद्यनुशीलने प्ररोचयति । अतः कर्म्मतो भक्तियोग उपतिष्ठते । 'कर्म्मिणोहि कर्म्मवैफल्याभावार्थं वैदिकमेव कर्म्म तस्मिन्नर्पयति । भक्ता भगवत्स्वामिकत्वेनैवात्मानं जानन्तः स्वकर्त्तव्यं वैदिकं लौकिकं दैहिकं च कर्म्म स्वप्रभुप्रवर्त्त्यमानं प्रतियन्तः सर्व्वमेव तस्मिन् समर्पयन्तीति महान् भेदः' इति श्रीमद्विश्वनाथः ।

२३ । हरिलीलानुवर्णनेन विषयवासनानिवृत्तिर्भवतीति कथयति एतद्धीति । मात्रास्पर्शेच्छया मात्राः विषयाः तेषां स्पर्शाः भोगाः तेषाम् इच्छया अभिलाषेण मुहुः आतुरचित्तानां क्लिष्टहृदयानाम् एतत् हरिचर्य्यानुवर्णनं हरिलीलानुवर्णनं हि एव भवसिन्धुप्लवः भवसिन्धौ प्लवः पोतः दृष्टः प्रत्यक्षीकृतः ।

२४ । भगवत्सेवामात्रेण शान्तिरभ्युदेति, किमु वक्तव्यं तद्गुणवर्णनेन संसारोत्तारो भवतीत्येतदाह यमादिभिरिति । मुहुः कामलोभहतः आत्मा अद्धा साक्षात् मुकुन्दसेवया मुक्तिदातुः सेवया यद्वत् शाम्यति, यमादिभिः योगपथैः न तथा ।

२५ । कुतः पुनर्गृणतो नाम तस्य
महत्तमैकान्तपरायणस्य ।
योऽनन्तशक्तिर्भगवाननन्तो
महद्गुणत्वाद्यमनन्तमाहुः ॥१।१८।१९ ।

२६ । यत्रानुरक्ताः सहसैव धीरा-
व्यपोह्य देहादिषु सङ्गमूढम् ।
व्रजन्ति तत् पारमहंस्यमन्त्यं
यस्मिन्नहिंसोपशमः स्वधर्म्मः ॥१।१८।२२ ।

२७ । तस्माद्भारत सर्व्वात्मा भगवान् हरिरीश्वरः ।
श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छताऽभयम् ॥२।१।५

२५ । महत्तमैः लौकिकसम्बन्धेनापि दौष्कुल्यमपयातीति—

अहो वयं जन्मभृतोऽद्य हास्म वृद्धानुवृत्त्यापि विलोमजाताः ।
दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोगः ॥ (१।१८।१८)

इत्यत्रोक्ता भगवन्नामग्रहणे तद्भवतीति किमुवक्तव्यमित्याह कुतइति । यः अनन्तः भगवान् अनन्तशक्तिः, यं महद्गुणत्वात् महत्सु अभिव्यक्त-गुणत्वात् अनन्तम् आहुः पण्डिताः तस्य अनन्तस्य नाम गृणतः कीर्त्त-यतः महत्तमैकान्तपरायणस्य महत्तमः अनन्तः एकान्तं परम् अयनम् आश्रयः यस्य तस्य तदेकनिष्ठस्य कुतः पुनः दौष्कुल्यम् ।

२६ । भगवदनुरागेण सर्व्वविधहिंसानिवृत्तिरूपं पारमहंस्यमुप-तिष्ठत इत्याह यत्रेति । यत्र भगवति अनुरक्ताः धीराः धीमन्तः देहा-दिषु ऊढं धृतं सङ्गम् आसक्तिं व्यपोह्य परिहाय सहसा एव तत् अन्त्यं चरमं पारमहंस्यं परमहंसत्वं व्रजन्ति, यस्मिन् पारमहंस्ये अहिंसा उप-शमः च स्वधर्म्मः स्वाभाविकधर्म्मः ।

२७ । अभयाकाङ्क्षिणो हरिश्रवणकीर्त्तनस्मरणेष्वात्मानं नियुञ्जीर-

२८। एतन्निर्व्विद्यमानानामिच्छतामकुतोभयम्।
योगिनां नृप निर्णीतं हरेर्नामानुकीर्त्तनम् ॥२।१।११

२६। कस्तां त्वनादृत्य परानुचिन्ता-
मृते पशूनसतीं नाम युञ्ज्यात्।
पश्यन् जनं पतितं वैतरण्यां
स्वकर्म्मजान् परितापान् जुषाणम् ॥२।२।७।

३०। तस्मात् सर्व्वात्मना राजन् हरिः सर्व्वत्र सर्व्वदा।
श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यो भगवान् नृणाम् ॥

त्वित्याह तस्मादिति। तस्मात् देहादिष्वासक्तेरात्मविनाशसाधनत्वात्— 'तस्मात् यस्मादन्येषां सदोषत्वात्' इति कैवल्यदीपिका—हे भारत परिचित्, सर्व्वात्मा अतएव प्रियतमः, भगवान् अतएव स्वरूपसुन्दरः, ईश्वरः अतएव शरण्यः, हरिः बन्धहरः अभयं मोक्षं—'सर्व्वभयनिवारक-सर्व्वानन्दमयपुरुषार्थम्' इति श्रीमज्जीवः—इच्छता जनेन श्रोतव्यः कीर्त्तितव्यः च स्मर्त्तव्यः च। विष्णुभक्त्यङ्गत्रिवर्गोऽयं मुक्ताफले।

२८। नामकीर्त्तनमाह एतदिति। निर्व्विद्यमानानां निर्व्वेद-सम्पन्नानां मुमुक्षूणां अकुतोभयम् इच्छतां योगिनां भगवद्योगाकाङ्क्षिणां, हे नृप परिचित्, एतत् हरेः नामानुकीर्त्तनं निर्णीतम्।

२६। ध्यानस्य प्राधान्यं प्रस्तौति क इति। स्वकर्म्मजान् परितापान् आध्यात्मिकादिक्लेशान् जुषाणं सेवमानं वैतरण्याम् संसृतौ—यमद्वारस्थनदीतुल्यत्वात्—पतितं जनं पश्यन् पशून् ऋते विना कः तां परानुचिन्तां परस्य हरेः अनुचिन्ताम् अनुध्यानं धारणाम् अनादृत्य उपेक्ष्य असतीं विषयानुचिन्तां नाम सम्भावनायां युञ्ज्यात् कुर्य्यात्।

३०। पुनरपि श्रवणकीर्त्तनस्मरणान्याह तस्मादिति। तस्मात्

३१ । पिबन्ति ये भगवत आत्मनः सतां
कथामृतं श्रवणपुटेषु संभृतम् ।
पुनन्ति ते विषयविदूषिताशयं
व्रजन्ति तच्चरणसरोरुहान्तिकम् ॥२।२।३६।३७

३२ । अकामः सर्व्वकामो वा मोक्षकाम उदारधीः ।
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥

३३ । एतावानेव यजतामिह निःश्रेयसोदयः ।
भगवत्यचलोभावो यद्भागवतसङ्गतः ॥

हरेर्भजनस्य निखिलकल्याणमूलत्वात्, हे राजन् परिक्षित्, सर्व्वत्र सर्व्वदा भगवान् हरिः नृणां जनानां श्रोतव्यः कीर्त्तितव्यः स्मर्त्तव्यश्च ।

३१ । श्रवणस्य प्राधान्यमाह पिबन्तीति । सतां साधूनाम् आत्मनः आत्मत्वेन प्रकाशमानस्य भगवतः श्रवणपुटेषु सम्भृतं सञ्चितं कथामृतं कथा एव अमृतं ये पिबन्ति स्वादविषयं कुर्व्वन्ति—भगवल्लीलाकथाः श्रवणपुटं पूरयित्वा वर्त्तन्ते, न पुनस्तास्तान् जहति, अतः पुनः पुनस्तासां स्वादग्रहणात् पिबन्तीत्युक्तम्—ते विषयविदूषिताशयं विषयैः विदूषितं मलिनीकृतम् आशयं चित्तं पुनन्ति शोधयन्ति, तच्चरणसरोरुहान्तिकं तस्य भगवतः चरणसरोरुहस्य अन्तिकं निकटं व्रजन्ति प्राप्नुवन्ति ।

३२ । मनसः सर्व्वावस्थायां भक्त्या भगवदुपासनमेव समुचितमित्याह अकाम इति । अकामः सर्व्वविधवासनाशून्यः एकान्तभक्तः सर्व्वकामः सर्व्वविधाभिलाषवान् वा मोक्षकामः मुमुक्षुः, उदारधीः महाशयः, तीव्रेण एकान्तेन भक्तियोगेन परमपुरुषं यजेत उपासीत ।

३३ । इन्द्रियपाटवादिकामनया देवतान्तराराधनप्रवृत्तानां तत्तत् फलं तु तुच्छं, तत्तदनुष्ठानेषु यद्भागवद्भक्तानां सङ्गो लभ्यते तेन हि भगव-

३४ । ज्ञानं यदाप्रतिनिवृत्तगुणोर्म्मिचक्र-
मात्मप्रसाद उभयत्र गुणेष्वसङ्गः ।
कैवल्यसम्मतपथस्त्वथ भक्तियोगः
कोनिर्वृतोहरिकथासु रतिं न कुर्य्यात् ॥
२।३।१०—१२ ।

३५ । आयुर्हरति वै पुंसामुद्यन्नस्तञ्च यन्नसौ ।
तस्यर्त्ते यत्क्षणोनीत उत्तमश्लोकवार्त्तया ॥२।३।१७ ।

त्यनुराग उदेति, तदेव निश्रेयसमित्याह एतावानिति। इह यजतां देवताराधनपराणाम् एतावान् एव निश्रेयसोदयः निश्रेयसस्य परम-पुरुषार्थस्य उदयः लाभः यत् भागवतसङ्गतः भागवतानां भगवदनुरक्तानां सङ्गतः भगवति अचलः भावः अनुरागः भवति ।

३४ । भगवद्भक्तानां सङ्गाद्भगवद्गुणप्रसङ्गोऽवश्यम्भावी, अतस्तत्-कथासु रतिं प्रस्तौति ज्ञानमिति । यत् यत्र हरिकथासु आप्रतिनिवृत्त-गुणोर्म्मिचक्रम् आ सर्व्वतः प्रतिनिवृत्तम् उपरतं गुणोर्म्मीणां रागादीनां चक्रं समूहो यस्मात् तत् ज्ञानं, आत्मप्रसादः मनसः प्रसन्नता, उभयत्र इह अमुत्र च गुणेषु विषयेषु असङ्गः अनासक्तिः, अथ अनन्तरं कैवल्य-सम्मतपथः कैवल्यम् इति एव सम्मतः पन्थाः भक्तियोगः, एतानि उप-तिष्ठन्ते, निर्वृतः श्रवणसुखेन सम्पन्नः कः तासु हरिकथासु रतिं न कुर्य्यात् ? कुर्य्यादेव ।

३५ । भगवत्प्रसङ्गं विना कालहरणमायुषोऽपचयः, अतएव न तथा कर्त्तव्यमित्याह भङ्गिविशेषेण आयुरिति । असौ सूर्य्यः उद्यन् उद्गच्छन् अस्तं च यन् गच्छन् उत्तमश्लोकवार्त्तया भगवद्गुणकथनेन यत्क्षणः यस्य मूहूर्त्तः नीतः अतिवाहितः तस्य तत्सम्पर्कीणम् आयुः ऋते विना पुंसां जनानां आयुः हरति । भगवद्गुणकथनेनात्ययुत्व-

३६ । यत्कीर्त्तनं यत्स्मरणं यदीक्षणं
यद्वन्दनं यच्छ्रवणं यदर्हणम् ।
लोकस्य सद्यो विधुनोति कल्मषं
तस्मै सुभद्रश्रवसे नमोनमः ॥

३७ । विचक्षणा यच्चरणोपसादनात्
सङ्गं व्युदस्योभयतोऽन्तरात्मनः ।
विन्दन्ति हि ब्रह्मगतिं गतक्लमा-
स्तस्मै सुभद्रश्रवसे नमोनमः ॥

३८ । तपस्विनो दानपरा यशस्विनो
मनस्विनो मन्त्रविदः सुमङ्गलाः ।

सुपतिष्ठतेऽतः तेनाक्षयत्वं प्राप्तमायुः प्रति न कालस्य कोऽप्यधिकार इति भावः ।

३६ । पद्यस्यास्यानन्तरं श्रवणादिविरहितस्य जीवनस्य, हृदयस्य, दैहिकाङ्गानाञ्च वैफल्यम् (२।३।१८—२४) उक्त्वा तैः कृतार्थतामाह चतुर्भिर्यदिति । यत्कीर्त्तनं यस्य कीर्त्तनं, यत्स्मरणं यस्य स्मरणं, यदीक्षणं यस्य दर्शनं, यद्वन्दनं यस्य वन्दनं, यच्छ्रवणं, यस्य श्रवणं यदर्हणं यस्य पूजनं लोकस्य जनस्य कल्मषं पापं सद्यः विधुनोति अपाकरोति तस्मै सुभद्रश्रवसे सुभद्रं सुमङ्गलं श्रवः यशः यस्य तस्मै नमोनमः ।

३७ । विचक्षणा इति । विचक्षणाः विवेकिनः यच्चरणोपसादनात् यस्य चरणोपसत्तेः अन्तरात्मनः जीवस्य उभयतः इह परत्र च सङ्गम् आसक्तिं व्युदस्य निराकृत्य गतक्लमाः प्रयासविरहिताः सन्तः ब्रह्मगतिं हि विन्दन्ति प्राप्नुवन्ति तस्मै सुभद्रश्रवसे नमोनमः ।

३८ । तपस्विन इति । तपस्विनः तपोनिष्ठाः, दानपराः धनादिवितरणपरायणाः, यशस्विनः कीर्त्तिमन्तः, मनस्विनः संयतमनसः

क्षेमं न विन्दन्ति विना यदर्पणं
तस्मै सुभद्रश्रवसे नमोनमः ॥

३९ । किरातहूणान्ध्रपुलिन्दपुक्कसा
आभीरकङ्कायवनाः खसादयः ।
येऽन्ये च पापा यदपाश्रयाश्रयाः
शुद्ध्यन्ति तस्मै प्रभविष्णवे नमः ॥२।४।१७—१८

४० । शृण्वतः श्रद्धया नित्यं गृणतश्च सुचेष्टितम् ।
कालेन नातिदीर्घेण भगवान् विशते हृदि ॥

४१ । प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम् ।
धुनोति शमलं कृष्णः सलिलस्य यथा शरत् ॥

२।८।४—५ ।

विवेकिनः, मन्त्रविदः वेदज्ञाः, सुमङ्गलाः सदाचाराः, यदर्पणं यस्मिन् तप आद्यर्पणं विना क्षेमं निश्रेयसं न विन्दन्ति न प्राप्नुवन्ति, तस्मै सुभद्रश्रवसे नमोनमः ।

३९ । किरातेति । किराताः, हूणाः, अन्ध्राः, पुलिन्दाः, पुक्कसाः, आभीराः, कङ्काः, यवनाः, खसादयः, अन्ये च ये पापाः पापकर्माणः यदपाश्रयाश्रया यस्य भगवतः अपाश्रयाः भागवताः तेषाम् आश्रयाः शरणागताः सन्तः शुद्ध्यन्ति पवित्रीभवन्ति तस्मै प्रभविष्णवे प्रभावशालिने नमः ।

४०।४१ । एवं श्रवणकीर्त्तनेन भगवत्साक्षात्कारो मालिन्यापनयश्च भवतीत्याह द्वाभ्यां शृण्वत इति प्रविष्ट इति । सुचेष्टितं मनोहरलीलां श्रद्धया शृण्वतः, गृणतः कीर्त्तयतः च हृदि भगवान् नातिदीर्घेण कालेन प्रविश्य विशते, कर्णरन्ध्रेण स्वानां स्वजनानां भावसरोरुहं भावोभक्तिः

४२ । पानेन ते देव कथासुधायाः
प्रवृद्धभक्त्या विशदाशया ये ।
वैराग्यसारं प्रतिलभ्य बोधं
यथाञ्जसान्वीयुरकुण्ठधिष्ण्यम् ॥

४३ । तथापरे चात्मसमाधियोग-
बलेन जित्वा प्रकृतिं बलिष्ठाम् ।
त्वामेव धीराः पुरुषं विशन्ति
तेषां श्रमः स्यान्न तु सेवया ते ॥३।५।४५।४६ ।

४४ । एकान्तलाभं वचसो नु पुंसां
सुश्लोकमौलेर्गुणवादमाहुः ।

सएव सरोरुहं प्रविष्टः सन् क्षणः चित्ताकर्षणः शरत् यथा सलिलस्य तथा शमलं मालिन्यं धुनोति अपाकरोति ।

४२।४३ । कथासुधापानेन किं भवति तत्,तस्यानायाससाध्यत्वञ्चाह पानेनेति तथेति द्वाभ्यां तत्त्वाधिष्ठातृदेवगणस्तुतिवाक्येन । हे देव, ते तव कथासुधायाः पानेन प्रवृद्धभक्त्या ये विशदाशयाः निर्म्मलचित्ताः—'प्रोज्झितकैतवाः' इति श्रीमज्जीवः—ते वैराग्यसा' वैराग्ये सारः बलं यस्य तं बोधं ज्ञानं प्रतिलभ्य यथा अञ्जसा अविलम्बेन अकुण्ठधिष्ण्यं वैकुण्ठलोकं प्राप्नोति, तथा अपरे धीराः विवेकिनः आत्मसमाधियोग-बलेन आत्मनि समाधिः मनःस्थैर्य्यं स एव योगः उपायः तस्य बलेन बलिष्ठां बलशालिनीं प्रकृतिं जित्वा त्वाम् एव पुरुषं विशन्ति । तेषां धीराणां श्रमः स्यात्, न तु ते तव सेवया त्वत्कथाश्रवणादिना श्रमः स्यादिति शेषः ।

४४ । वाक्यस्य गुणकीर्त्तनं श्रवणस्य कथाश्रवणमेव फलमित्याह एकान्तेति । सुश्लोकमौलेः सुयशःशिरोभूषणस्य भगवतः गुणवादं

श्रुतेश्च विद्वद्भिरुपाकृतायां
कथासुधायामुपसंप्रयोगम् ॥३।६।३६ ।

४५ । ये तु त्वदीयचरणाम्बुजकोषगन्धं
जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम् ।
भक्त्या गृहीतचरणः परया च तेषां
नापैषि नाथ हृदयाम्बुरुहात् स्वपुंसाम् ॥

४६ । तावद्भयं द्रविणगेहसुहृन्निमित्तं
शोकः स्पृहा परिभवो विपुलश्च लोभः ।
तावन्ममेत्यसदवग्रह आर्त्तिमूलं
यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोकः ॥३।६।५।६

गुणकीर्त्तनं पुंसां जनानां वचसः एकान्तलाभम् आहुः। विद्वद्भिः उपाकृतायां निरूपितायां कथासुधायाम् उपसंप्रयोगं सन्निधौ अर्पणं श्रुतस्य श्रवणस्य एकान्तलाभम् आहुरितिशेषः ।

४५ । श्रवणानन्तरं भगवत्साक्षात्कारलक्षणा पराभक्तिरुदेति, तया च निश्चलभावेन तद्धृदये भगवतः स्थितिर्जायते, एतदेवाह ये त्विति आदिपुरुषकृतस्तुतिवाक्येन । ये तु श्रुतिवातनीतं श्रुतिः वेदः सा एव वातः तेन नीतं प्रापितं त्वदीयचरणाम्बुजकोशगन्धं कर्णविवरैः जिघ्रन्ति —पुण्यत्वेन भगवल्लीलायाः सुरभित्वम्, अतः तथा वर्णितम्—हे नाथ, परया भक्त्या गृहीतचरणः त्वं तेषां स्वपुंसां स्वजनानां हृदयाम्बुरुहात् न अपैषि न अपयासि ।

४६ । भगवच्चरणशरणापन्नतायां भयादिनिवृत्तिरित्याह तावदिति । द्रविणगेहसुहृन्निमित्तं भयं, शोकः, स्पृहा, परिभवः पराजयः, विपुलः अपरिह्रसः लोभः च, आर्त्तिमूलं दुःखमूलं मम इति असदवग्रहः अस-

४७ । कोनाम लोके पुरुषार्थसारवित्
पुराकथानां भगवत्कथासुधाम् ।
आपीय कर्णाञ्जलिभिर्भवापहा-
महो विरज्येत विना नरेतरम् ॥३।१३।५१ ।

४८ । यच्च व्रजन्त्यनिमिषामृषभानुवृत्त्या
दूरेयमाह्युपरि नः स्पृहणीयशीलाः ।
भर्त्तुर्मिथः सुयशसः कथनानुराग-
वैक्लव्यवाष्पकलया पुलकीकृताङ्गाः ॥

३।१५।२५ ।

दुराग्रहः तावत्, यावत् लोकः जनः ते तव अभयम् अङ्घ्रिं चरणं न प्रवृणीत न आश्रयेत् ।

४७ । पुरावृत्तानां मध्ये यत्र भगवद्गुणकीर्त्तनमस्ति तदेव सादरं श्रवणीयं, तत्रानादरः पशुत्वमेव व्यनक्ति तदेवाह कोनामेति । लोके पुराकथानां पुरावृत्तानां मध्ये भवापहां संसारनिवृत्तिकरीं भगवत्कथा-सुधां भगवल्लीलामृतं कर्णाञ्जलिभिः आपीय नरेतरं पशुं विना पुरुषार्थ-सारवित् कः नाम विरज्येत विरमेत् ?

४८ । भगवदनुसरणेन तत्कथानुरागेण च देवानामुपरि वर्त्तन्त इत्याह यदिति । अनिमिषां कालानधीनानां देवानाम् ऋषभानुवृत्त्या ऋषभः श्रेष्ठः हरिः तस्य अनुवृत्त्या प्रेरणानुसरणेन दूरेयमाः दूरे यमो येषां ते कालभयातीताः, किञ्च भर्त्तुः हरेः सुयशः मिथः परस्परं कथ-नानुरागवैक्लव्यवाष्पकलया कथने यः अनुरागः तेन वैक्लव्यं वैवश्यं तेन वाष्पकला तया सह पुलकीकृताङ्गाः पुलकीकृतानि अङ्गानि येषां ते स्पृहणीयशीलाः नः अस्माकं देवानाम् उपरि यत् वैकुण्ठं तत् व्रजन्ति गच्छन्ति ।

४९ । नात्यन्तिकं विगणयन्त्यपि ते प्रसादं
किन्त्वन्यदर्पितभयं भ्रुवउन्नयैस्ते ।
येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः
कीर्त्तन्यतीर्थयशसः कुशला रसज्ञाः ॥३।१५।४८

५० । न युज्यमानया भक्त्या भगवत्यखिलात्मनि ।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥
३।२५।१९ ।

५१ । सतां प्रसङ्गान्मम वीर्य्यसंविदो
भवन्ति हृत्कर्णरसायनाः कथाः ।
तज्जोषणादाश्वपवर्गवर्त्मनि
श्रद्धा रतिर्भक्तिरनुक्रमिष्यति ॥३।२५।२५ ।

४९ । भगवद्भजनरसज्ञा न मुक्तिमपि वाञ्छन्ति किमुतान्यदित्याह नात्यन्तिकमिति । अङ्ग हे भगवन्, ये त्वदङ्घ्रिशरणाः त्वच्चरणशरणापन्नाः कीर्त्तन्यतीर्थयशसः कीर्त्तन्यं कीर्त्तनार्हं तीर्थं पवित्रं च यशः यस्य एवम्भूतस्य भवतः कथायाः रसज्ञाः, अतएव कुशलाः ते तव प्रसादम् आत्यन्तिकं मोक्षम् अपि न विगणयन्ति न आद्रियन्ते, किन्तु किमुत ते तव भ्रुवः उन्नयैः उज्जृम्भणैः अर्पितभयम् अर्पितं निहितं भयं यस्मिन् तत् अन्यत् निकृष्टस्वर्गादिकम् ।

५० । भक्तिसाधनसदृशो न कोऽप्यन्यकल्याणकरः पन्थाविद्यत इत्याह नेति । योगिनां ब्रह्मसिद्धये ब्रह्मसाक्षात्काराय अखिलात्मनि भगवति युज्यमानया भक्त्या सदृशः शिवः कल्याणकरः पन्थाः मार्गः न अस्ति ।

५१ । भक्त्युदयक्रममाह कपिलवाक्येन सतामिति । सतां साधूनां

५२ । इमं लोकं तथैवामुमात्मानमुभयायिनम् ।
　　आत्मानमनु ये चेह ये रायः पशवो गृहाः ॥

५३ । विसृज्य सर्व्वानन्यांश्च मामेवं विश्वतोमुखम् ।
　　भजन्त्यनन्यया भक्त्या तान्मृत्योरतिपारये ॥

५४ । नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात् ।
　　आत्मनः सर्व्वभूतानां भयं तीव्रं निवर्त्तते ॥

३।२५।३९—४१ ।

प्रसङ्गात् सङ्गमात् मम अन्तर्यामिणः वीर्य्यसंविदः वीर्य्यस्य विक्रमस्य सम्यक् वेदनं यासु ताः हृत्कर्णरसायनाः हृत्कर्णयोः रसायनाः सुखदाः कथाः उपतिष्ठन्त इति शेषः, तज्जोषणात् तासां सेवनात् आशु सत्वरम् अपवर्गवर्त्मनि मुक्तिपथे श्रद्धा रतिः भक्तिः अनुक्रमिष्यति अनुक्रमेण भविष्यति । भक्तिरत्र प्रेमा ।

५२—५४ । सर्व्वं परित्यज्य भगवद्भजनमेवाभयलाभे हेतुरित्याह इमम्-इति त्रिभिः । इमं तथा एव अमुं लोकम् उभयायिनं लोकद्वयगामिनम् आत्मानम्, आत्मानम् अनु ये च इह रायः धनानि, पशवः गवादयः, गृहाः पुत्रकलत्रादयः तान् अन्यान् च सर्व्वान् विसृज्य परित्यज्य विश्वतोमुखं—'तत्तद्भावानुसारेण अनन्ताविर्भावम्' इति श्रीमज्जीवः—माम् सर्व्वान्तर्यामिणम् अनन्यया भावान्तरामिश्रया भक्त्या एव भजन्ति, तान् जनान् मृत्योः अतिपारये अतितारयामि । प्रधानपुरुषेश्वरात् प्रधानं प्रकृतिः पुरुषः जीवः तयोः ईश्वरात् नियन्तुः सर्व्वभूतानाम् आत्मनः मत् भगवतः अन्यत्र तीव्रं भयं न निवर्त्तते । अत्र कपिलोक्तौ प्रकृतिपुरुषातिरिक्तस्येश्वरस्य ग्रहणात् निरीश्वरत्वं तन्मतस्यापास्तम्, अन्यथा भक्तौ तस्याप्रवेशः ।

५५ । यमादिभिर्योगपथैरभ्यसन् श्रद्धयान्वितः ।
मयि भावेन सत्येन मत्कथाश्रवणेन च ॥
५६ । सर्व्वभूतसमत्वेन निर्व्वैरेणाप्रसङ्गतः ।
ब्रह्मचर्य्येण मौनेन स्वधर्म्मेण बलीयसा ॥
५७ । यदृच्छयोपलब्धेन सन्तुष्टो मितभुङ्मुनिः ।
विविक्तशरणः शान्तो मैत्रः करुण आत्मवान् ॥
५८ । सानुबन्धे च देहेऽस्मिन् न कुर्व्वन्नसदाग्रहम् ।
ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च ॥
५९ । निवृत्तबुद्ध्यवस्थानो दूरीभूतान्यदर्शनः ।
उपलभ्यात्मनात्मानं चक्षुषेवार्कमात्मदृक् ॥
६० । मुक्तलिङ्गं सदाभासमसति प्रतिपद्यते ।
सतोबन्धुमसच्चक्षुः सर्व्वानुस्यूतमद्वयम् ॥३।२९।६—११

५५—६० । भक्तिसाधनान्याह षड्भिः यमादिभिरिति । श्रद्धयान्वितः श्रद्धया युक्तः यमादिभिः योगपथैः अभ्यसन् चित्तम् एकाग्रीकुर्व्वन् आत्मानम् उपलभ्य सर्व्वानुस्यूतम् अद्वयं प्रतिपद्यते इति षष्ठेनान्वयः । तत्र साधनानि कुत्रचित् करणेन कुत्रचित् विशेषणत्वेन—सत्येन निष्कपटेन मयि अन्तर्यामिणि भावेन प्रेम्णा—'निष्कामभजनप्रवृत्तिः' इति कैवल्यदीपिका ; भावेन भक्त्या, सत्येन 'यथार्थव्यवहारेण' इति श्रीमज्जीवः, 'सत्योभावः सत्यत्वभावना तेन, न तु मायाशवलितब्रह्मदृष्ट्या' इति श्रीमद्विश्वनाथः ; मत्कथाश्रवणेन च मम अन्तर्यामिणः कथायाः लीलायाः श्रवणेन ; सर्व्वभूतसमत्वेन—'सर्व्वभूतेषु विष्णुरधिष्ठातेति समत्वम्' इति कैवल्यदीपिका ; निर्व्वैरेण वैरभावत्यागेन ; अप्रसङ्गतः निःसङ्गतः ; बलीयसा स्वधर्म्मेण ईश्वरेऽर्पितेन ; यदृच्छयोपलब्धेन सन्तुष्टः, मितभुक् मितभोजी ; मुनिः मननशीलः ; विविक्त-

६१। अनिमित्तनिमित्तेन स्वधर्म्मेणामलात्मना।
तीव्रया मयि भक्त्या च श्रुतसंभृतया चिरम्॥

६२। ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा।
तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना॥

६३। प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम्।
तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः॥

३।२७।२१—२३।

शरणः एकान्तवासी; शान्तः शमत्वं प्राप्तः; मैत्रः भूतेषु मित्रभावापन्नः; करुणः कृपालुः; आत्मवान् जितमनाः; सानुबन्धे पुत्रादिसहिते अस्मिन् देहे असदाग्रहम् अहं मम भावम् अकुर्व्वन्, प्रकृतेः पुरुषस्य च दृष्टतत्वेन दृष्टं तत्त्वं येन तेन ज्ञानेन; निवृत्तबुद्ध्यवस्थानः निवृत्तानि बुद्ध्यवस्थानानि जाग्रदादीनि यस्य स तथाभूतः; दूरीभूतान्यदर्शनः दूरीभूतम् अन्यदर्शनम् आत्मव्यतिरिक्तज्ञानं यस्य स तथाभूतः; चक्षुषा अर्कम् इव आत्मना जीवेन आत्मानं परमात्मानम् उपलभ्य आत्मदृक् जीवस्वरूपं विमृशन् प्रथमं मुक्तलिङ्गं शरीररहितं प्रतिपद्यते जानाति, ततः असति प्रपञ्चे स्थितस्य सतः सत्यस्वरूपपरमात्मनः आभासकम्, ततः तस्यैव सतः बन्धुं सखायम् जानाति, ततः असच्चक्षुः असतः प्रपञ्चस्य चक्षुः प्रकाशकं सर्व्वानुस्यूतं सर्व्वं व्याप्य स्थितम् अद्वयं ज्ञानवस्तु प्रतिपद्यते जानाति। व्याख्यानमिदं कैवल्यदीपिकासम्मतम्। तत्रायं विशेषः—बन्धुं योऽसौ सोऽहमिति ज्ञानम्; चक्षुः मिथ्यात्वप्रकाशकम्, अद्वयं सोऽस्म्यहमेवेति ज्ञानम्। इदन्तु श्रीमच्छङ्करमनुसृत्यैवोक्तम्। यथा तत्रैव—'तदुक्तं शङ्कराचार्य्यैः "योऽसौ सोऽहं सोऽस्म्यहमेवेति विदुर्यम्" इति।' एतानि मुक्ताफले विष्णुभक्त्यङ्गाष्टादशवर्गत्वेन गृहीतानि।

६१—६३। भक्तिसाधनानि पुनराह अनिमित्तेति। अनिमित्त-

६४ । स्वधर्म्माचरणं शक्त्या विधर्म्माच्च निवर्त्तनम् ।
दैवाल्लब्धेन सन्तोष आत्मविच्चरणार्च्चनम् ॥
६५ । ग्राम्यधर्म्मनिवृत्तिश्च मोक्षधर्म्मरतिस्तथा ।
मितमेध्यादनं शश्वद्विविक्तक्षेमसेवनम् ॥
६६ । अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः ।
ब्रह्मचर्य्यं तपः शौचं स्वाध्यायः पुरुषार्च्चनम् ॥
६७ । मौनं सदासनजयः स्थैर्य्यं प्राणजयः शनैः ।
प्रत्याहारश्चेन्द्रियाणां विषयान्मनसा हृदि ॥
६८ । स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणम् ।
वैकुण्ठलीलाभिध्यानं समाधानं तथात्मनः ॥

निमित्तेन निमित्त' फलं तत्र निमित्तं प्रवर्त्तकं यस्मिन् तेन निष्कामेण स्वधर्म्मेण, अमलात्मना निर्म्मलेन मनसा ; चिरं श्रुतसंभृतया श्रुतं कथाश्रवणं तेन संभृतया पुष्टया तीव्रया मयि भक्त्या ; दृष्टतत्त्वेन—'सत्त्वपुरुषान्यताख्यातिरूपेण' इति—कैवल्यदीपिका—ज्ञानेन ; बलीयसा वैराग्येण 'गुणसङ्गजनितरागरूपमलापनुत्या बलीयसा वशीकारसंज्ञालक्षणेन' इति कैवल्यदीपिका, तपोयुक्तेन योगेन ध्यानेन ; तीव्रेण आत्मसमाधिना —ध्यानमेव अर्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिरिति लक्षणम् । एभिः किं भवति तदाह—अग्नेः योनिः अरणिः इव पुरुषस्य प्रकृतिः तु स्वधर्म्मादिभिः अहर्निशं दह्यमाना अभिभूयमाना शनकैः क्रमशः तिरोभविची तिरोहिता भवति । श्रवणलक्षणायाः भक्तेः प्राधान्यं स्वीकृत्याह कैवल्यदीपिका—'भक्तिमुत्पाद्य प्रकटीकृत्य तत्तेजसा नश्यतीत्यर्थः' इति । मुक्ताफले विष्णुभक्त्यङ्गसप्तवर्गत्वेन गृहीतान्येतानि ।

६४—६८ । पुनरपि भक्तिसाधनान्याह स्वधर्म्मेति । शक्त्या स्वधर्म्माचरणं, विधर्म्मात् निषिद्धात् परधर्म्मात् च निवर्त्तनम् ; दैवात्

४२ । पानेन ते देव कथासुधायाः
प्रवृद्धभक्त्या विशदाशया ये ।
वैराग्यसारं प्रतिलभ्य बोधं
यथाञ्जसान्वीयुरकुण्ठधिष्ण्यम् ॥

४३ । तथापरे चात्मसमाधियोग-
बलेन जित्वा प्रकृतिं बलिष्ठाम् ।
त्वामेव धीराः पुरुषं विशन्ति
तेषां श्रमः स्यान्न तु सेवया ते ॥३।५।४५।४६ ।

४४ । एकान्तलाभं वचसो नु पुंसां
सुश्लोकमौलेर्गुणवादमाहुः ।

सएव सरोरुहं प्रविष्टः सन् कृष्णः चित्ताकर्षणः शरत् यथा सलिलस्य तथा शमलं मालिन्यं धुनोति अपाकरोति ।

४२।४३ । कथासुधापानेन किं भवति तत्,तस्यानायाससाध्यत्वञ्चाह पानेनेति तथेति द्वाभ्यां तत्त्वाधिष्ठातृदेवगणस्तुतिवाक्येन । हे देव, ते तव कथासुधायाः पानेन प्रवृद्धभक्त्या ये विशदाशयाः निर्म्मलचित्ताः— 'प्रोज्झितकैतवाः' इति श्रीमज्जीवः—ते वैराग्यसारं वैराग्ये सारः बलं यस्य तं बोधं ज्ञानं प्रतिलभ्य यथा अञ्जसा अविलम्बेन अकुण्ठधिष्ण्यं वैकुण्ठलोकं प्राप्नोति, तथा अपरे धीराः विवेकिनः आत्मसमाधियोग-बलेन आत्मनि समाधिः मनःस्थैर्य्यं स एव योगः उपायः तस्य बलेन बलिष्ठां बलशालिनीं प्रकृतिं जित्वा त्वाम् एव पुरुषं विशन्ति । तेषां धीराणां श्रमः स्यात्, न तु ते तव सेवया त्वत्कथाश्रवणादिना श्रमः स्यादिति शेषः ।

४४ । वाक्यस्य गुणकीर्त्तनं श्रवणस्य कथाश्रवणमेव फलमित्याह एकान्तेति । सुश्लोकमौलेः सुयशःशिरोभूषणस्य भगवतः गुणवादं

श्रुतेश्च विद्वद्भिरुपाकृतायां
कथासुधायामुपसंप्रयोगम् ॥३।६।३६।

४५। ये तु त्वदीयचरणाम्बुजकोषगन्धं
जिघ्रन्ति कर्णविवरैः श्रुतिवातनीतम्।
भक्त्या गृहीतचरणः परया च तेषां
नापैषि नाथ हृदयाम्बुरुहात् स्वपुंसाम् ॥

४६। तावद्भयं द्रविणगेहसुहृन्निमित्तं
शोकः स्पृहा परिभवो विपुलश्च लोभः।
तावन्ममेत्यसदवग्रह आर्त्तिमूलं
यावन्न तेऽङ्घ्रिमभयं प्रवृणीत लोकः ॥३।९।५।६

गुणकीर्त्तनं पुंसां जनानां वचसः एकान्तलाभम् आहुः। विद्वद्भिः उपाकृतायां निरूपितायां कथासुधायाम् उपसंप्रयोगं सन्निधौ अर्पणं श्रुतस्य श्रवणस्य एकान्तलाभम् आहुरितिशेषः।

४५। श्रवणानन्तरं भगवत्साक्षात्कारलक्षणा पराभक्तिरुदेति, तया च निश्चलभावेन तद्धृदये भगवतः स्थितिर्जायते, एतदेवाह ये त्विति आदिपुरुषकृतस्तुतिवाक्येन। ये तु श्रुतिवातनीतं श्रुतिः वेदः सा एव वातः तेन नीतं प्रापितं त्वदीयचरणाम्बुजकोशगन्धं कर्णविवरैः जिघ्रन्ति —पुण्यत्वेन भगवल्लीलायाः सुरभित्वम्, अतः तथा वर्णितम्—हे नाथ, परया भक्त्या गृहीतचरणः त्वं तेषां स्वपुंसां स्वजनानां हृदयाम्बुरुहात् न अपैषि न अपयासि।

४६। भगवच्चरणशरणापन्नतायां भयादिनिवृत्तिरित्याह तावदिति। द्रविणगेहसुहृन्निमित्तं भयं, शोकः, स्पृहा, परिभवः पराजयः, विपुलः अपरिमितः लोभः च, आर्त्ति मूलं दुःखमूलं मम इति असदवग्रहः अस-

४७। कोनाम लोके पुरुषार्थसारवित्
पुराकथानां भगवत्कथासुधाम्।
आपीय कर्णाञ्जलिभिर्भवापहा-
महो विरज्येत विना नरेतरम् ॥३।१३।५१।

४८। यच्च व्रजन्त्यनिमिषामृषभानुवृत्त्या
दूरेयमाह्युपरि नः स्पृहणीयशीलाः।
भर्त्तुर्मिथः सुयशसः कथनानुराग-
वैक्लव्यवाष्पकलया पुलकीकृताङ्गाः॥
३।१५।२५।

दाग्रहः तावत्, यावत् लोकः जनः ते तव अभयम् अङ्घ्रिं चरणं न प्रवृणीत न आश्रयेत्।

४७। पुरावृत्तानां मध्ये यत्र भगवद्गुणकीर्त्तनमस्ति तदेव सादरं श्रवणीयं, तत्रानादरः पशुत्वमेव व्यनक्ति तदेवाह कोनामेति। लोके पुराकथानां पुरावृत्तानां मध्ये भवापहां संसारनिवृत्तिकरीं भगवत्कथा-सुधां भगवल्लीलामृतं कर्णाञ्जलिभिः आपीय नरेतरं पशुं विना पुरुषार्थ-सारवित् कः नाम विरज्येत विरमेत्?

४८। भगवदनुसरणेन तत्कथानुरागेण च देवानामुपरि वर्त्तन्त इत्याह यदिति। अनिमिषां कालानधीनानां देवानाम् ऋषभानुवृत्त्या ऋषभः श्रेष्ठः हरिः तस्य अनुवृत्त्या प्रेरणानुसरणेन दूरेयमाः दूरे यमो येषां ते कालभयातीताः, किञ्च भर्त्तुः हरेः सुयशः मिथः परस्परं कथ-नानुरागवैक्लव्यवाष्पकलया कथने यः अनुरागः तेन वैक्लव्यं वैवश्यं तेन वाष्पकला तया सह पुलकीकृताङ्गाः पुलकीकृतानि अङ्गानि येषां ते स्पृहणीयशीलाः नः अस्माकं देवानाम् उपरि यत् वैकुण्ठं तत् व्रजन्ति गच्छन्ति।

४९ । नात्यन्तिकं विगणयन्त्यपि ते प्रसादं
किन्त्वन्यदर्पितभयं भ्रुवउन्नयैस्ते ।
येऽङ्ग त्वदङ्घ्रिशरणाभवतः कथायाः
कीर्त्तन्यतीर्थयशसः कुशला रसज्ञाः ॥३।१५।४८

५० । न युज्यमानया भक्त्या भगवत्यखिलात्मनि ।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥
३।२५।१९ ।

५१ । सतां प्रसङ्गान्मम वीर्य्यसंविदो
भवन्ति हृत्कर्णरसायनाः कथाः ।
तज्जोषणादाश्वपवर्गवर्त्मनि
श्रद्धा रतिर्भक्तिरनुक्रमिष्यति ॥३।२५।२५ ।

४९ । भगवद्भजनरसज्ञा न मुक्तिमपि वाञ्छन्ति किमुतान्यदित्याह नात्यन्तिकमिति । अङ्ग हे भगवन्, ये त्वदङ्घ्रिशरणाः लब्धत्वच्छरणापन्नाः कीर्त्तन्यतीर्थयशसः कीर्त्तन्यं कीर्त्तनार्हं तीर्थं पवित्रं च यशः यस्य एवम्भूतस्य भवतः कथायाः रसज्ञाः, अतएव कुशलाः ते तव प्रसादम् आत्यन्तिकं मोक्षम् अपि न विगणयन्ति न आद्रियन्ते, किन्तु किमुत ते तव भ्रुवः उन्नयैः उज्जृम्भणैः अर्पितभयम् अर्पितं निहितं भयं यस्मिन् तत् अन्यत् निकृष्टस्वर्गादिकम् ।

५० । भक्तिसाधनसदृशो न कोऽप्यन्यकल्याणकरः पन्थाविद्यत इत्याह नेति । योगिनां ब्रह्मसिद्धये ब्रह्मसाक्षात्काराय अखिलात्मनि भगवति युज्यमानया भक्त्या सदृशः शिवः कल्याणकरः पन्थाः मार्गः न अस्ति ।

५१ । भक्त्युदयक्रममाह कपिलवाक्येन सतामिति । सतां साधूनां

५२ । इमं लोकं तथैवामुमात्मानमुभयायिनम् ।
आत्मानमनु ये चेह ये रायः पशवो गृहाः ॥

५३ । विसृज्य सर्व्वानन्यांश्च मामेवं विश्वतोमुखम् ।
भजन्त्यनन्यया भक्त्या तान्मृत्योरतिपारये ॥

५४ । नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात् ।
आत्मनः सर्व्वभूतानां भयं तीव्रं निवर्त्तते ॥

३।२५।३९—४१ ।

प्रसङ्गात् सङ्गमात् मम अन्तर्यामिणः वीर्य्यसंविदः वीर्य्यस्य विक्रमस्य सम्यक् वेदनं यासु ताः हृत्कर्णरसायनाः हृत्कर्णयोः रसायनाः सुखदाः कथाः उपतिष्ठन्त इति शेषः, तज्जोषणात् तासां सेवनात् आशु सत्वरम् अपवर्गवर्त्मनि मुक्तिपथे श्रद्धा रतिः भक्तिः अनुक्रमिष्यति अनुक्रमेण भविष्यति । भक्तिरत्र प्रेमा ।

५२—५४ । सर्व्वं परित्यज्य भगवद्भजनमेवाभयलाभे हेतुरित्याह इममिति त्रिभिः । इमं तथा एव अमुं लोकम् उभयायिनं लोकद्वयगामिनम् आत्मानम्, आत्मानम् अनु ये च इह रायः धनानि, पशवः गवादयः, गृहाः पुत्रकलत्रादयः तान् अन्यान् च सर्व्वान् विसृज्य परित्यज्य विश्वतोमुखं—'तत्तद्भावानुसारेण अनन्ताविर्भावम्' इति श्रीमज्जीवः—माम् सर्व्वान्तर्यामिणम्, अनन्यया भावान्तरामिश्रया भक्त्या एव भजन्ति, तान् जनान् मृत्योः अतिपारये अतितारयामि । प्रधानपुरुषेश्वरात् प्रधानं प्रकृतिः पुरुषः जीवः तयोः ईश्वरात् नियन्तुः सर्व्वभूतानाम् आत्मनः मत् भगवतः अन्यत्र तीव्रं भयं न निवर्त्तते । अत्र कापिलोक्तौ प्रकृतिपुरुषातिरिक्तस्येश्वरस्य ग्रहणात् निरीश्वरत्वं तन्मतस्यापास्तम्, अन्यथा भक्तौ तस्याप्रवेशः ।

५५ । यमादिभिर्योगपथैरभ्यसन् श्रद्धयान्वितः ।
मयि भावेन सत्येन मत्कथाश्रवणेन च ॥
५६ । सर्व्वभूतसमत्वेन निर्व्वैरेणाप्रसङ्गतः ।
ब्रह्मचर्य्येण मौनेन स्वधर्म्मेण बलीयसा ॥
५७ । यदृच्छयोपलब्धेन सन्तुष्टो मितभुङ्मुनिः ।
विविक्तशरणः शान्तो मैत्रः करुण आत्मवान् ॥
५८ । सानुबन्धे च देहेऽस्मिन् न कुर्व्वन्नसदाग्रहम् ।
ज्ञानेन दृष्टतत्त्वेन प्रकृतेः पुरुषस्य च ॥
५९ । निवृत्तबुद्ध्यवस्थानो दूरीभूतान्यदर्शनः ।
उपलभ्यात्मनात्मानं चक्षुषेवार्कमात्मदृक् ॥
६० । मुक्तलिङ्गं सदाभासमसति प्रतिपद्यते ।
सतोबन्धुमसच्चक्षुः सर्व्वानुस्यूतमद्वयम् ॥३।२८।६—११

५५—६० । भक्तिसाधनान्याह षड्भिः यमादिभिरिति । श्रद्धयान्वितः श्रद्धया युक्तः यमादिभिः योगपथैः अभ्यसन् चित्तम् एकाग्रीकुर्व्वन् आत्मानम् उपलभ्य सर्व्वानुस्यूतम् अद्वयं प्रतिपद्यते इति षष्ठेनान्वयः । तत्र साधनानि कुत्रचित् करणेन कुत्रचित् विशेषणत्वेन—सत्येन निष्कपटेन मयि अन्तर्यामिणि भावेन प्रेम्णा—'निष्कामभजनप्रवृत्तिः' इति कैवल्यदीपिका ; भावेन भक्त्या, सत्येन 'यथार्थव्यवहारेण' इति श्रीमज्जीवः, 'सत्योभावः सत्यत्वभावना तेन, न तु मायाशवलितब्रह्मदृष्ट्या' इति श्रीमद्विश्वनाथः ; मत्कथाश्रवणेन च मम अन्तर्यामिणः कथायाः लीलायाः श्रवणेन ; सर्व्वभूतसमत्वेन—'सर्व्वभूतेषु विष्णुरधिष्ठातेति समत्वम्' इति कैवल्यदीपिका ; निर्व्वैरेण वैरभावत्यागेन ; अप्रसङ्गतः निःसङ्गतः ; बलीयसा स्वधर्म्मेण ईश्वरेऽर्पितेन ; यदृच्छयोपलब्धेन सन्तुष्टः, मितभुक् मितभोजी ; मुनिः मननशीलः ; विविक्त-

६१ । अनिमित्तनिमित्तेन स्वधर्म्मेणामलात्मना ।
तीव्रया मयि भक्त्या च श्रुतसंभृतया चिरम् ॥
६२ । ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा ।
तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना ॥
६३ । प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम् ।
तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः ॥
३।२७।२१—२३ ।

शरणः एकान्तवासी ; शान्तः शमत्वं प्राप्तः ; मैत्रः भूतेषु मित्रभावापन्नः ; करुणः कृपालुः ; आत्मवान् जितमनाः ; सानुबन्धे पुत्रादिसहिते अस्मिन् देहे असदाग्रहम् अहं मम भावम् अकुर्व्वन्, प्रकृतेः पुरुषस्य च दृष्टतत्वेन दृष्टं तत्त्वं येन तेन ज्ञानेन ; निवृत्तबुद्ध्यवस्थानः निवृत्तानि बुद्ध्यवस्थानानि जाग्रदादीनि यस्य स तथाभूतः ; दूरीभूतान्यदर्शनः दूरीभूतम् अन्यदर्शनम् आत्मव्यतिरिक्तज्ञानं यस्य स तथाभूतः ; चक्षुषा अर्कम् इव आत्मना जीवेन आत्मानं परमात्मानम् उपलभ्य आत्मदृक् जीवस्वरूपं विमृशन् प्रथमं मुक्तलिङ्गं शरीररहितं प्रतिपद्यते जानाति, ततः असति प्रपञ्चे स्थितस्य सतः सत्यस्वरूपपरमात्मनः आभासकम्, ततः तस्यैव सतः बन्धुं सखायम् जानाति, ततः असच्चक्षुः असतः प्रपञ्चस्य चक्षुः प्रकाशकं सर्व्वानुस्यूतं सर्व्वं व्याप्य स्थितम् अद्वयं ज्ञानवस्तु प्रतिपद्यते जानाति। व्याख्यानमिदं कैवल्यदीपिकासम्मतम्। तत्रायं विशेषः—बन्धुं योऽसौ सोऽहमिति ज्ञानम् ; चक्षुः मिथ्यात्वप्रकाशकम्, अद्वयं सोऽस्म्यहमेवेति ज्ञानम्। इदन्तु श्रीमच्छङ्करमनुसृत्यैवोक्तम्। यथा तत्रैव—'तदुक्तं शङ्कराचार्य्यैः "योऽसौ सोऽहं सोऽस्म्यहमेवेति विदुर्यम्" इति।' एतानि मुक्ताफले विष्णुभक्त्यङ्गाष्टादशवर्गत्वेन गृहीतानि।

६१—६३ । भक्तिसाधनानि पुनराह अनिमित्तेति। अनिमित्त-

६४ । स्वधर्म्माचरणं शक्त्या विधर्म्माच्च निवर्त्तनम् ।
दैवाल्लब्धेन सन्तोष आत्मविच्चरणार्च्चनम् ॥
६५ । ग्राम्यधर्म्मनिवृत्तिश्च मोक्षधर्म्मरतिस्तथा ।
मितमेध्यादनं शश्वद्विविक्तक्षेमसेवनम् ॥
६६ । अहिंसा सत्यमस्तेयं यावदर्थपरिग्रहः ।
ब्रह्मचर्य्यं तपः शौचं स्वाध्यायः पुरुषार्च्चनम् ॥
६७ । मौनं सदासनजयः स्थैर्य्यं प्राणजयः शनैः ।
प्रत्याहारश्चेन्द्रियाणां विषयान्मनसा हृदि ॥
६८ । स्वधिष्ण्यानामेकदेशे मनसा प्राणधारणम् ।
वैकुण्ठलीलाभिध्यानं समाधानं तथात्मनः ॥

निमित्तेन निमित्तं फलं तत्र निमित्तं प्रवर्त्तकं यस्मिन् तेन निष्कामेण स्वधर्म्मेण, अमलात्मना निर्म्मलेन मनसा ; चिरं श्रुतसंभृतया श्रुतं कथाश्रवणं तेन संभृतया पुष्टया तीव्रया मयि भक्त्या ; दृष्टतत्त्वेन—'सत्त्वपुरुषान्यताख्यातिरूपेण' इति—कैवल्यदीपिका—ज्ञानेन ; बलीयसा वैराग्येण 'गुणसङ्गजनितरागरूपमलापनुत्या बलीयसा वशीकारसंज्ञालक्षणेन' इति कैवल्यदीपिका, तपोयुक्तेन योगेन ध्यानेन ; तीव्रेण आत्मसमाधिना —ध्यानमेव अर्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिरिति लक्षणम् । एभिः किं भवति तदाह—अग्नेः योनिः अरणिः इव पुरुषस्य प्रकृतिः तु स्वधर्म्मादिभिः अहर्निशं दह्यमाना अभिभूयमाना शनकैः क्रमशः तिरोभविनी तिरोहिता भवति । श्रवणलक्षणायाः भक्तेः प्राधान्यं स्वीकृत्याह कैवल्यदीपिका—'भक्तिमुत्पाद्य प्रकटीकृत्य तत्तेजसा नश्यतीत्यर्थः' इति । मुक्ताफले विष्णुभक्त्यङ्गसमवर्गत्वेन गृहीतान्येतानि ।

६४—६८ । पुनरपि भक्तिसाधनान्याह स्वधर्म्मेति । शक्त्या स्वधर्म्माचरणं, विधर्म्मात् निषिद्धात् परधर्म्मात् च निवर्त्तनम् ; दैवात्

६८ । एतैरन्यैश्च पथिभिर्मनोदुष्टमसत्पथम् ।
बुद्ध्या युञ्जीत शनकैर्जितप्राणो ह्यतन्द्रितः ॥
३।२८।२—७ ।

लब्धेन आहार्य्यादिना सन्तोषः तुष्टिः, आत्मविच्चरणार्च्चनम् आत्मविदां तत्त्वज्ञानां चरणार्च्चनं वन्दनादिकम्; ग्राम्यधर्म्मनिवृत्तिः—'ग्राम्यः त्रैवर्गिको धर्म्मः—स्त्रीद्यूतादिसेवा' इति—कैवल्यदीपिका—तस्मात् निवृत्तिः; तथा मोक्षधर्म्मरतिः मोक्षसाधके धर्म्मे अनुरागः; मितमेध्यादनं मितं च मेध्यं च अदनम् अन्नम्—'मितम्—"अर्द्धं सव्यञ्जनान्नस्य तृतीयमुदकस्य च। वायोः सञ्चरणार्थञ्च चतुर्थमवशेषयेत्"।'—इति कैवल्यदीपिका; विविक्तक्षेमसेवनं विविक्तं विजनं क्षेमं निर्ब्बाधं तस्य स्थानस्य सेवनम्—'क्षेमं मशकाद्यनुपहतम्'—कैवल्यदीपिका, अहिंसा क्रौर्य्यत्यागः, सत्यं यथावद्भाषणम्, अस्तेयं—'स्तेयम् अविधिना द्रव्यादानम्'—कैवल्यदीपिका; यावदर्थपरिग्रहः यावता अर्थः प्रयोजनं तन्मात्रस्य परिग्रहः; ब्रह्मचर्य्यं भोगसङ्कोचः; तपः शारीरं वाङ्मयं मानसमिति त्रिविधम् (गी१७।१४—१६); शौचं शुद्धाचारं; स्वाध्यायः वेदाध्ययनम्; पुरुषार्च्चनम्—'पुरुषो विष्णु'रिति कैवल्यदीपिका, सदा मौनं तूष्णीम्भावालम्बनम्, आसनजयः आसनजन्यचाञ्चल्यातिक्रमः, स्थैर्य्यम् अचाञ्चल्यम्, प्राणजयः एकाग्रेण प्राणक्रियासंयमः—'प्राणायामः शनैर्न तु सहसा'—कैवल्यदीपिका, मनसा विषयात् इन्द्रियाणां हृदि प्रत्याहारः प्रत्यानयनम्—'हृदि मनोधिष्ठाने प्रत्याहारः प्रत्यानयनं'—कैवल्यदीपिका, स्वधिष्ण्यानां हृदयादिस्थानानाम् एकदेशे मनसा सह प्राणस्य धारणम्—'आत्मनो मनसः समाधानम् आत्माकारता एकस्मिन् देशे चित्तं धार्य्यम्' इति कैवल्यदीपिका, वैकुण्ठलीलाभिध्यानं भगवल्लीलाचिन्तनम्—'लीला स्मितावलोकादि'—कैवल्यदीपिका, आत्मनः समाधानं भगवतैक्येनावस्थानम्—'धगातुर्ध्येयरूपेणावस्थानं'—कैवल्यदीपिका:,

७० । मद्गुणश्रुतिमात्रेण मयि सर्व्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥
३।२९।११ ।

७१ । निषेवितानिमित्तेन स्वधर्म्मेण महीयसा ।
क्रियायोगेन शस्तेन नातिहिंस्रेण नित्यशः ॥

७२ । मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः ।
भूतेषु मद्भावनया सत्त्वेनासङ्गमेन च ॥

७३ । महतां बहुमानेन दीनानामनुकम्पया ।
मैत्र्या चैवात्मतुल्येषु यमेन नियमेन च ॥

७४ । आध्यात्मिकानुश्रवणान्नामसङ्कीर्त्तनाच्च मे ।
आर्ज्जवेनार्य्यसङ्गेन निरहङ्क्रियया तथा ॥

७५ । मद्धर्म्मणोगुणैरेतैः परिसंशुद्ध आशयः ।
पुरुषस्याञ्जसाभ्येति श्रुतमात्रगुणं हि माम् ॥
३।२९।१५—१९ ।

एतैः स्वधर्म्माचरणाद्यैः अन्यैः व्रतदानादिभिः पथिभिः उपायैः जितप्राणः जितचित्तः अतन्द्रितः अनलसः सन् असत्पथम् उन्मार्गगामि दुष्टं मनः बुद्ध्या ज्ञानेन—'ज्ञानरूपेण सन्मार्गेण'—कैवल्यदीपिका, शनकैः विना हठकारेण युञ्जीत समाहितं कुर्य्यात् । मुक्ताफले विष्णुभक्त्यङ्ग-पञ्चविंशतिवर्गोऽयम् ।

७० । भगवद्गुणश्रवणेन चित्तस्य निरन्तरतदभिमुखगामितोपतिष्ठत इत्याह मद्गुणेति । मद्गुणश्रुतिमात्रेण मम अन्तर्यामिणः गुणश्रवणमात्रेण गङ्गाम्भसः गङ्गाजलस्य यथा अम्बुधौ समुद्रे तथा सर्व्वगुहाशये सर्व्वहृदयवासिनि मयि मनोगतिः अविच्छिन्ना सन्तता भवति ।

७१—७५ । भक्तिसाधनानि पुनराह निषेवितेति पञ्चभिः ।

७६ । अहं सर्व्वेषु भूतेषु भूतात्मावस्थितः सदा ।
तमवज्ञाय मां मर्त्त्यः कुरुतेऽर्च्चाविड़म्बनम् ॥

निषेवितेन सम्यगनुष्ठितेन अनिमित्तेन निष्कामेन स्वधर्म्मेण स्वभावविहितधर्म्मेण, महीयसा श्रद्धादियुक्तेन—'महीयान् प्रथमकल्पानुष्ठितः' —कैवल्यदीपिका, प्रशस्तेन निष्कामेन—'उत्तमदेशकालादिमता' इति श्रीमज्जीवः, नातिहिंस्रेन शरीरपीडाकरकर्म्मत्यागेन क्रियायोगेन तपः-स्वाध्यायेश्वरप्रणिधानरूपेण, मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः मद्धिष्ण्यस्य—"खं वायुमग्निं सलिलं महीञ्च" (८।५०) इत्याद्यनुसारेण ममधिष्ठानभूमेः दर्शनादिभिः, भूतेषु मद्भावनया अन्तर्यामित्वेन मदधिष्ठानचिन्तया, सत्त्वेन धैर्य्येण—'सत्त्वमास्तिक्यं'—कैवल्यदीपिका, असङ्गेन निःसङ्गत्वेन वैराग्येण च, महतां साधूनां बहुमानेन, दीनानां दयापात्राणाम् अनुकम्पया करुणया, आत्मतुल्येषु मैत्र्या च, यमेन अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहरूपेण, नियमेन शौचसन्तोषतपः-स्वाध्यायेश्वरप्रणिधानरूपेण, आध्यात्मिकानुश्रवणात् आध्यात्मिकं मोक्षशास्त्रं तस्य अनुश्रवणात्, मे मम अन्तर्यामिणः नामसङ्कीर्त्तनात् च, आर्ज्जवेन सारल्येन, आर्य्यसङ्गेन सज्जनसङ्गेन, तथा निरहङ्क्रियया निरहङ्कारेण गर्व्वराहित्येन मद्धर्म्मिणः भगवद्धर्म्मानुष्ठातुः पुरुषस्य आशयः चित्तम् एतैः गुणैः परिशुद्धः सन् अञ्जसा तूर्णं श्रुतमात्रगुणं श्रुतमात्राः गुणाः यस्मिन् तं—'श्रुतमात्रा न तु वस्तुतो दृष्टा गुणा यस्मिन्'—कैवल्यदीपिका—एकस्याद्वयज्ञानस्यैव श्रुतिषु दृष्टिभेदैर्व्विविधगुणत्वेन प्रदर्शनाच्छ्रुतमात्रगुणमिति विशेषणम्—माम् अन्तर्यामिणम् अभ्येति प्राप्नोति। मुक्ताफले विष्णुभक्त्यङ्ग विंशतिवर्गोऽयम् ।

७६ । "मद्धिष्ण्यदर्शनस्पर्शपूजास्तुत्यभिवन्दनैः" इत्यत्र किमभिप्रेतं तदेव स्फोरयति अहमिति। अहं भूतात्मा भूतानाम् आत्मा सर्व्वभूतेषु

७७ । यो मां सर्व्वेषु भूतेषु सन्तमात्मानमीश्वरम् ।
हित्वार्च्चां भजते मौढ्यात् भस्मन्येव जुहोति सः ॥

७८ । द्विषतः परकाये मां मानिनो भिन्नदर्शिनः ।
भूतेषु बद्धवैरस्य न मनः शान्तिमृच्छति ॥

७९ । अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयानघे ।
नैव तुष्येऽर्च्चितोऽर्च्चायां भूतग्रामावमानिनः ॥

३।२९।२१—२४ ।

सदा अवस्थितं तं माम् अवज्ञाय उपेक्ष्य मर्त्त्यः अर्च्चाविड़म्बनम् अर्च्चासु मत्पूजानुकरणं कुरुते ।

७७ । यो मामिति । सर्व्वेषु भूतेषु सन्तम् आत्मानम् आत्मनामात्मानम् ईश्वरं प्रेरयितारं हित्वा परिहाय मौढ्यात् मूढ़तावशतः यः अर्च्चां भजते स भस्मनि एव जुहोति । सर्व्वं तद्विफलमिति भावः ।

७८ । भूतद्वेषेण भगवद्द्वेषो भवति, स त्वर्च्चार्च्चनायामवश्यम्भावी, अतएव न तया कोऽपि शान्तिमाप्नोतीत्याह द्विषत इति । परकाये मां तदन्तर्यामिणं द्विषतः, मानिनः अभिमानपरस्य, भिन्नदर्शिनः आत्मतः भेदज्ञानवतः, भूतेषु बद्धवैरस्य मनः न शान्तिम् ऋच्छति प्राप्नोति ।

७९ । अनन्तरपद्ये

अर्च्चादावर्च्चयेत्तावदीश्वरं मां स्वकर्म्मकृत् ।
यावन्न वेद स्वहृदि सर्व्वभूतेष्ववस्थितम् ॥

इत्यनुमतिदानस्य सङ्कोचं प्रस्तौति अहमिति । हे अनघे मातर्देवहुते, उच्चावचैः द्रव्यैः उत्पन्नया क्रियया अहं सर्व्वान्तर्यामी अर्च्चायाम् अर्च्चितः पूजितः भूतग्रामावमानिनः भूतसमूहानाम् अवमाननापरस्य नैव तुष्ये । श्रीमद्विश्वनाथस्त्वत्र यदाह 'सर्व्वभूतात्मदर्शित्वदशायामुद्भूतायां

८०। न पश्यामि परंभूतमकर्त्तुः समदर्शनात्।
मनसैतानि भूतानि प्रणमेद्बहुमानयन्।
ईश्वरो जीवकलया प्रविष्टो भगवानिति॥

३।२९।३४।

८१। अहो वत श्वपचोऽतोगरीयान्
यज्जिह्वाग्रे वर्त्तते नाम तुभ्यम्।
तेपुस्तपस्ते जुहुवुः सस्नुरार्य्या
ब्रह्मानूचुर्नाम गृणन्ति ये ते॥३।३३।७।

सत्यां कर्म्मानधिकारात् न स्वकर्म्मकृत् किन्तु ज्ञानमिश्रां भक्तिं कुर्व्वाणः सन्नर्च्चायां मामर्च्चयेत्' इति, तच्चिन्त्यम् तस्या अवज्ञोत्पन्नत्वात्।

८०। कथं वा

अथ मां सर्व्वभूतेषु भूतात्मानं कृतालयम्।
अर्हयेद्दानमानाभ्यां मैत्र्याभिन्नेन चक्षुषा॥ (३।२९।२७)

इत्युक्तं तस्य हेतुं दर्शयति न पश्यामीति। अकर्त्तुः कर्त्तृत्वाभिमान-शून्यात् समदर्शनात् ब्राह्मणश्वपचादिषु समदर्शनपरायणात् परंभूतं श्रेष्ठं न पश्यामि। अतएव जीवकलया जीवान्तर्यामितया भगवान् ईश्वरः भूतेषु प्रविष्टः इति हेतोः मनसा एतानि भूतानि बहुमानयन् प्रणमेत्।

८१। भगवन्नामकीर्त्तनस्य माहात्म्यमाह अहो वत इति। अहो वत श्वपचः श्वादः अतः अस्मात् हेतोः गरीयान्, यत् यस्मात् तुभ्यं त्वाम् उद्दिश्य जिह्वाग्रे नाम वर्त्तते। ये ते तव नाम गृणन्ति कीर्त्त-यन्ति, ते तपः तेपुः तपः कृतवन्तः, जुहुवुः होमं कृतवन्तः, सस्नुः तीर्थेषु स्नाता अभिषेकं कृतवन्तः, आर्य्याः सदाचाराः, ब्रह्म वेदम् अनूचुः अधीतवन्तः।

८२ । शास्त्रेष्वियानेव सुनिश्चितो नृणां
क्षेमस्य सध्र्यग्विमृशेषु हेतुः ।
असङ्ग आत्मव्यतिरिक्त आत्मनि
दृढ़ा रतिर्ब्रह्मणि निर्गुणे च या ॥

८३ । सा श्रद्धया भगवद्धर्म्मचर्य्यया
जिज्ञासयाध्यात्मिकयोगनिष्ठया ।
योगेश्वरोपासनया च नित्यं
पुण्यश्रवःकथया पुण्यया च ॥

८४ । अर्थेन्द्रियारामसगोष्ठ्यतृष्णया
तत्सम्मतानामपरिग्रहेण ।
विविक्तरुच्या परितोष आत्मनि
विना हरेर्गुणपीयूषपानात् ॥

८२ । भगवति रतिरेव कल्याणहेतुरित्याह शास्त्रेष्विति । सध्र्यग्विमृशेषु सम्यग्विचारवत्सु शास्त्रेषु नृणां नराणां क्षेमस्य श्रेयसः इयान् एव हेतुः सुनिश्चितः । कोऽसौ ? आत्मव्यतिरिक्ते असङ्गः अनासक्तिः, निर्गुणे गुणातीते ब्रह्मणि महतो महीयसि आत्मनि परमात्मनि या दृढ़ा रतिः ।

८३—८६ । सा रतिः कैरुपायैरभ्युदेति तानाह सा श्रद्धयेति चतुर्भिः । श्रद्धया सत्यनिष्ठया, भगवद्धर्म्मचर्य्यया भगवद्भावपुष्टधर्म्माचरणेन, जिज्ञासया तत्तद्विशेषबुभुत्सया—'जिज्ञासा अध्यात्मशास्त्राभ्यासः' —कैवल्यदीपिका, आध्यात्मिकयोगनिष्ठया अध्यात्मयोगनिरततया, नित्यं योगेश्वरोपासनया योगः अघटनसंघटनं तस्य ईश्वरः नियन्ता तस्य उपासनया आराधनेन, पुण्यया पुण्यश्रवःकथया पुण्यश्लोकस्य हरेः

८५ । अहिंसया पारमहंस्यचर्य्यया
स्मृत्या मुकुन्दाचरिताग्र्यसीधुना ।
यमैरकामैर्नियमैरनिन्दया
निरीहया द्वन्द्वतितिक्षया च ॥

८६ । हरेर्मुहुस्तत्परकर्णपूर-
गुणाभिधानेन विजृम्भमाणया ।
भक्त्या ह्यसङ्गः सदसत्यनात्मनि
स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः ॥

४।२२।२०—२५ ।

कथया, 'पुण्यया—पुण्या विष्णुभक्तकथा'—कैवल्यदीपिका, अर्थेन्द्रियारामसगोष्ठ्यतृष्णया अर्थारामाः तामसाः इन्द्रियारामाः कामनिष्ठाः राजसाः तैः सह गोष्ठी समानसभत्वं तत्र अतृष्णया—'तृष्णायाअप्यभावः किं पुनः सेवया'—कैवल्यदीपिका, तत्सम्मतानां भोग्यसामग्रीणाम् अपरिग्रहेण असेवया, विविक्तरुच्या विजनप्रीत्या—सा च हरेर्गुणपीयूषपानात् विना आत्मन् आत्मनि परितोषे सति स्यात् । यद्यपि हरिगुणाकर्णनं विनापि सा स्वस्वरूपपरितोषादुदेति तथापि साधुगोष्ठ्यां भगवद्गुणश्रवणमवश्यमपेक्ष्यं न तेन विजनप्रीतेर्हानिः तस्या असाधुसङ्गविरागसम्भूतत्वात् । अतएवाह श्रीमत्स्वामी—'हरेर्गुणपीयूषपानाद्विना तस्मिन्नसति विविक्ते रुचिर्न कार्य्या न चात्मनि परितोषः कार्य्य इत्यर्थः' इति, 'हरिकथाकर्णनापेक्षा त्वस्त्येवेत्यर्थः' इति कैवल्यदीपिका, अहिंसया हिंसात्यागेन, पारमहंस्यचर्य्यया उपशमादिप्रधानया वृत्त्या, स्मृत्या—आत्महितानुसन्धानेन, मुकुन्दाचरिताग्र्यसीधुना मुकुन्दाचरितम् एव अग्र्यं श्रेष्ठं सीधु अमृतं तेन तच्चरितस्मृतिसुखेनेत्यर्थः—अस्मृत्या वासनोच्छेदकेन विष्णुकथामद्यपानेन—'मद्यं हि स्मृतिविभ्रं-

८७ । तमेवात्मानमात्मस्थं सर्व्वभूतेष्ववस्थितम् ।
पूजयध्वं गृणन्तश्च ध्यायन्तश्चासकृद्धरिम् ॥४।२४।७०

८८ । श्रेयसामिह सर्व्वेषां ज्ञानं निश्रेयसं परम् ।
सुखं तरति दुष्पारं ज्ञाननौर्व्यसनार्णवम् ॥४।२४।७५

ग्रहेतुः'—कैवल्यदीपिका, यमैः अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रह-रूपैः, अकामैः वासनाभावैः, नियमैः शौचसन्तोषतपःस्वाध्यायेश्वर-प्रणिधानरूपैः, अनिन्दया मार्गान्तरस्य अकुत्सया, निरीहया योगक्षेमार्थ-क्रियाराहित्येन, द्वन्द्वतितिक्षया द्वन्द्वसहनेन, मुहुः हरेः तत्परकर्ण-पूरगुणाभिधानेन तत्पराः हरिभक्ताः तेषां कर्णपूराः कर्णालङ्कारभूताः ये हरेः गुणाः तेषाम् अभिधानेन—'हरेर्गुणाभिधानेनेत्यसामर्थ्येऽप्यार्ष-त्वात् समासः'—कैवल्यदीपिका, 'एतैः श्रद्धादिभिः सर्व्वैस्तृतीयान्तैः सम्बध्यते'—कैवल्यदीपिका, विजृम्भमाणया उद्दीप्तया भक्त्या सदसति कार्य्यकारणरूपे अनात्मनि असङ्गः अनासक्तिः निर्गुणे गुणातीते ब्रह्मणि च सा रतिः अञ्जसा तूर्णं स्यात् । 'असङ्गोरतिश्चेत्यनिष्टहानिरिष्टाप्ति-श्चेति स्वयमुक्तम्'—कैवल्यदीपिका । विष्णुभक्त्यङ्गोनविंशतिवर्गोऽयं मुक्ताफले । अत्र प्रथमश्लोकोक्तं गृहस्थस्य, द्वितीयश्लोकोक्तं वानप्रस्थस्य, तृतीयश्लोकोक्तं यतेः, ततःपरं नैष्ठिकब्रह्मचारिणो विष्णुभक्तिवृद्धौ कारणमिति श्लोकचतुष्टयार्थ इति मुक्ताफलकर्त्तुः स्वकृतव्याख्या कैवल्य-दीपिका ।

८७ । आत्मस्थं सर्व्वभूतस्थं भगवन्तं कीर्त्तनादिनाराधयितुं वार्हि-षदानुपदिशति रुद्रगीतेन तमेवेति । आत्मस्थं सर्व्वभूतेषु अवस्थितं तम् एव आत्मानं परमात्मानं असकृत् हरिं ध्यायन्तः गृणन्तः कीर्त्तयन्तः च पूजयध्वम् ।

८८ । ज्ञानस्योपायरूपेणोपन्यस्यति श्रेयसामिति । सर्व्वेषां श्रेय-साम् इह ज्ञानं परं निश्रेयसम् । ज्ञाननौः ज्ञान एव नौर्यस्य सः दुष्पारं

८९। आस्तीर्य्य दर्भैः प्रागग्रैः कार्त्स्न्येन क्षितिमण्डलम्।
स्तब्धो बृहद्वधान्मानी कर्म्म नावैषि यत् परम्।
तत् कर्म्म हरितोषं यत् सा विद्या तन्मतिर्यया॥

९०। हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः।
तत्पादमूलं शरणं यतः क्षेमो नृणामिह॥

४।२९।४९।५०।

९१। यथा तरोर्मूलनिषेचनेन
तृप्यन्ति तत्स्कन्धभुजोपशाखाः।
प्राणोपहाराच्च यथेन्द्रियाणां
तथैव सर्व्वार्हणमच्युतेज्या॥४।३१।१४।

व्यसनार्णवं दुःखसमुद्रं सुखं सुखेन तरति। ज्ञानमत्र 'भागवतमेवेति' —श्रीमज्जीवः।

८९। वैदिकं कर्म्म विनिन्द्य हरितोषणं कर्म्मैव कर्म्म तन्मतिसाधिकैव विद्येत्याह प्राचीनवर्हिषं प्रति नारदवाक्येन आस्तीर्य्येति। प्रागग्रैः दर्भैः कुशैः कार्त्स्न्येन क्षितिमण्डलम् आस्तीर्य्य स्तब्धः मूढ़ः बृहद्वधात् बृहत्पशुवधात् मानी यज्वाहमित्यभिमानी, यत् परं कर्म्म तत् न अवैषि न जानासि। किन्तत् कर्म्म? तत् कर्म्म यत् हरितोषं हरिं तोषयतीति हरितोषं; यया तन्मतिः तस्मिन् हरौ मतिः भवति सा विद्या।

९०। हरिपदाश्रयणेन कृतार्थतेत्याह हरिरिति। हरिः देहभृतां जीवानाम् आत्मा, स्वयं प्रकृतिः कारणम्, ईश्वरः नियन्ता— 'सर्व्वजगन्मातापितरौ' इति—श्रीमद्विश्वनाथः, तत्पादमूलं शरणम् आश्रयः; यतः इह नृणां क्षेमः कल्याणम्।

९१। भगवदाराधनेन सर्व्वाराधनं भवतीत्याह यथेति। तरोः

९२ । हंसे गुरौ मयि भक्त्यानुवृत्त्या
वितृष्णया द्वन्द्वतितिक्षया च ।
सर्व्वत्र जन्तोर्व्यसनावगत्या
जिज्ञासया तपसेहानिवृत्त्या ॥

९३ । मत्कर्म्मभिर्मत्कथया च नित्यं
मद्देवसङ्गाद्गुणकीर्त्तनान्मे ।
निर्व्वैरसाम्योपशमेन पुत्रा
जिहासया देहगेहात्मबुद्धेः ॥

९४ । अध्यात्मयोगेन विविक्तसेवया
प्राणेन्द्रियात्माभिजयेन सध्र्यक् ।
सच्छ्रद्धया ब्रह्मचर्य्येण शश्व-
दसंप्रमादेन यमेन वाचाम् ॥

वृक्षस्य मूलनिषेचनेन मूले जलसेकात् तत्स्कन्धभुजोपशाखाः तस्य वृक्षस्य स्कन्धः स्कन्धविभागः शाखाः शाखाविभागाः उपशाखाः तृप्यन्ति, प्राणोपहारात् भोजनात् च यथा इन्द्रियाणां तृप्तिः, तथा अच्युतेज्या अच्युताराधनं सर्व्वेषां देवादीनाम् अर्हणम् आराधनं भवति । तथा चान्यत्र—

यथा हि स्कन्धशाखानां तरोर्मूलनिषेचनात् ।
एवमाराधनं विष्णोः सर्व्वेषामात्मनश्च हि ॥ (८।५।४९) इति ।

९२—९५ । भक्तिसाधनानि पुनराह हंस इति चतुर्भिः पुत्रान् प्रति ऋषभवाक्येन । मयि हंसे परमात्मनि गुरौ भक्त्या अनुवृत्त्या सेवया तत्परतया—'अनुवृत्तिः परिचर्य्या सा च तत्परत्वेन न तु यथाकथञ्चित्' —कैवल्यदीपिका ।' हंसइत्यत्र हराविति मुक्ताफलपाठः, तेन च हरौ

९५ । सर्व्वत्र मद्भवविचक्षणेन
ज्ञानेन विज्ञानविराजितेन ।
योगेन धृत्युद्यमसत्त्वयुक्तो
लिङ्गं व्यपोहेत् कुशलोऽहमाख्यम् ॥
५।५।१०—१३ ।

गृहमार्ज्जनादिका गुरौ लब्धार्पणादिका इति भेदं साधयित्वा पञ्चविंशतिसाधनानि षड्विंशतिसाधनत्वेन परिणमय्य षड्विंशतिवर्गोऽयमिति तत्र । वितृष्णया विगततृष्णया—'वितृष्णा दृष्टश्रुतविषयवैतृष्ण्यं' —कैवल्यदीपिका ; द्वन्द्वतितिक्षया शीतोष्णादिसहनेन ; सर्व्वत्र जन्तोः व्यसनावगत्या सर्व्वलोकान्तरेऽपि दुःखानुसन्धानेन—'सर्व्वत्र ब्रह्मपदादिषु व्यसनं कालभयम्'—कैवल्यदीपिका ; जिज्ञासया परतत्त्वं ज्ञातुमिच्छया ; तपसा कायवाङ्मानसेन—'तपः अयाचितादि'—कैवल्यदीपिका, 'भगवत्प्रीणनस्वधर्म्मेण'—क्रमसन्दर्भः ; ईहानिवृत्या काम्यकर्म्मत्यागेन—'ईहानिवृत्तिः वर्ज्ज्यचेष्टात्यागः'—कैवल्यदीपिका, 'ऐहिकपारलौकिककामनान्तरनिवर्त्तनेन'—क्रमसन्दर्भः ; मत्कर्म्मभिः मत्प्रयोजनैः कर्म्मभिः—'मदर्थैः कर्म्मभिः'—कैवल्यदीपिका ; 'मदर्च्चनपादसेवनलक्षणैः'—क्रमसन्दर्भः ; नित्यं मत्कथया—'मत्कथाकथनमन्यं प्रति'—कैवल्यदीपिका, मद्देवसङ्गात् अहमेव देवो येषां तैः भक्तैः सङ्गात् ; मे मम कीर्त्तनात्—'कीर्त्तनम् एकाकिना'—कैवल्यदीपिका, निर्व्वैरम् अहिंसा ; साम्योपशमेन साम्येन उपशमेन च—'साम्यं शत्रुमित्रोदासीनेषु तुल्यबुद्धिता, उपशमो निरभिमानिता'—कैवल्यदीपिका ; हे पुत्राः, देहगेहात्मबुद्धेः जिहासया देहगेहयोः आत्मबुद्धेः अहं ममेति बुद्धेः हानेच्छया, अध्यात्मयोगेन अध्यात्मशास्त्राभ्यासेन—सध्र्यक् सम्यक् इति सर्व्वत्र सम्बन्धः—विविक्तसेवया एकान्तसेवया, प्राणेन्द्रियात्माभिजयेन—'प्राणादिनामभिजयः क्रमात् प्राणायामप्रत्या-

८६ । तपसा ब्रह्मचर्य्येण शमेन च दमेन च ।
त्यागेन सत्यशौचाभ्यां यमेन नियमेन च ॥

८७ । देहवाग्बुद्धिजं धीरा धर्म्मज्ञाः श्रद्धयान्विताः ।
क्षिपन्त्यघं महदपि वेणुगुल्ममिवानलः ॥

हारधारणादिभिः'—कैवल्यदीपिका; सच्छ्रद्धया—'सच्छ्रद्धा सम्यक् बुद्धिः'—कैवल्यदीपिका, ब्रह्मचर्य्येण भोगसङ्कोचेन; शश्वत् असंप्रमादेन कर्त्तव्यस्यापरित्यागेन—'संप्रमादो भक्तिसाधनानामभावना'—कैवल्यदीपिका, वाचां यमेन मौनेन, सर्व्वत्र मद्भावविचक्षणेन सर्व्वत्र मद्भावो मद्भावना तत्र विचक्षणेन निपुणेन—'सर्व्वत्र स्थिरचरेषु मद्भावो मत्सत्ता विख्यायते येन तत्तथा'—कैवल्यदीपिका, विज्ञानविराजितेन अनुभवपर्य्यन्तेन ज्ञानेन—'विराजितम् उपबृंहितं'—कैवल्यदीपिका, योगेन समाधिना, धृत्युद्यमसत्त्वयुक्तः धैर्य्यप्रयत्नविवेकैर्युक्तः सन्—'धृतिर्धैर्य्यं फलासिद्धौ विकल्पनाभावः, उद्यमः अनलसत्वम्, एतानि अधिकाङ्गविशेषणत्वादुपाङ्गानि न लक्षाणि, अतएव एषां तृतीयया पञ्चम्या वा न निर्द्देशः'—कैवल्यदीपिका, कुशलः निपुणः अहमाख्यम् अहङ्काराख्यं लिङ्गम् उपाधिं व्यपोहेत् निरस्येत् ।

८६।८७। न खलु पापनिर्हरणं विना साधनसिद्धिः, अतएव तत् केनोपायेन भवति तदाह तपसेति देहेति । तपसा कायवाङ्मानसरूपेण त्रिविधेन, ऐकाग्र्येण—'मनसश्चेन्द्रियाणाञ्च ऐकाग्र्यं परमं तपः' इति स्मृतेः, ब्रह्मचर्य्येण भोगसङ्कोचेन भोग्यवस्तुस्मरणादित्यागेन; शमेन मनसो नियमनेन, दमेन बाह्येन्द्रियनियमनेन, त्यागेन दानेन, सत्यशौचाभ्यां सत्येन यथाभूतार्थभाषणेन शौचेन बाह्याभ्यन्तरशुद्ध्या; यमेन अहिंसादिना, नियमेन जपादिना, श्रद्धयान्विताः धर्म्मज्ञाः देहवाग्बुद्धिजं महत् अपि अघं पापं—अनलः वेणुगुल्म इव क्षिपन्ति दूरात् परिहरन्ति ।

९८ । केचित् केवलया भक्त्या वासुदेवपरायणाः ।
अघं धुन्वन्ति कार्त्स्न्येन नीहारमिव भास्करः ॥

९९ । न तथा ह्यघवान् राजन् पूयेत तपआदिभिः ।
यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया ॥

६।१।१३—१६ ।

१०० । सर्व्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥

९८ । सुगमोपायान्तरमाह केचिदिति । वासुदेवपरायणाः सर्व्वान्तर्यामिनिष्ठान्विताः केचित् केवलया शुद्धया तपआदिनिरपेक्षया भक्त्या प्रीत्या—भास्करः सूर्य्यः नीहारम् इव—कार्त्स्न्येन सामग्र्येण अघं पापं धुन्वन्ति क्षिपन्ति ।

९९ । एतदेव विस्पष्टयति न तथेति । हे राजन् परिक्षित्, अघवान् जनः तपआदिभिः न तथा पूयेत, यथा कृष्णार्पितप्राणः कृष्णे चित्ताकर्षणे अर्पिताः प्राणाः येन तथाभूतः सन् तत् पूरुषनिषेवया तस्य कृष्णस्य पुरुषाणां भक्तानां निषेवया सङ्गेन ।

सध्रीचीनोह्यय लोके पन्थाः क्षेमोऽकुतोभयः ।
सुशीलाः साधवो यत्र नारायणपरायणाः ॥

इत्यनन्तरपद्ये भक्तानां सहायतास्मिन् भक्तिमार्गे सुलभेति समीचीनत्वम् ।

१०० । हरेर्नामग्रहणेन सर्व्वविधपापनिष्कृतिरवश्यम्भाविनीत्याह सर्व्वेषामिति । सर्व्वेषाम् अपि अघवतां पापिनाम् इदं विष्णोर्नामव्याहरणं नामग्रहणं सुनिष्कृतं श्रेष्ठं प्रायश्चित्तम् । कथम्? यतः नामव्याहरणात् तद्विषया विष्णुविषया मतिः भवति । यथाऽभूदजामिलस्य ;—

अजामिलोऽप्यथाकर्ण्य दूतानां यमकृष्णयोः ।
धर्म्मं भागवतं शुद्धं त्रैविद्यञ्च गुणाश्रयम् ॥

भक्तिमान् भगवत्याशु माहात्म्यश्रवणाद्धरेः ।
अनुतापी महानासीत् स्मरतोऽशुभमात्मनः ॥
अहो मे परमं कष्टमभूदविजितात्मनः ।
येन विप्लावितं ब्रह्म वृषल्यां जायतात्मना ॥
धिङ्मां विगर्हितं सद्भिर्दुष्कृतं कुलकज्जलम् ।
हित्वा बालां सतीं योऽहं सुरापीमसतीमगाम् ॥
वृद्धावनाथौ पितरौ नान्यबन्धू तपस्विनौ ।
अहो मयाधुना त्यक्तावकृतज्ञेन नीचवत् ॥
सोऽहं व्यक्तं पतिष्यामि नरके भृशदारुणे ।
धर्म्मघ्नाः कामिनो यत्र विन्दन्ति यमयातनाः ॥
किमिदं स्वप्न आहोस्वित् साक्षाद्दृष्टमिहाद्भुतम् ।
क्व याता अद्य ते ये मां व्यकर्षन् पाशपाणयः ॥
अथ ते क्व गताः सिद्धाश्चत्वारश्चारुदर्शनाः ।
व्यमोचयन्नीयमानं बद्ध्वा पाशैरधोभुवः ॥
अथापि मे दुर्भगस्य विबुधोत्तमदर्शने ।
भवितव्यं मङ्गलेन येनात्मा मे प्रसीदति ॥
अन्यथा म्रियमाणस्य नाशुचेर्वृषलीपतेः ।
वैकुण्ठनामग्रहणं जिह्वा वक्तुमिहार्हति ॥
क्व चाहं कितवः पापो ब्रह्मघ्नो निरपत्रपः ।
क्व च नारायणेत्येतद्भगवन्नाम मङ्गलम् ॥
सोऽहं तथा यतिष्यामि यतचित्तेन्द्रियानिलः ।
यथा न भूय आत्मानमन्धेतमसि मज्जये ॥
विमुच्य तमिमं बन्धमविद्याकामकर्म्मजम् ।
सर्व्वभूतसुहृच्छान्तो मैत्रः करुण आत्मवान् ॥
मोचये ग्रस्तमात्मानं योषिन्मय्यात्ममायया ।
विक्रीडितो ययैवाहं क्रीडामृग इवाधमः ॥
ममाहमिति देहादौ हित्वाऽमिथ्यार्थधीर्मतिम् ।
धास्ये मनो भगवति शुद्धं तत्कीर्त्तनादिभिः ॥
इति जातसुनिर्व्वेदः क्षणसङ्गेन साधुषु ।
गङ्गाद्वारमुपेयाय मुक्तसर्व्वानुबन्धनः ॥ (६।२।२४—३९) इति ।

तत्र स योगेन भगवत्साक्षात्कारानन्तरं देहं तत्याज । अजामिलस्य नामव्याहरणं स्वपुत्रसाङ्केत्येनाभूत् । तेन च

१०१। न निष्कृतैरुदितैर्ब्रह्मवादिभि-
स्तथा विशुद्ध्यत्यघवान् व्रतादिभिः।
यथा हरेर्नामपदैरुदाहृतै-
स्तदुत्तमश्लोकगुणोपलम्भकम्॥

न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति। (गी ६।४०)
यानास्थाय नरो राजन् न विपद्येत कर्हिचित्।
धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह॥ (११।२।३५)।

इति न्यायात् प्रथमवयसि भगवद्दर्शनादिकसौभाग्यवशात् पूर्व्वा स्मृतिरभ्युदेत् 'किमिदं स्वप्न आहोस्वित् साक्षाद्दृष्टम्' इत्युक्तिस्तदेव दर्शयति। साङ्केत्येन पूर्व्वा स्मृतिरुदगच्छदित्यत आह

साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः॥ (६।२।१४)। इति।

पद्यस्यास्य प्रकृतार्थनिर्णयं श्रीमज्जीव एवमकरोत्—'परिहासोऽत्र प्रीतिगर्भमन्यपरिभववचनं न तु निन्दागर्भम्, तत्तूपहासएवोच्यते। तस्मान्नर्मोपहलकं यत्किञ्चिद्भगवन्नामोक्तमित्यर्थः। हेलनमत्र हेलया गिरिरुद्धृत इतिवत् यत्नराहित्यमेवोच्यते न त्ववमाननात्मकमिति ज्ञेयम्।' इति। यत्नराहित्यञ्चैवं श्रीमद्विश्वनाथेन विवृतम्—'आहार-विहारनिद्रादावप्यवहेलया एव यावन्ति कृष्णनामान्ययं गृह्णाति न तावन्त्यन्यः प्रयत्नेनापि ग्रहीतुं शक्नोतीति न तु निन्दावज्ञादिकम्' इति।

१०१। शास्त्रोदितैः प्रायश्चित्तान्तरैः कथं न तथा शुद्ध्यति यथा भगवन्नामव्याहरणेन तत्कारणमाह न निष्कृतैरिति। ब्रह्मवादिभिः मन्वादिभिः उदितैः व्रतादिभिः निष्कृतैः प्रायश्चित्तैः न तथा शुद्ध्यति यथा हरेः उदाहृतैः नामपदैः नामरूपैः पदैः शुद्ध्यति। कथम्? तन्नामोच्चारणम् उत्तमश्लोकगुणोपलम्भकम् उत्तमश्लोकस्य भगवतः गुणा-नाम् उपलम्भकम् अनुभवहेतुः।

१०२ । नैकान्तिकं तद्धि कृतेऽपि निष्कृतं
मनः पुनर्धावति चेदसत्पथे ।
तत्कर्म्मनिर्हारमभीप्सतां हरे-
र्गुणानुवादः खलु सत्त्वभावनः ॥६।२।१०—१२

१०३ । तैस्तान्यघानि पूयन्ते तपोदानजपादिभिः ।
नाधर्म्मजं तद्धृदयं तदपीशाङ्घ्रिसेवया ॥६।२।१७ ।

१०४ । एतावानेव लोकेऽस्मिन् पुंसां धर्म्मः परः स्मृतः ।
भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥
६।३।२२ ।

१०२ । कथं न प्रायश्चित्तान्तरैः शुद्धिस्तत्कारणमाह नैकान्तिकमिति । तत् निष्कृतं न एकान्तिकं नात्यन्तशोधकम् यस्मिन् कृते अपि चेत् यदि मनः पुनः असत्पथे पापमार्गे धावति । ततः किं कर्त्तव्यम् ? तत् तस्मात् कर्म्मनिर्हारं कर्म्मणां पापानां निर्हारम् आत्यन्तिकनाशम् अभीप्सताम् इच्छतां हरेः गुणानुवादः हरेरन्तर्य्येण गुणकीर्त्तनं कर्त्तव्यः, यतः असौ खलु सत्त्वभावनः चित्तशोधकः चित्तस्य विषयान्तरगतिनिवर्त्तकः ।

१०३ । न खलु तपआदि व्यर्थं, तैः पापनिवृत्तिर्भवति । वाऽस्तो निवृत्तावपि तेषां तैः कलुषितस्य हृदयस्य शोधनासम्भावनायां तेषां पुनः प्ररोहो नावरुध्यते । अतएव तत्साधनार्थं भगवच्चरणसेवनमेवावश्यकर्त्तव्यमित्याह तैरिति । तैः तपोदानजपादिभिः तानि तत्तत्प्रभूतानि अघानि पापानि वह्निर्विप्रयासञ्चितानि पूयन्ते नश्यन्ति तिरोभवन्ति, न अधर्म्मजम् अधर्म्मवशात् कलुषितं तत् हृदयं न पूयते । तत् हृदयम् अपि ईशाङ्घ्रिसेवया भगवच्चरणसेवया पूयते ।

१०४ । कोऽयं मनुजानां परमधर्म्मस्तमाह एतावानिति । अस्मिन्

१०५ । एतावतालमघनिर्हरणाय पुंसां
सङ्कीर्त्तनं भगवतोगुणकर्म्मनाम्नाम् ।
विक्रुश्य पुत्रमघवान् यदजामिलोऽपि
नारायणेति म्रियमाण इयाय मुक्तिम् ॥

६।३।२४ ।

१०६ । शृण्वतां गृणतां वीर्य्याण्युद्दामानि हरेर्मुहुः ।
यथा सुजातया भक्त्या शुद्ध्येन्नात्मा व्रतादिभिः ॥

६।३।३२ ।

लोके पुंसां जनानाम् एतावान् एव परः धर्म्मः स्मृतः । कोऽयम् ? तन्नामग्रहणादिभिः भगवन्नामग्रहणादिभिः भगवति भक्तियोगः ।

१०५ । केन वा पापनिर्हारो भवति तदाह एतावतेति । भगवतः गुणकर्म्मनाम्नां सङ्कीर्त्तनं सम्यक् कीर्त्तनं यत् एतावता पुंसाम् अघनिर्हरणाय पापविनाशाय अलम् उपयोगो नास्तीति श्रीमत्स्वामी । पूर्व्वापरसङ्गत्यर्थं पर्य्याप्तर्थं एवात्र ग्राह्यः । तेन हि सङ्कीर्त्तनव्यतिरिक्तस्यान्यस्याप्रयोजनं प्रदर्शितं भवति । सम्यक् सङ्कीर्त्तनेन पापविनाशो भवतीत्यत्र न संशयः कर्त्तव्यः, यत् यस्मात् म्रियमाणः आसन्नमृत्युः अघवान् पापी अजामिलः अपि नारायण इति पुत्रं विक्रुश्य मुक्तिम् इयाय प्राप्तवान् । अत्र पुत्रनामोच्चारणेन पूर्व्वस्मृत्युदयः, तेन च महाननुतापः, तेन च योगानुष्ठानं, तेन च भगवत्साक्षात्कार इति क्रमो द्रष्टव्यः ।

१०६ । श्रवणादिना भक्तेरुदयः तया च शुद्धिरिति तत्त्वमाह शृण्वतामिति । हरेः उद्दामानि सर्व्वतः प्रतिबन्धकरहितानि वीर्य्याणि विक्रमान् मुहुः शृण्वतां गृणतां कीर्त्तयतां सुजातया सुष्ठु उत्पन्नया भक्त्या आत्मा यथा शुद्ध्येत् न तथा व्रतादिभिः ।

१०७। अहं हरे तव पादैकमूल-
दासानुदासो भवितास्मि भूयः ।
मनः स्मरेतासुपतेर्गुणानां
गृणीत वाक् कर्म्म करोतु कायः ॥६।११।२४ ।

१०८। यस्य भक्तिर्भगवति हरौ नैश्रेयसेश्वरे ।
विक्रीडतोऽमृताम्भोधौ किं क्षुद्रैः खातकोदकैः ॥
६।१२।२२ ।

१०९। श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्च्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ॥

११०। इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ।
क्रियेत भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥
७।५।२३।२४ ।

१०७। स्मरणकीर्त्तनभगवदादेशपालनदास्यत्वस्वीकारमृते भक्तानां नान्यत् किञ्चन प्रार्थनीयमस्तीति वृत्रवाक्येनाह अहमिति। हे हरे, अहं तव पादैकमूलदासानुदासः भूयः भवितास्मि भविष्यामि भवेयम्। असुपतेः प्राणनाथस्य ते तव गुणानां गुणान् मनः स्मरेत स्मरतु, वाक् ते गुणान् गृणीत कीर्त्तयतु, कायः कर्म्म करोतु।

१०८। भगवद्भक्तिकृतार्थस्य नान्यस्मिन् प्रयोजनमस्तीत्याह यस्येति। नैश्रेयसेश्वरे सर्व्वविधकल्याणानां नियन्तरि भगवति हरौ यस्य भक्तिः, अमृताम्भोधौ अमृतसमुद्रे विक्रीडतः विचरतः तस्य क्षुद्रैः खाताकोदकैः तदुपमैः स्वर्गादिभिः किम्?

१०९।११०। नवलक्षणां भक्तिमाह प्रह्लादवाक्येन श्रवणमिति युग्मकेन। नववर्गोऽयं मुक्ताफले। श्रवणं—'नामरूपगुणपरिकरलीला-

१११ । न ह्यच्युतं प्रीणयतो बह्वायासोऽसुरात्मजाः ।
आत्मत्वात् सर्व्वभूतानां सिद्धत्वादिह सर्व्वतः ॥
७।६।१९ ।

मयशब्दानां श्रोत्रस्पर्शः'—श्रीमज्जीवः ; कीर्त्तनं—'एवं कीर्त्तनस्मरणयोरपि क्रमो ज्ञेयः'—श्रीमज्जीवः; स्मरणं—'यत् किञ्चिन्मनसानुसन्धानम्'—श्रीमज्जीवः ; पादसेवनं परिचर्य्या—'पादयोः सेवनं मननं'—श्रीमद्वोपदेवः ; अर्च्चनं पूजा ; वन्दनं 'स्तुतिः'—श्रीमद्वोपदेवः, 'नमस्कारः'—श्रीमज्जीवः ; दास्यं कर्म्मार्पणं—'तद्दासोऽस्मीत्यभिमानः'—श्रीमज्जीवः 'स्वस्य दासत्वभावना'—श्रीमद्विश्वनाथः ; सख्यं तद्विश्वासादि, 'बन्धुभावेन तदीयहिताशंसनम्'—श्रीमज्जीवः 'स्वस्य तन्मित्रत्वभावना दृढ़विश्वासश्च'—श्रीमद्विश्वनाथः ; आत्मनिवेदनं शरीरसमर्पणं देहं तस्मै समर्प्य तच्चिन्तावर्ज्जनम्, 'देहादिशुद्धात्मपर्य्यन्तस्य सर्व्वतो भावेन तस्मिन्नेवार्पणम्'—श्रीमज्जीवः, इति नवलक्षणा भक्तिः अद्धा साक्षात्सम्बन्धेन विष्णौ अर्पिता—न तु कृतायां सत्यां पश्चात् अर्पिता—क्रियेत तत् उत्तमम् अधीतम् अध्ययनं मन्ये । 'अद्धा साक्षाद्रूपा न तु कर्म्माद्यर्पणरूपा पारम्परिकी भक्तिरियम्' इति श्रीमज्जीवः। स चात्र साधनक्रममेवसुदलेखीत् :—"यद्यप्येकतरेणापि व्युत्क्रमेणापि सिद्धिर्भवत्येव तथापि प्रथमं नाम्नः श्रवणमन्तःकरणशुद्ध्यर्थमपेक्ष्यम्, शुद्धे चान्तःकरणे रूपश्रवणेन तदुदययोग्यता भवति । सम्यगुदिते च रूपे गुणानां स्फुरणं सम्पद्येत, सम्पन्ने च गुणानां स्फुरणे परिकरवैशिष्ट्येन तद्वैशिष्ट्यं सम्पद्यते । ततस्तेषु नामरूपगुणपरिकरेषु सम्यक् स्फुरितेषु लीलानां स्फुरणम् सुष्ठु भवतीत्यभिप्रेत्य साधनक्रमोलिखितः । एवं कीर्त्तनस्मरणयोश्च ज्ञेयम् ।" इति ।

१११ । सयौक्तिकं भगवत्प्रीणनस्यानायाससाध्यत्वमाह असुरबालकान् प्रति प्रह्लादवाक्येन न ह्यच्युतमिति । हे असुरात्मजाः;

११२ । धर्म्मार्थकाम इति योऽभिहितस्त्रिवर्ग
ईक्षा त्रयी नयदमौ विविधा च वार्त्ता ।
मन्ये तदेतदखिलं निगमस्य सत्यं
स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः ॥७।६।२६ ।

११३ । गुरुशुश्रूषया भक्त्या सर्व्वलब्धार्पणेन च ।
सङ्गेन साधुभक्तानामीश्वराराधनेन च ॥

११४ । श्रद्धया तत् कथायाञ्च कीर्त्तनैर्गुणकर्म्मणाम् ।
तत्पादाम्बुरुहध्यानात्तल्लिङ्गेक्षार्हणादिभिः ॥

११५ । हरिः सर्व्वेषु भूतेषु भगवानास्त ईश्वरः ।
इति भूतानि मनसा कामैस्तैः साधु मानयेत् ॥

११६ । एवं निर्ज्जितषड्वर्गैः क्रियते भक्तिरीश्वरे ।
वासुदेवे भगवति यया संलभते रतिम् ॥

अच्युतं प्रीणयतः जनस्य न बह्वायासः अतिप्रयासः । कथम् ? सर्व्वभूतानाम् आत्मत्वात् सुतराम् इह सर्व्वतः सिद्धत्वात् ।

११२ । परमपुरुषे पुनरात्मसमर्पणमेव सर्व्वविद्यासु सारभूतं तदेव तासामुद्देश्यमित्याह प्रह्लादवाक्येन धर्म्मार्थकाम इति । धर्म्मार्थकाम इति यः त्रिवर्गः अभिहितः, तदर्थञ्च ईक्षा आत्मविद्या, त्रयी कर्म्मविद्या, नयदमौ तर्कः दण्डनीतिश्च, विविधा च वार्त्ता जीविका इत्याद्याः ये अभिहिताः, तदेतत् निगमस्य निखिलं समग्रं सत्यं स्वसुहृदः स्वात्मनः मित्रस्य अन्तर्यामिणः परमस्य पुंसः स्वात्मार्पणम् । तत् साधनं चेत् तर्हि सर्व्वं सत्यं मन्ये सत्यपरत्वात्, अन्यथा तदसत्यमेव ।

११३—११६ । भक्तेरन्तरङ्गसाधनान्याह गुरुशुश्रूषयेति । द्वादशवर्गोऽयं मुक्ताफले । गुरुशुश्रूषया गुरुसेवया ; भक्त्या प्रेम्णा ; सर्व्वलब्धा-

११७। निशम्य कर्म्माणि गुणानतुल्यान्
वीर्य्याणि लीलातनुभिः कृतानि ।
यदातिहर्षोत्पुलकाश्रुगद्गदं
प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥

र्पणेन सर्व्वेषां लब्धानां लाभानां अर्पणेन च, साधुभक्तानां सङ्गेन, ईश्वराराधनेन च—'सर्व्वकर्म्मार्पणं'—कैवल्यदीपिका, तत् कथायां श्रद्धया—'श्रद्धा श्रवणेन'—कैवल्यदीपिका, गुणकर्म्मणां गुणानां भक्तवात्सल्यादीनां कर्म्मणां सर्ज्जनरक्षणादीनां कीर्त्तनैः—'गुणाः ऐश्वर्य्यादयः कर्म्माणि सृष्ट्यादीनि'—कैवल्यदीपिका,तत्पादाम्बुरुहध्यानात् तच्चरणचिन्तनात्, तल्लिङ्गेक्षार्हणादिभिः तस्य लिङ्गानाम् अधिष्ठानभूमीनाम् ईक्षणं दर्शनम् अर्हणं सम्माननं आदिर्येषां तैः—आदिशब्देन द्वादशवर्गप्रतिज्ञाभङ्गभयादाह श्रीमद्बोपदेवः—'न चादिशब्देनान्येषामप्युक्तत्वात् द्वादशवर्गप्रतिज्ञाभङ्ग इति शङ्क्यम्, इह स्वशब्दनिर्दिष्टैरेवाङ्गैर्वर्गसमाप्तेर्विवक्षितत्वात्'; सर्व्वेषु भूतेषु भगवान् हरिः ईश्वरः आस्ते इति हेतोः मनसा तैः कामैः—'तत्तच्चिन्तानुवर्त्तनैः'—कैवल्यदीपिका—साधु यथा स्यात् तथा मानयेत् । एवं—'द्वादशवर्गानुष्ठानेन'—कैवल्यदीपिका—निर्ज्जितषड्वर्गैः निर्ज्जितः षण्णां काम‌क्रोधलोभमोहमदमात्सर्य्याणाम् इन्द्रियाणां वा वर्गः यैः तैः वासुदेवे सर्व्वान्तर्यामिणि भगवति ईश्वरे भक्तिः क्रियते ; यया भक्त्या रतिं संलभते ।

११७। लब्धरतेर्लक्षणानि फलञ्चाह कुलकेन निशम्येति । कर्म्माणि सर्ज्जनादीनि, अतुल्यान् गुणान् भक्तवात्सल्यादीन्, लीलातनुभिः लीलार्थं स्वीकृताभिः तनुभिः आविर्भूतस्वरूपैः कृतानि वीर्य्याणि विक्रमाविष्कारान् निशम्य श्रुत्वा यदा अतिहर्षोत्पुलकाश्रुगद्गदम् अतिहर्षेण उद्गताः पुलकाः अश्रूणि च तैः गद्गदं यथा भवति तथा प्रोत्कण्ठः मुक्तकण्ठः सन् उद्गायति, रौति, नृत्यति ;

११८ । यदा ग्रहग्रस्त इव क्वचिद्धस-
त्याक्रन्दते ध्यायति वन्दते जनम् ।
मुहुः श्वसन् वक्ति हरे जगत्पते
नारायणेत्यात्मगतिर्गतत्रपः ॥

११९ । तदा पुमान् मुक्तसमस्तबन्धन-
स्तद्भावभावानुकृताशयाकृतिः ।
निर्दग्धबीजानुशयो महीयसा
भक्तिप्रयोगेण समेत्यधोक्षजम् ॥

७।७।३०—३६ ।

११८ । यदेति । यदा आत्मगतिः आत्मनाम् आत्मा एव गतिः यस्य सः ग्रहग्रस्तः ग्रहाविष्टः इव गतत्रपः निर्लज्जः सन् क्वचित् हसति, क्वचित् आक्रन्दते—'आक्रन्दनं नारायणेत्यादि सातत्येन शब्दनम्'—कैवल्यदीपिका, ध्यायति, जनं वन्दते भगवद्भावेन, मुहुः श्वसन् हरे जगत्पते नारायण इति वक्ति ;

११९ । यदैवं करोति तदा किं भवति तदाह तदेति । तदा पुमान् जनः मुक्तसमस्तबन्धनः तद्भावभावानुकृताशयाकृतिः तस्य भावः चेष्टादिः तस्य भावः भावना तेन अनुकृते आशयाकृती मनः शरीरे यस्य स—भगवद्भावभावनया शरीरं मनश्च तद्भावानुरूपं विशुद्धं सुप्रसन्नं भवतीति निर्गलितोऽर्थः—'विष्णुविषयेण भावेन विष्णोरिवास्य सुप्रसन्न चेतो वेशश्च तथा स्यात्'—इति कैवल्यदीपिका, निर्दग्धबीजानुशयः निर्दग्धं बीजम् अज्ञानम् अनुशयो वासना च यस्य सः । एवम् महीयसा भक्तिप्रयोगेण अधोक्षजं सर्व्वेन्द्रियातीतं जितेन्द्रियाणां प्रत्यक्षीभूतं वा भगवन्तं समेति प्राप्नोति ।

१२० । एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः ।
एकान्तभक्तिर्गोविन्दे यत् सर्व्वत्र तदीक्षणम् ॥
७।७।५५ ।

१२१ । सत्यं दया तपः शौचं तितिक्षेक्षा शमोदमः ।
अहिंसा ब्रह्मचर्य्यञ्च त्यागः स्वाध्याय आर्ज्जवम् ॥
१२२ । सन्तोषः समदृक्सेवा ग्राम्येहोपरमः शनैः ॥
नृणां विपर्य्ययेहेक्षा मौनमात्मविमर्शनम् ॥
१२३ । अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः ।
तेष्वात्मदेवताबुद्धिः सुतरां नृषु पाण्डव ॥
१२४ । श्रवणं कीर्त्तनं चास्य स्मरणं महतां गतेः ।
सेवेज्यावनतिर्दास्यं सख्यमात्मनिवेदनम् ॥
१२५ । नृणामयं परोधर्म्मः सर्व्वेषां समुदाहृतः ।
त्रिंशल्लक्षणवान् राजन् सर्व्वात्मा येन तुष्यति ॥
७।११।८—१२ ।

१२० । भक्त्या सर्व्वत्र भगवद्दर्शनं सिद्ध्यतीत्याह एतावानिति । अस्मिन् लोके एतावान् एव पुंसां परः स्वार्थः स्मृतः । कोऽसौ ? गोविन्दे मुक्तिदातरि एकान्तभक्तिः, यत् यस्मात् सर्व्वत्र तदीक्षणं तद्दर्शनं गोविन्ददृष्ट्या सम्मानन वा ।

१२१—१२५ । भगवत्सन्तोषसाधनं त्रिंशल्लक्षणं धर्म्ममाह सत्यमिति । सत्यं यथावद्भाषणम्, दया भूतानुकम्पा, तपः त्रिविधं पूर्व्वोक्तम्, शौचं शुद्धाचारः, तितिक्षा दुःखसहनम्, ईक्षा युक्तायुक्तविवेकः, शमः मनसः संयमः, दमः वाह्येन्द्रियाणां संयमः, अहिंसा क्रौर्य्यत्यागः, ब्रह्मचर्य्यं भोगसङ्कोचः, त्यागः दानम्, स्वाध्यायः यथो-

१२६ । यस्य नारायणोदेवो भगवान् हृद्गतः सदा ।
भक्त्या केवलयाऽज्ञानं धुनोति ध्वान्तमर्कवत् ॥

७।१३।२१ ।

चितजपः वेदान्तस्याध्ययनम्, आर्ज्जवम् ऋजुत्वम्, सन्तोषः दैवलब्धेनालंबुद्धिः, समदृक्सेवा रिपुमित्रोदासीनेषु तुल्यबुद्धीनां महतां सेवा, शनैः ग्राम्येहोपरमः—'ग्राम्येहा विषयार्थं चेष्टा'—कैवल्यदीपिका—ततः उपरमः निवृत्तिः, नृणां विपर्य्ययेहेक्षा विपर्य्ययेहाः निष्फलक्रियाः तासाम् ईक्षा ईक्षणं—'दुःखफलत्वावेक्षणं'—कैवल्यदीपिका, मौनं—वृथाकथानिवृत्तिः, आत्मविमर्शनं—आत्मनो देहभिन्नभावना व्यतिरिक्तानुसन्धानम्, अन्नाद्यादेः भूतेभ्यः यथार्हतः संविभागः—'अन्नाद्यं भक्ष्यभोज्यादि आदिशब्दात् फलमूलादेश्च भूतेभ्यः श्वकाकातिथिजलचरादिभ्यो गृहस्थाद्यैः विभागः यथार्हतः यस्य यत् संविभागं अर्हति तथा तस्य'—कैवल्यदीपिका, हे पाण्डव युधिष्ठिर, तेषु आत्मदेवताबुद्धिः तेषु भूतेषु आत्मेति देवतेति बुद्धिः, महतां गतेः अस्य श्रीकृष्णस्य चित्ताकर्षणस्य श्रवणं कीर्त्तनं स्मरणं सेवा—'चित्तानुवृत्तिः सा चास्य श्रुतिस्मृतिरूपाज्ञानुलङ्घनात्'—कैवल्यदीपिका, इज्या अर्च्चनम्, अवनतिः प्रणामः, दास्यम् किङ्करत्वम्, सख्यम्—

अहितात् प्रतिषेधश्च हितस्यैव प्रवर्त्तनम् ।
व्यसने चापरित्यागस्त्रिविधः सखिलक्षणम् ॥

इत्येतस्य सखिधर्म्मस्य भगवद्गतत्वेन भावनम्, 'अन्यान्यानि तु स्वगतानि' —कैवल्यदीपिका, आत्मसमर्पणं भगवति देहाद्यर्पणम् । सर्व्वेषां नृणाम् अयं त्रिंशल्लक्षणवान् परः धर्म्मः समुदाहृतः, हे राजन् युधिष्ठिर, येन धर्म्मेण—'साक्षाद्धर्म्मान्तरानुष्ठानाव्यवधानेन'—कैवल्यदीपिका—सर्व्वात्मा भगवान् तुष्यति ।

१२६ । भक्त्या ये भगवन्तं हृदि पश्यन्ति, ते तयैव भक्त्या स्वाज्ञानं

१२७ । तएव नियमाः साक्षात् तएव च यमोत्तमाः ।
तपोदानं व्रतं यज्ञो येन तुष्यत्यधोक्षजः ॥
८।१६।६१ ।

१२८ । यन्नाम श्रुतिमात्रेण पुमान् भवति निर्म्मलः ।
तस्य तीर्थपदः किं वा दासानामवशिष्यते ॥
६।५।१६ ।

१२९ । निवृत्ततर्षैरुपगीयमाना-
द्भवौषधाच्छ्रोत्रमनोभिरामात् ।
कउत्तमश्लोकगुणानुवादात्
पुमान् विरज्येत विना पशुघ्नात् ॥१०।१।४ ।

विधुन्वन्तीत्याह यस्येति । भगवान् नारायणः सर्व्वान्तर्यामी सदा यस्य हृद्गतः स केवलया शुद्धया भक्त्या—ध्वान्तम् अन्धकारम् अर्कवत् सूर्य्यवत्—अज्ञानं धुनोति अपसारयति ।

१२७ । भगवत्सन्तोषसाधना नियमाद्याः श्रेष्ठा इत्याह तएवेति । ते एव नियमाः उत्तमाः, ते एव च यमोत्तमाः, तत् एव तपः उत्तमम्, तदेव दानम् उत्तमम्, तदेव व्रतम् उत्तमम्, सएव यज्ञः उत्तमः, येन अधोक्षजः सर्व्वेन्द्रियातीतः जितेन्द्रियाणां प्रत्यक्षीभूतो वा भगवान् तुष्यति ।

१२८ । भगवद्दानुगत्येन सर्व्वसिद्धिरित्याह यन्नामेति । यन्नामश्रुतिमात्रेण यस्य भगवतः नामश्रवणमात्रेण पुमान् निर्म्मलः भवति तस्य तीर्थपदः दासानां किं वा अवशिष्यते, न किमपीत्यर्थः ।

१२९ । विनात्मघातिनं सर्व्वेषां भगवद्गुणकीर्त्तने रतिरवश्यम्भाविनीत्याह निवृत्तेति । निवृत्त तर्षैः गततृष्णैः शुकादिभिः मुक्त-

१३० । वाणी गुणानुकथने श्रवणौ कथायां
हस्तौ च कर्म्मसु मनस्तव पादयोर्नः ।
स्मृत्यां शिरस्तव निवासजगत्प्रणामे
दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम् ॥
१०।१०।३८ ।

१३१ । ज्ञाने प्रयासमुदपास्य नमन्तएव
जीवन्ति सन्मुखरितां भवदीयवार्त्ताम् ।
स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभि-
र्ये प्रायशोऽजितजितोऽप्यसि तैस्त्रिलोक्याम् ॥
१०।१४।३ ।

पुरुषैः उपगीयमानात्, भवौषधात् भवस्य संसारस्य औषधं यः तस्मात् मुमुक्षूणाम् उपायभूतात्, श्रोत्रमनोभिरामात् विषयिणां परम-विषयभूतात्, एवम्भूतात् उत्तमश्लोकगुणानुवादात् उत्तमश्लोकस्य भगवतः गुणानुकीर्त्तनात् पशुघ्नात् आत्मघातिनः विना कः पुमान् विरज्येत विरमेत्, न कोपीत्यर्थः ।

१३० । वागादीनां भक्त्युचितनियोगस्थानान्याह नलकूवरवाक्येन वाणीति । गुणानुकथने नः अस्माकं वाणी वाक्, कथायां श्रवणौ कर्णौ, कर्म्मसु च हस्तौ, तव पादयोः स्मृत्यां स्मरणे मनः, तव निवासजगत्-प्रणामे तव निवासभूतं यत् जगत् तस्य प्रणामे शिरः, भवत्तनूनां भवतः प्रकाशभूमीनां सतां साधूनां दर्शने दृष्टिः चक्षुः अस्तु । षड्वर्गोऽयं मुक्ताफले ।

१३१ । केन वा भगवान् भक्तवश्योभवति तदाह ज्ञान इति । ज्ञाने—'स्वरूपैश्वर्य्यमहिमविचारे' इति श्रीमत्सनातनः—प्रयासम् उपार्ज्जनोद्यम् उदपास्य ईषत् अपि अकृत्वा ये स्थाने स्थिताः अन्यत्र

१३२ । न नाकपृष्ठं न च सार्व्वभौमं
न पारमेष्ठ्यं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा
वाञ्छन्ति यत्पादरजः प्रपन्नाः ॥१०।१६।३७ ।

१३३ । न कामयेऽन्यं तव पादसेवना-
दकिञ्चनप्रार्थ्यतमाद् वरं विभो ।
आराध्य कस्त्वां ह्यपवर्गदं हरे
वृणीत आर्य्यो वरमात्मबन्धनम् ॥१०।५१।५७ ।

गमनक्लेशविरहिताः—'न तु तीर्थपर्य्यटनादिक्लेशान् कुर्व्वन्तः' इति श्रीमत्सनातनः, सन्मुखरितां सद्भिः मुखरितां स्वतएव नित्यं प्रकटितां—'सन्तः अनृतोक्तिसर्व्वेन्द्रियक्षोभपरिहाराद्यर्थं मौनशीला अपि मुखरिता मुखरीकृता यया ताम्'—इति श्रीमत्सनातनः, 'स्वमाधुर्य्येण मुखरिता' इति श्रीमद्विश्वनाथः, भवदीयवार्त्तां भवदीयलीलाकथां श्रुतिगतां सन्निधिमात्रेण स्वतएव श्रवणप्राप्तां तनुवाङ्मनोभिः नमन्तः सत्कुर्व्वन्तः जीवन्ति, हे अजित—'अप्राप्य स्वप्रकाशतयेन्द्रियाद्यगोचरत्वात्' इति श्रीमत्सनातनः, तैः त्रिलोक्याम् अजितोऽपि जितः प्राप्तः असि ।

१३२। भगवत्भक्तसन्निधौ स्वर्गादि निखिलं तुच्छमित्याह न नाकपृष्ठमिति। यत् पादरजः प्रपन्नाः यस्य तव पादरजः प्रपन्नाः प्राप्ताः न नाकपृष्ठं स्वर्गलोकं, न च सार्व्वभौमं सर्व्वाधिपत्यं, न पारमेष्ठ्यं ब्रह्मलोकं, न रसाधिपत्यं भूमिपतित्वं, न योगसिद्धीः अणिमाद्याः, न अपुनर्भवम् अपुनरावृत्तिं वा वाञ्छन्ति। तथा चैकादशे—

न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्व्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनान्यत् ॥ (११।१४।१४) इति ।

१३३। भगवंस्त्वां विना नान्यदभीष्टं विद्यते भक्तजनस्येत्याह मुचु-

१३४ । श्रवणात् कीर्त्तनात् ध्यानात् पूयन्तेऽन्तेवसायिनः ।
तव ब्रह्ममयस्येश किमुतेचाभिमर्शिनः ॥

१०।७०।४७ ।

१३५ । हृदिस्थोऽप्यतिदूरस्थः कर्म्मविच्छिन्नचेतसाम् ।
आत्मशक्तिभिरग्राह्योऽप्यन्त्युपेतगुणात्मनाम् ॥

१०।८६।४७ ।

१३६ । इति तव सूरयस्त्र्यधिपतेऽखिललोकमल-
क्षपणकथामृताब्धिमवगाह्य तपांसि जहुः ।

कुन्दवाक्येन न कामय इति । हे विभो, अकिञ्चनप्रार्थ्यतमात् अकिञ्चनाः निवृत्ताभिमानाः तैः प्रार्थ्यतमात् तव पादसेवनात् अन्यं वरं न कामये । हे हरे, अपवर्गदं मुक्तिदं—'अपवर्गो भक्तिः' इति श्रीमत्-सनातनः—त्वाम् आराध्य आत्मबन्धनम् आत्मनः बन्धकारणं वरं कः आर्य्यः विवेकी वृणीत ।

१३४ । श्रवणात् कीर्त्तनात् ध्यानादत्यधमा अपि शुद्धा भवन्ति किं पुनर्द्दर्शनात् स्पर्शनात् भगवत इत्याह श्रवणादिति । हे ईश, अन्तेवसायिनः चण्डालाः ब्रह्ममयस्य बृहद्गुणयुक्तस्य तव श्रवणात् कीर्त्तनात् ध्यानात् पूयन्ते पवित्रा भवन्ति ; तव ईचाभिमर्शिनः दर्शनस्पर्शनशालिनः किमुत ?

१३५ । सर्व्वेषां हृदिस्थोऽपि कथं भगवान् तैर्ग्रहीतुमशक्य इत्याह हृदिस्थ इति । कर्म्मविच्छिन्नचेतसां कर्म्मभिः विच्छिन्नं चेतः येषा तेषां सन्निधौ हृदिस्थः अपि अतिदूरस्थः आत्मशक्तिभिः अहमादिभिः अग्राह्यः । उपेतगुणात्मनां प्राप्तश्रवणकीर्त्तनादिसंस्कारः आत्मा अन्तःकरणं येषां तेषाम् अन्ति समीपे त्वमिति शेषः ।

१३६ । भगवत्कथासुधानिमग्नाः सर्व्वविधानि दुःखानि त्यजन्ति,

किमुत पुनः स्वधामविधुताशयकालगुणाः
परम भजन्ति ये पदमजस्रसुखानुभवम् ॥
१०।८७।१६ ।

१३७। दुरवगमात्मतत्त्वनिगमाय तवात्ततनो-
श्चरितमहामृताब्धिपरिवर्त्तपरिश्रमणाः ।
न परिलषन्ति केचिदपवर्गमपीश्वर ते
चरणसरोजहंसकुलसङ्गविसृष्टगृहाः ॥

किमु वक्तव्यं ये तत्स्वरूपानुभवकृतार्थास्ते दुःखातीता भवन्तीतीत्याह इतीति। हे त्र्यधिपते त्रिलोकाधिपते, सूरयः विवेकिनः अखिल-लोकमलक्षपणकथामृताब्धिं सकलजनवृजिननिरसनकीर्त्तिसुधासिन्धुम् अवगाह्य तपांसि दुःखानि जहुः त्यक्तवन्तः। किमुत पुनः ये स्वधाम-विधुताशयकालगुणाः स्वधाम्ना स्वरूपविस्फुरणेन विधुताः त्यक्ताः आशयगुणाः अन्तःकरणधर्म्माः रागादयः कालगुणाः जरादयश्च यैः ते, हे परम, तव अजस्रसुखानुभवम् अखण्डानन्दानुभवं पदं स्वरूपं भजन्ति सेवन्ते।

१३७। दुरधिगमतत्त्वशिक्षणाय कपिलादिष्वाविष्कृतस्वरूपस्य भग-वतश्चरितचिन्तनानुरता न तद्विनान्यदभिलषन्तीति भक्तिमहिमानमुद्घो-षयति दुरवगमेति। हे ईश्वर, दुरवगमात्मतत्त्वनिगमाय दुरवबोधं यत् आत्मतत्त्वं तस्य निगमाय ज्ञापनाय आत्ततनोः स्वीकृतकपिलादिदेहस्य तव चरितमहामृताब्धिपरिवर्त्तपरिश्रमणाः चरितम् एव महामृताब्धिः तस्मिन् परिवर्त्तः अवगाहः तेन परिश्रमणाः विवर्ज्जितश्रमाः गतश्रमाः केचित् अपवर्गं मुक्तिम् अपि न परिलषन्ति न इच्छन्ति। किन्तर्हि ते तव चरणसरोजहंसकुलसङ्गविसृष्टगृहाः चरणसरोजे हंसाः इव रम-माणाः ये भक्ताः तेषां कुलं तेन सङ्गः तेन विसृष्टाः गृहाः यैः ते

१३८ । त्वदनुपथं कुलायमिदमात्मसुहृत् प्रियव-
च्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च ।
न वत रमन्त्यहो असदुपासनयात्महनो
यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥

१०।८७।२१।२२ ।

१३९ । विजितहृषीकवायुभिरदान्तमनस्तुरगं
य इह यतन्ति यन्तुमतिलोलमुपायखिदः ।
व्यसनशतान्विताः समवहाय गुरोश्चरणं
वणिज इवाज सन्त्यकृतकर्णधारजलधौ ॥

१०।८७।३३ ।

तथाभूता भवन्ति । भक्तजनैः श्रवणकीर्त्तनादिसुखमनुभवन्तः प्रिय-परिजनानपि ते विस्मरन्ति इति भावः ।

१३८ । भगवद्भजनविमुखानां दुर्गतिमाह त्वदनुपथमिति । त्वद-नुपथं त्वदनुवर्त्ति इदं कुलायं शरीरम् आत्मसुहृत् आत्मनः सुहृत् चिरा-नुकूलं सत् प्रियवत् चरति, तथापि प्रिये प्रीत्यास्पदे आत्मनि आत्मनाम् आत्मनि हिते चिरकल्याणकाङ्क्षिणि उन्मुखे अनुकूले त्वयि असदुपास-नया असद्विषयसेवया देहाद्युपपालनेन आत्महनः प्रमादिनः जनाः अहो वत न रमन्ति । किमस्य फलं भवति ? योऽसौ देहः पूर्व्वमनु-कूल आसीत्, स एव भगवद्विमुखजनस्य परिभवाय कुशरीरत्वेन परि-णतः, अतः ते जनाः यदनुशयाः यस्याम् असदुपासनायाम् अनुशयो वासना येषां तथा भूताः कुशरीरभृतः प्रतिकूलशरीरधारिणः उरुभये संसारे भ्रमन्ति परिवर्त्तन्ते ।

१३९ । परमगुरोर्भगवतो निर्देशानुसरणोपेक्षायां किं भवति तदाह । हे अज, गुरोः तव चरणं समवहाय परित्यज्य विजित-

१४० । भुवि पुरुपुण्यतीर्थसदनान्यृषयो विमदा-
स्तउत भवत्पदाम्बुजहृदोऽघभिदङ्घ्रिजलाः ।
दधति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे
न पुनरुपासते पुरुषसारहरावसथान् ॥१०।८७।३५

हृषीकवायुभिः विजितानि प्राणायामादिभिः अवरुद्धानि हृषीकाणि इन्द्रियाणि वायवः प्राणाः च ये तैः—प्रथमार्थे तृतीया—तथाभूताः ये अतिलोलम् अतिचञ्चलम् अदान्तमनस्तुरगम् अदान्तम् केनाप्युपायेन अदमितं मनएव तुरगः तं यन्तुं नियन्तुं यतन्ति प्रयतन्ते ते उपाय-खिदः उपायेषु प्राणायामादिषु खिद्यन्ते क्लिश्यन्ति इति उपायखिदः सन्तः—जलधौ समुद्रे अकृतकर्णधाराः अस्वीकृतनाविकाः वणिजः इव—व्यसनशतान्विताः बहुव्यसनसमाकुलाः इह संसारे सन्ति तिष्ठति ।

१४० । सकृद्भगवच्चरणे मनो निदधतां संसारसुखं तुच्छं भवति, किमु वक्तव्यं भगवज्जनसङ्गेन निरहङ्काराणां भगवत्साक्षात्कारवतां तथा भवतीत्याह भुवीति । ये नित्यसुखे आत्मनि आत्मनाम् आत्मनि त्वयि सकृत् मनः दधति, ते पुनः पुरुषसारहरावसथान् पुरु-षाणां सारं विवेकक्षमाशान्तिप्रमुखं हरन्तीति सारहराः अवसथाः गृहाः तान् न उपासते न सेवन्ते ; उत किन्तर्हि भवत्पदाम्बुजहृदः भवतः पदाम्बुजं हृदि येषां ते, अतः 'भवद्विधा भागवतास्तीर्थीभूताः स्वयं विभोः' इति न्यायेन स्वयम् अघभिदङ्घ्रिजलाः अघभित् पाप-हारि अङ्घ्रिजलं येषां ते तथाभूताः सन्तः विमदाः विगताहङ्काराः ते ऋषयः भगवत्साक्षात्कारवन्तः पुरुपुण्यतीर्थसदनानि पुरु अधिकं भगवज्जनलक्षणं पुण्यं येषां तानि तीर्थानि गुरवः महान्तः इत्यर्थः तेषां सदनानि आश्रमान् सेवन्ते—विषयिजनसङ्गं परिहाय महतां सङ्गेना-श्रमवासिनो भवन्तीत्यर्थः ।

१४१ । यदि न समुद्धरन्ति यतयो हृदि कामजटा
दुरधिगमोऽसतां हृदिगतोऽस्मृतकण्ठमणिः ।
असुतृपयोगिनामुभयतोऽप्यसुखं भगव-
न्ननपगतान्तकादनधिरूढ़पदाद्भवतः ॥

१४२ । त्वदवगमी न वेत्ति भवदुत्थशुभाशुभयो-
र्गुणविगुणान्वयांस्तर्हि देहभृताञ्च गिरः ।
अनुयुगमन्वहं सगुणगीतपरम्परया
श्रवणभृतो यतस्त्वमपवर्गगतिर्मनुजैः ॥

१०।८७।३९।४० ।

१४१ । योगिलच्छद्मेनान्तर्विषयलालसावतामकृतार्थतामाह यदि नेति । हे भगवन्, यतयः निर्ज्जितबहिरिन्द्रियाः सन्न्यासिनः यदि हृदि कामजटाः कामस्य जटाः मूलानि वासनाः न समुद्धरन्ति न उन्मूलयन्ति, असताम् असाधूनां वासनाविकलानां तेषां हृदिगतः अपि अस्मृतकण्ठमणिः विस्मृतः यः कण्ठमणिः तत्तुल्यः त्वं दुरधिगमः दुष्प्रापः। असुतृपयोगिनाम् इन्द्रियतर्पणपराणां योगच्छद्मनाम् उभयतः अपि असुखम्, इह अमुत्र च दुःखमेव। कथं तदाह—इह अनपगतान्तकात् अनिवृत्तात् मृत्योः संसारात् असुखम्; परत्र अनधिरूढ़पदात् अनधिरूढ़म् अप्राप्तं पदं स्वरूपं यस्य तस्मात् भवतः असुखम् ।

१४२ । विपरीते भगवज्ज्ञानसम्पन्नानां तद्गुणकीर्त्तनपरायणानां कृतार्थतामाह त्वदवगमीति । त्वदवगमी तज्ज्ञानवान् भवदुत्थशुभाशुभयोः भवत् उद्भवत् उत्थम् उत्थितं च तयोः जायमानोत्थितयोः शुभाशुभयोः कल्याणाकल्याणयोः गुणविगुणान्वयान् गुणविगुणौ सुखदुःखे तयोः अन्वयान् सम्बन्धान् न वेत्ति न अनुसन्धत्ते—दैव आग-

१४३ । कायेन वाचा मनसेन्द्रियैर्व्वा
बुद्ध्यात्मना वानुसृतस्वभावात् ।
करोति यद्यत् सकलं परस्मै
नारायणायेति समर्पयेत्तत् ॥

१४४ । भयं द्वितीयाभिनिवेशत: स्या-
दीशादपेतस्य विपर्य्ययोऽस्मृति: ।
तन्माययातो बुध आभजेत्तं
भक्त्यैकयेशं गुरुदेवतात्मा ॥११।२।३६।३७ ।

च्छति तदेवाविशेषेण गृह्णाति कल्याणाकल्याणयो: सुखदु:खयो: भगवद्दर्शनानन्दाब्धौ निमग्नत्वात् ; तर्हि तदा देहभृतां च गिर: स्तुति-निन्दा: न वेत्ति न अनुसन्धत्ते । कथमेवं तस्य सुखदु:खादेरननुसन्धा-नम् ? यत: अनुयुगं प्रतियुगम् अन्वहं प्रतिनियतं मनुजै: गुणगीतपर-म्परया श्रवणभृत: श्रवणेन चेतसि धृत: स त्वम् अपवर्गगति: तेषाम् अपवर्गरूपा गति: भवसि । आरभ्यात् गुणवर्णितपरम्परया चेतसि धृतं त्वाम् ऋते नान्यस्मिन् तेषां चित्ताभिनिवेश:, अत: सुखदु:खादिकं सर्व्वं तत्सन्निधौ सममिति फलितार्थ: ।

१४३ । सर्व्वकर्म्मसमर्पणमाह कायेनेति । कायेन देहेन, वाचा वाक्येन, मनसा अन्त:करणेन, इन्द्रियै: चक्षुराद्यै:, बुद्ध्या निश्चयात्मक-वृत्त्या वा आत्मना अहंज्ञानेन, अनुसृतस्वभावात् अनुसृत: य: स्वभाव: तस्मात् स्वभावानुसारेण वा यत् यत् करोति सकलं तत् परस्मै नाराय-णाय सर्व्वाश्रयाय इति समर्पयेत् । एतत् सर्व्वं तस्मै निवेदयामीति समर्पणम् । कृत्वा समर्पणमिदं, न तु समर्पितस्य ।

१४४ । अभयलाभाय भगवन्तमेव भजेदित्याह भङ्ग्यन्तरेण भय-मिति । ईशादपेतस्य ईश्वरविमुखस्य तन्मायया ईश्वरस्य मायया जग-

१४५ । शृण्वन् सुभद्राणि रथाङ्गपाणे-
र्जन्मानि कर्म्माणि च यानि लोके ।
गीतानि नामानि तदर्थकानि
गायन् विलज्जो विचरेदसङ्गः ॥

१४६ । एवंव्रतः स्वप्रियनामकीर्त्त्या
जातानुरागो द्रुतचित्त उच्चैः ।
हसत्यथो रोदिति रौति गाय-
त्युन्मादवन्नृत्यति लोकवाह्यः ॥११।२।३९।४० ।

द्विधायिन्या शक्त्या अस्मृतिः स्मृतिभ्रंशः भगवत्स्वरूपविस्मृतिः तच्छक्ति-कृतवहिर्विषयेषु निबद्धचित्तत्वात् ; ततः विपर्य्ययः देहोऽस्मीति विपरीतबुद्धिः, ततः द्वितीयाभिनिवेशतः ईश्वरादन्यस्मिन् चित्तनिवेशात् भयं स्यात् भवेत् । अतः अतएव बुधः ज्ञानवान् गुरुदेवतात्मा गुरुः एव शास्ता एव देवता आत्मा च यस्य तथाभूतः सन् एकया अनन्यया भक्त्या तम् ईशम् आभजेत् ।

१४५ । कथं तमाभजेदित्याह शृण्वन्निति । रथाङ्गपाणिः तेजोराशिः सुभद्राणि सुमङ्गलानि लोके गीतानि प्रसिद्धानि यानि जन्मानि आविर्भवनानि कर्म्माणि सदुद्धरणानि, तदर्थकानि तानि जन्मानि कर्म्माणि च अर्थो येषां तानि नामानि शृण्वन् गायन् विलज्जः लज्जाशून्यः असङ्गः स्पृहाशून्यः विचरेत् ।

१४६ । श्रवणकीर्त्तनेन किं भवति तदाह एवंव्रत इति । एवंव्रतः एवंवृत्तः स स्वप्रियनामकीर्त्त्या स्वस्य प्रियस्य हरेः नामकीर्त्तनेन जातानुरागः जातप्रेमा द्रुतचित्तः श्लथहृदयः उच्चैः हसति दर्शनानन्दात्, अथ अनन्तरं रोदिति वियोगवशात्, रौति क्रोशति अत्यौत्सुक्यात्, गायति गुणान् कीर्त्तयति अतिहर्षात्, उन्मादवत् वाह्यज्ञानशून्यवत्

१४७। भक्तिः परेशानुभवो विरक्ति-
रन्यत्र चैष त्रिक एककालः ।
प्रपद्यमानस्य यथाश्नतः स्यु-
स्तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् ॥

१४८। इत्यच्युताङ्घ्रिं भजतोऽनुवृत्त्या
भक्तिर्विरक्तिर्भगवत्प्रबोधः ।
भवन्ति वै भागवतस्य राजं-
स्ततः परां शान्तिमुपैति साक्षात् ॥

११।२।४२।४३ ।

नृत्यति गभीरदर्शनजनितोत्कटानन्दवशात्, एवम् अयं लोकबाह्यः लोकातीतः गाढ़भावावेशात् ।

१४७। भगवदाश्रयणेन युगपदेवान्यत्र विरागः, तस्मिन् प्रीतिः, तत्साक्षात्कारश्च जायत इत्याह भक्तिरिति । प्रपद्यमानस्य हरिं भजतः पुंसः भक्तिः प्रेमलक्षणा, परेशानुभवः भगवत्साक्षात्कारः, अन्यत्र तद्व्यतिरिक्ते विषये विरक्तिः विरागः, एष त्रिकः एककालः भजनसमकाल एव स्यात्, यथा अश्नतः भुञ्जानस्य तुष्टिः सुखं, पुष्टिः परिपोषः, क्षुदपायः क्षुन्निवृत्तिः च अनुघासं प्रतिग्रासं स्युः ।

१४८। एवं भजनानुवर्त्तनेन जायमानः प्रेमादित्रिकः परमप्रेमादिषु परिणमते ततश्च परा शान्तिरित्येतदेवाह इतीति । इति एवम् अनुवृत्त्या अविच्छेदेन अच्युताङ्घ्रिं भजतः भागवतस्य भगवद्भजनशीलस्य भक्तिः परमप्रेमा, विरक्तिः परवैराग्यं, भगवत्प्रबोधः भगवति प्रबुद्धत्वं भगवज्ज्ञानेन परज्ञानवत्त्वं, हे राजन् विदेह, भवन्ति, ततः परमप्रेमादेरनन्तरं साक्षात् परां शान्तिम् उपैति प्राप्नोति सः । 'परां शान्तिम्'

१४९ । तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम् ।
शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम् ॥
१५० । तत्र भागवतान् धर्म्मान् शिक्षेद्गुर्व्वात्मदैवतः ।
अमाययानुवृत्त्या यैस्तुष्येदात्मात्मदो हरिः ॥
१५१ । सर्व्वतो मनसोऽसङ्गमादौ सङ्गञ्च साधुषु ।
दयां मैत्रीं प्रश्रयञ्च भूतेष्वद्धा यथोचितम् ॥

इत्यत्र परशब्दस्य प्रयोगात् तदुपयोगितया भक्त्यादिषु तच्छब्दस्य परामर्शः ।

१४९ । इहपरलोकयोर्नश्वरत्वं विजानतः साधनान्युच्यन्ते तस्मादिति । षट्त्रिंशद्वर्गोऽयं मुक्ताफले । तस्मात् लोकद्वयस्यापि सदोषत्वात् उत्तमं जिज्ञासुः ज्ञातुम् इच्छुः शाब्दे ब्रह्मणि निष्णातं तत्त्वज्ञं परे च ब्रह्मणि अपरोक्षानुभवेन निष्णातं निष्ठाप्राप्तं उपशमाश्रयम् उपशमस्य शान्तेः आश्रयम्—'अनेनैव शिष्यवात्सल्यादयोऽन्ये गुणा ज्ञेयाः'—कैवल्यदीपिका—गुरुं प्रपद्येत श्रयेत ।

१५० । तत्रेति । तत्र गुरुकुले गुर्व्वात्मदैवतः गुरुरेव आत्मा दैवतं च यस्य सः, अमायया निष्कपटया अनुवृत्त्या सेवया भागवतान् धर्म्मान् शिक्षेत्, यैः धर्म्मैः आत्मा तुष्येत् आत्मतुष्टिः स्यात्, आत्मनः उपासकस्य आत्मानं ददाति यः स आत्मदः—'आत्मा सर्व्वमूलस्वरूपत्वादसमोर्द्ध्वानन्दरूपः····· तस्यापि दाता भक्तसात्कर्त्ता' इति श्रीमज्जीवः—हरिः तुष्येत् ।

१५१ । सर्व्वतइति । असौ सर्व्वतः इहामुत्रतः भोगेषु असङ्गम् अनासक्तिम्, साधुषु सङ्गं सान्निध्यम् ; भूतेषु दयाम् अनुकम्पाम्, मैत्रीं मित्रभावापन्नताम्, प्रश्रयं विनयम्, यथोचितं—'यथाक्रमं दुःखिसुखिपुण्यवत्सु दयादीनि त्रीणि'—कैवल्यदीपिका—शिक्षेत् इत्यनेन सम्बध्यते, एवं सर्व्वत्र ।

१५२ । शौचं तपस्तितिक्षाञ्च मौनं स्वाध्यायमार्ज्जवम् ।
ब्रह्मचर्य्यमहिंसां च समत्वं द्वन्द्वसंज्ञयोः ॥
१५३ । सर्व्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् ।
विविक्तचीरवसनं सन्तोषं येन केनचित् ॥
१५४ । श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि ।
मनोवाक्कायदण्डञ्च सत्यं शमदमावपि ॥

१५२ । शौचमिति । शौचं—मृज्जलाद्यैर्वाह्यं रागद्वेषादिराहित्येनान्तरम् ; तपः कायिकं वाचिकं मानसमिति त्रिविधम्, तितिक्षां क्षमाम्, मौनं वृथावाचामनुच्चारणम्, स्वाध्यायं वेदाध्ययनम, आर्ज्जवं स्वच्छतां सारल्यम्, ब्रह्मचर्य्यं भोगसङ्कोचम्, अहिंसां भूतेष्वद्रोहम्, द्वन्द्वसंज्ञयोः शीतोष्णसुखदुःखादिरूपयोः समत्वम् तुल्यबुद्धित्वम् हर्षविषादराहित्यम्—शिक्षेत् ।

१५३ । सर्व्वत्रेति । सर्व्वत्र सर्व्वभूतेषु आत्मेश्वरान्वीक्षां सच्चिदानन्दरूपेण ईश्वरान्वीक्षाम्—'अनुवृत्त्या दर्शनं'—कैवल्यदीपिका, कैवल्यम् एकान्तशीलत्वम्, अनिकेततां 'गृहाद्यभिमानराहित्यं'—कैवल्यदीपिका, विविक्तचीरवसनं विजनपतितानां वस्त्रखण्डानां शुद्धानां वा वल्कलानां परिधानम्—'पूतवस्त्रखण्डपरिधानं'—कैवल्यदीपिका, येन केनचित् यदृच्छालब्धेन सन्तोषम् अलम्बुद्धिम्—शिक्षेत् ।

१५४ । श्रद्धामिति । भागवते भगवत्प्रतिपादके शास्त्रे श्रद्धाम्, अन्यत्र अन्यप्रतिपादके च अनिन्दाम्, मनोवाक्कायदण्डं च मनसः दुःसङ्कल्पः, वाचां पारुष्यम्, कायस्य चाञ्चल्यं दण्डः त्यागः—दुःसङ्कल्पादित्यागम् ;—मनोवाक्कर्म्मदण्डमिति पाठे कर्म्मणो दण्डम् अनीहया, सत्यं यथार्थभाषणम्, शमदमौ अन्तःकरणवाह्येन्द्रियनिग्रहौ—शिक्षेत् ।

१५५ । श्रवणं कीर्त्तनं ध्यानं हरेरद्भुतकर्म्मणः ।
जन्मकर्म्मगुणानाञ्च तदर्थेऽखिलचेष्टितम् ॥

१५६ । इष्टं दत्तं तपो जप्तं वृत्तं यच्चात्मनः प्रियम् ।
दारान् सुतान् गृहान् प्राणान् परस्मै च निवेदनम् ॥

१५७ । एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृदम् ।
परिचर्य्यां चोभयत्र महत्सु नृषु साधुषु ॥

१५८ । परस्परानुकथनं पावनं भगवद्यशः ।
मिथोरतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः ॥

१५५ । श्रवणमिति । अद्भुतकर्म्मणः हरेः जन्मकर्म्मगुणानाञ्च श्रवणं, कीर्त्तनं, ध्यानं, तदर्थे हर्य्यर्थे तदुद्देशेन अखिलचेष्टितं सर्व्वं कर्म्म —शिक्षेत् । 'काम्यकर्म्माधिकारविषयमिदं प्रकरणमित्यापाततोऽश्रद्धामाशङ्क्य श्रद्धाद्वारभूतानाह सर्व्वत्र इत्यादिना । ततः शुद्धान्तःकरणतया जातश्रद्धांस्तान् प्रति साक्षाद्भक्तिरूपानाह श्रवणमित्यादिना' —इति श्रीमज्जीवः ।

१५६ । तदर्थे सर्व्वार्थचेष्टां विशदयति इष्टमिति । इष्टं यागम्, दत्तं दानम्, तपः कायिकादिव्रतम्, जप्तं जपं, वृत्तं सदाचारम्, यत् च आत्मनः प्रियम्, दारान् सुतान् गृहान् प्राणान् परस्मै परमात्मनि निवेदनं तत्सेवकतया समर्पणं यत् तत् शिक्षेत् ।

१५७ । एवमिति । एवं सर्व्वसमर्पणभावेन कृष्णात्मनाथेषु कृष्णः चित्ताकर्षकः एव आत्मा नाथः च येषां तेषु मनुष्येषु च सौहृद्यम् अनिमित्तबन्धुत्वम्, महत्सु साधुषु नृषु साधारणमनुष्येषु उभयत्र परिचर्य्यां —परिचर्य्याविषये दृष्टिवैषम्यविरहितत्वमिति फलितार्थः—शिक्षेत् ।

१५८ । परस्परेति । पावनं पवित्रकरं भगवद्यशः भगवतोयशः यस्मिन् तत् परस्परानुकथनं—'अनु अनुवृत्त्या अविच्छेदेन कथनं'—

१५९। स्मरन्तः स्मारयन्तश्च मिथोऽघौघहरं हरिम्।
भक्त्या संजातया भक्त्या बिभ्रत्युत्पुलकां तनुम्॥

१६०। क्वचिद्रुदन्त्यच्युतचिन्तया क्वचि-
द्धसन्ति नन्दन्ति वदन्त्यलौकिकाः।
नृत्यन्ति गायन्त्यनुशीलयन्त्यजं
भवन्ति तूष्णीं परमेत्य निर्वृताः॥

१६१। इति भागवतान् धर्म्मान् शिक्षन् भक्त्या तदुत्थया।
नारायणपरो मायामञ्जस्तरति दुस्तराम्॥

११।३।२१—३३।

कैवल्यदीपिका। तत्र परस्परभगवद्यशोऽनुकथने किं भवति? मिथः रतिः स्पर्द्धादिपरित्यागेन रमणम्, मिथः तुष्टिः सुखम्, मिथः आत्मनः निवृत्तिः समस्तदुःखापगमः—'रतिर्भगवति, तुष्टिर्निवृत्तिरिति द्वयमात्मनः; एतत् त्रयं परस्परानुकथनादेव स्यात्, नैकाकितयेति वक्तुं मिथःशब्दत्रयं'—कैवल्यदीपिका।

१५९। एवं वर्त्तमानानां परमानन्दप्राप्तिमाह स्मरन्त इति। अघौघहनं पापसमूहविनाशनं हरिं स्वयं स्मरन्तः, अन्येषां स्मारयन्तः भक्त्या साधनभक्त्या संजातया भक्त्या प्रेमलक्षणया उत्पुलकां रोमाञ्चितां तनुं बिभ्रति धारयन्ति।

१६०। प्रेमलक्षणाया भक्तेरनुभावानाह क्वचिदिति। अच्युतचिन्तया भगवद्भावनया क्वचित् रुदन्ति, क्वचित् हसन्ति, नन्दन्ति, अलौकिकाः कथाः वदन्ति, नृत्यन्ति, अजं भगवन्तम् अनुशीलयन्ति तल्लीलाम् आलोचयन्ति, एवं परं परमेश्वरम् एतत्र प्राप्य निर्वृताः सन्तः तूष्णीं भवन्ति मौनाः तिष्ठन्ति।

१६१। उपसंहरति इतीति। इति नारायणपरः सर्व्वाश्रयभग-

१६२ । देवर्षिभूताप्तनृणां पितॄणां
न किङ्करो नायमृणी च राजन् ।
सर्व्वात्मना यः शरणं शरण्यं
गतो मुकुन्दं परिहृत्य कर्त्तम् ॥

१६३ । स्वपादमूलं भजतः प्रियस्य
त्यक्तान्यभावस्य हरिः परेशः ।
विकर्म्म यच्चोत्पतितं कथञ्चित्
धुनोति सर्व्वं हृदि सन्निविष्टः ॥११।५।४१।४ ।

वत्परायणः जनः भागवतान् धर्म्मान् शिक्षन् तदुत्थया भागवतधर्म्मोत्पन्नया भक्त्या अञ्जः तत्त्वतः दुस्तरां मायां ज्ञानावरिकां तरति ।

१६२ । भगवद्भक्तानां न जात्वन्यदेवताश्रवणाद्यैर्भक्तेर्विघातः समुचितः । 'यथा तरोर्मूलनिषेचनेन' इत्यादिन्यायात् भगवद्भजनेनैव सर्व्वेषां तृप्तिरतोवेदादिविहितकर्म्माकरणेन न तस्य कापि क्षतिरित्याह देवर्षीति । कर्त्तं कृत्यं भेदं वा परिहृत्य यः सर्व्वात्मना सर्व्वभावेन—'सर्व्वभूतेषु भगद्भावदर्शनेन'—कैवल्यदीपिका—शरण्य' शरणागतवत्सलं मुकुन्दं मुक्तिदातारं शरणं गतः स देवर्षिभूताप्तनृणां देवानाम् ऋषीणां भूतानाम्, आप्तानां पोष्याणाम्—'आप्तनृणाम्—अवसरे प्राप्तानां अतिथीनां'—कैवल्यदीपिका—नृणां पुंसां, पितॄणां न अयं किङ्करः दासः, 'वैश्वदेव-ब्रह्मयज्ञ--भूतबल्यऽतिथिपूजा--नित्यश्राद्धाख्यपञ्चमहायज्ञकरणेन देवादीनां नायमधीनः'—कैवल्यदीपिका—न च ऋणी अकरणे ।

१६३ । पूर्व्वेण विहितकर्म्मनिवृत्तिमुक्तास्मिन् निषेधनिमित्तप्रायश्चित्तनिवृत्तिमाह स्वपादेति । त्यक्तान्यभावस्य त्यक्तः अन्यस्मिन् देहादौ देवतान्तरे वा भावो येन—'अन्यभावः भेदबुद्धिः'—कैवल्यदीपिका—अतएव विकर्म्मणि प्रवृत्तिरहितस्य, प्रियस्य स्वपादमूलं

१६४। शुद्धिर्नृणां न तु तथेड्य दुराशयानां
विद्याश्रुताध्ययनदानतपःक्रियाभिः।
सत्त्वात्मनामृषभ ते यशसि प्रवृद्ध-
सच्छ्रद्धया श्रवणसंभृतया यथा स्यात्॥११।६।९

भजतः स्वस्य पादमूलं भजतः जनस्य कथञ्चित् प्रमादात् यत् च विकर्म्म पापम् उत्पतितम् अकस्मात् घटितं तत् सर्व्वं हृदि सन्निविष्टः परेशः अतएव अन्यतोभयनिवर्त्तकः हरिः धुनोति अपाकरोति। "श्रुतिस्मृती ममैवाज्ञे" इति भगवद्वचनात् स्वाज्ञाभङ्गजनितं तत् पापं कथं स स्वयमपाकरोतीति संशयस्य निरसनं कृतं व्याख्यातृभिः 'हृदिसन्निविष्टः' इति विशेषणबलेन वस्तुसामर्थ्यमुद्भाव्य। वस्तुतस्तु विकर्म्मसंघटनमात्रादेव भवति तस्य अहो किं मया कृतमिति सन्तापगर्भचैतन्योदयो नित्यसन्निहितत्वाद्भगवतः, तेन च सद्यः पापनिष्कृतिः। स्वाज्ञेत्तेन तस्य वैमुख्यवशात् दूरतरसम्बन्धः, न खलु तत्क्षणादेव भवेज्जाग्रदवस्था सन्तापश्च। अतो न भगवान् स्वनियममतिक्रम्य तस्य पापमपनुदतीति सर्व्वं समञ्जसम्। अतएवाह—

यर्ह्यब्जनाभचरणैषणयोरुभक्त्या चेतो मलानि विधमेत् गुणकर्म्मजानि।
तस्मिन् विशुद्ध उपलभ्यत आत्मतत्त्वं साक्षाद्यथाऽमलदृशोः सवितृप्रकाशः॥ (११।३।४०)

इत्यात्मज्ञानानिवृत्तिवशात्तत्क्षणाच्चैतन्योदय इति तत्त्वम्।

१६४। भगवद्भजनेन यथा शुद्धिर्भवति न तथा विद्यादिभिरतएव तन्निरपेक्षत्वं भजनसाधनस्येत्याह शुद्धिरिति। हे ईड्य स्तुत्य, हे ऋषभ श्रेष्ठ,—'सात्त्विकश्रेष्ठ'—कैवल्यदीपिका, दुराशयानां संसाररागिणां नृणां मानवानां विद्याश्रुताध्ययनदानतपःक्रियाभिः विद्या वैश्वानराद्युपासनं, श्रुतं शास्त्रम्, अध्ययनं वेदाक्षरग्रहणम्, दानं हिरण्यादेः पात्रेऽर्पणम्, तपः पूर्व्वोक्तं त्रिविधं, जप इति मुक्ताफलस्मृतपाठः मन्त्रावृत्तिः, क्रिया अग्निहोत्रादिकर्म्म, एतैः न तु तथा शुद्धिः, यथा

१६५ । यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः ।
नश्वरं गृह्यमाणञ्च विद्धि माया मनोमयम् ॥

१६६ । पुंसोऽयुक्तस्य नानार्थो भ्रमः स गुणदोषभाक् ।
कर्म्माकर्म्मविकर्म्मेति गुणदोषधियो भिदा ॥

१६७ । तस्माद्युक्तेन्द्रियग्रामो युक्तचित्त इदं जगत् ।
आत्मनीक्षस्व विततमात्मानं मय्यधीश्वरे ॥

सत्त्वात्मनां सतां ते तव यशसि श्रवणसंभृतया श्रवणेन परिपुष्टया प्रवृद्ध-सच्छ्रद्धया प्रवृद्धया सत्या श्रद्धया शुद्धिः स्यात् ।

१६५ । तत्त्वज्ञानोदये विपश्चिद्वृत्तिरिति वक्तुमुपक्रमते यदिद-मिति । मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः इन्द्रियैः गृह्यमाणं यत् इदं तत् मनोमयं मनोविलसितम्, अतएव माया अविद्या—'जागरे मायाप्रधानं स्वप्ने मनःप्रधानम्' इति श्रीमज्जीवः—इति विद्धि जानीहि । कथं मायेति ? ज्ञानोदयेऽन्यथा प्रतीयमानं नश्वरं विनाश-शीलम् ।

१६६ । कथम् मनोमयमित्याह पुंस इति । अयुक्तस्य विक्षिप्त-मनसः पुंसः जनस्य भ्रमः नानार्थः ब्रह्मसत्तातिरिक्तः बहुविधः अर्थः यत्र तादृशः । स भ्रम एव गुणदोषभाक् गुणदोषबुद्धिहेतुः, अतएव कर्म्म विहितम्, अकर्म्म तल्लोपः, विकर्म्म निषिद्धम् इति गुणदोषधियः गुणदोषबुद्धेः भिदा भेदः । ब्रह्मप्रेरणया क्रियमाणे कर्म्मणि न तथा भेदः पापासम्भवादित्याशयः ।

१६७ । ब्रह्मातिरिक्तबहुविधार्थदर्शनं चेत् भ्रमकारणं, कुत्र कथ-मिदं दृश्यमानं जगदीक्षणीयं तत्राह तस्मादिति । तस्मात् भ्रमनिर-सनहेतोः युक्तेन्द्रियग्रामः संयतेन्द्रियसमूहः, युक्तचित्तः संयतमना इदं विषयरूपं जगत् आत्मनि विषयिणि विततं व्याप्तं तत्सन्निधौ प्रकाशित-

१६८। ज्ञानविज्ञानसंयुक्त आत्मभूतः शरीरिणाम् ।
आत्मानुभवतुष्टात्मा नान्तरायैर्विहन्यसे ॥

१६९। दोषबुद्ध्योभयातीतो निषेधान्न निवर्त्तते ।
गुणबुद्ध्या च विहितं न करोति यथार्भकः ॥

१७०। सर्व्वभूतसुहृच्छान्तो ज्ञानविज्ञाननिश्चयः ।
पश्यन् मदात्मकं विश्वं न विपद्येत वै पुनः ॥

११।७।७—१२।

मिति यावत् ईक्षस्व पश्य। न खलु निखिलविश्वस्य समावेशः परिच्छिन्ने आत्मनि सम्भवति अतआह—अधीश्वरे स्वाधिष्ठाने मयि सर्व्वान्तर्यामिणि आत्मानं परां प्रकृतिम् ईक्षस्व ।

१६८। एवं दर्शने किं फलं तत्राह ज्ञानेति। ज्ञानविज्ञानसंयुक्तः ज्ञानं परोक्षं विज्ञानम् अपरोक्षं ताभ्यां सम्यक् युक्तः अतएव आत्मानुभवतुष्टात्मा आत्मा आत्मनाम् आत्मा—'ब्रह्मे'ति श्रीमज्जीवः—तस्य अनुभवेन साक्षाद्दर्शनेन तुष्टः परितृप्तः आत्मा चित्तं यस्य तादृशः स शरीरिणां देहिमात्राणां देवादीनाम् एकात्मत्वात् आत्मभूतः, अतः अन्तरायैः न विहन्यसे न उपद्रुतो भविष्यसि त्वम् उद्धव इति शेषः ।

१६९। बालवदन्तरात्मप्रेरणानुसरणपरायणत्वात् स्वभावत एव निषेधात् निवर्त्तते विहितञ्च करोति न पुनर्दोषगुणबुद्ध्येत्याह दोषबुद्ध्येति। यथा अर्भकः शिशुः तथा उभयातीतः गुणदोषबुद्ध्यतीतः स दोषबुद्ध्या निषेधात् न निवर्त्तते, गुणबुद्ध्या विहितं न करोति ।

१७०। किमिदं तत्त्वज्ञानं येन विपन्निवृत्तिस्तदाह सर्व्वभूतेति। सर्व्वभूतसुहृत् सर्व्वेषां भूतानाम् अहेतुकोपकारी, शान्तः चाञ्चल्यादिविरहितः, ज्ञानविज्ञाननिश्चयः ज्ञानेन परोक्षेण विज्ञानेन अपरोक्षेण च निश्चयः संशयरहितः विश्वं जगत् मदात्मकं मत्स्वरूपकं मत्सत्तया

१७१ । आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः ।
यत् प्रत्यक्षानुमानाभ्यां श्रेयोऽसावनुविन्दते ॥
११।७।२० ।

१७२ । तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् ।
प्रवृत्तञ्च निवृत्तञ्च श्रोतव्यं श्रुतमेव च ॥

१७३ । मामेकमेव शरणमात्मानं सर्व्वदेहिनाम् ।
याहि सर्व्वात्मभावेन मया स्या ह्यकुतोऽभयः ॥
११।१२।१४।१५ ।

सत्तायुक्तं मच्छक्तिविलासं—अतएवाह प्रज्ञावान् श्रीमच्छङ्करः—'ब्रह्मस्वभावः प्रपञ्चः' 'कारणस्यात्मभूता शक्तिः शक्तेश्चात्मभूतं कार्य्यं' इति—पश्यन् न पुनः विपद्येत न विपदापन्नो भवति। स्वस्वमनोनुरूपं भोगाद्यर्थं जगद्ग्रहणमविद्याविजृम्भितम्, विद्योदये त्वन्यथाप्रतीयमानत्वात्। तत्र यदा भगवच्छक्तिवैचित्र्यदर्शनं भवति, तस्य तदा यथायथं ग्रहणञ्चेति तत्त्वम्। 'मनसैव विश्वं सृजति' (६।२) इति त्वन्यदेव।

१७१। भगवच्छक्तिविलासत्वेन जगद्ग्रहणं तत्त्वज्ञानमित्युक्त्वा कुतः पुनस्तल्लभते कोवाऽस्मिन् गुरुरित्याह आत्मन इति। आत्मनः शरीरस्य पश्वादेरपि विशेषतः पुरुषस्य आत्मा एव हिताहितज्ञाने गुरुः। कथं विशेषतः मनुष्यस्येत्युक्तं तत्राह, यत् यस्मात् असौ मनुष्यः आत्मप्रेरणानुगतः प्रत्यक्षानुमानाभ्यां प्रत्यक्षेण साक्षाद्दर्शनेन अनुमानेन च श्रेयः तत्त्वज्ञानम् अनुविन्दते विचारानन्तरं लभते।

१७२।१७३। कोऽयमात्मा योऽसौ गुरुः, बाह्यं सर्व्वं परिहाय यस्यानुसरणे श्रेयोलाभस्तदाह द्वाभ्यां तस्मादिति मामिति। तस्मात् सत्सङ्गवशादज्ञाना अपि ब्रह्मस्वरूपमापुरिति कारणात्, हे उद्धव,

१७४ । विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते ।
मामनुस्मरतश्चित्तं मय्येव प्रविलीयते ॥११।१४।२७

१७५ । जितेन्द्रियस्य दान्तस्य जितश्वासात्मनो मुनेः ।
मद्धारणां धारयतः का सा सिद्धिः सुदुर्ल्लभा ॥

१७६ । अन्तरायान् वदन्त्येता युञ्जतो योगमुत्तमम् ।
मया सम्पद्यमानस्य कालक्षपणहेतवः ॥

११।१५।३२।३३ ।

चोदनां श्रुतिं, प्रतिचोदनां स्मृतिं, तत्प्रयोजितं निषेधं विधिं वा प्रवृत्तं क्रियाशालित्वं निवृत्तं निष्क्रियत्वं च, श्रोतव्यं श्रवणीयविषयं, श्रुतं श्रुतविषयं च उत्सृज्य परिहाय माम् एकम् अद्वितीयं सर्व्वदेहिनाम् आत्मानं सर्व्वान्तर्यामिणं सर्व्वात्मभावेन शरणं याहि प्राप्नुहि । मया हि अकुतोभयः स्याः भव । 'सर्व्वदेहिनां' 'सर्व्वात्मभावेन' इति पदद्वयेन सर्व्वतोऽस्य भगवत्प्रेरणाप्राप्तिर्व्यज्यते । श्रुत्यादिपरिहारस्तु साक्षाद्भगवत्प्रेरणाप्राप्तिविघ्नापनोदनाय ।

१७४ । कथमन्यत्सर्व्वं परिहाय भगवच्छरणमुपादिशत् तत्कारणमाह विषयानिति । विषयान् ध्यायतः जनस्य विषयेषु चित्तं विषज्जते बद्धं भवति, न ततो बहिर्गच्छत् भगवति निमङ्क्तुं समर्थं भवति । मां सर्व्वान्तर्यामिणम् अनुस्मरतः स्मरणविषयं कुर्व्वतः जनस्य मयि सर्व्वान्तर्यामिणि एव चित्तं प्रविलीयते निमग्नं भवति । ततो जीवस्तस्मिन्नभिन्नभावेन तिष्ठति, सर्व्वान्तर्यामी पुनस्तं प्रेरयति ।

१७५।१७६ । तं परमात्मानमृते योगसिद्धीर्नाकाङ्क्षेत् तासामभिमानवर्द्धिकानां जीवपरयोरैक्यविरोधित्वात् । तदेवाह द्वाभ्यां जितेन्द्रियस्येति अन्तरायानिति । जितेन्द्रियस्य जितानि इन्द्रियाणि येन तस्य, दान्तस्य यतवाह्यकरणस्य, जितश्वासात्मनः जितः श्वासः आत्मा च

१७७ । यो वै वाङ्मनसी सम्यगसंयच्छन् धिया यतिः ।
तस्य व्रतं तपोज्ञानं स्रवत्यामघटाम्बुवत् ॥

१७८ । तस्मान्मनोवचःप्राणान् नियच्छेन्मत्परायणः ।
मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते ॥
११।१६।४३।४४ ।

१७९ । यो विद्याश्रुतसम्पन्न आत्मवान्नानुमानिकः ।
मायामात्रमिदं ज्ञात्वा ज्ञानञ्च मयि संन्यसेत् ॥
११।१९।१ ।

येन तस्य मुनेः मननशीलस्य मद्धारणां मयि सर्व्वान्तर्यामिणि धारणां चित्ताभिनिवेशं धारयतः कुर्व्वतः का सिद्धिः सुदुर्लभा न कापीत्यर्थः । एवमपि उत्तमं जीवगतमात्मयोगरूपं योगं युञ्जतः अभ्यसतः एताः सिद्धीः अन्तरायान् विघ्नान् वदन्ति । कथम् ? मया सर्व्वान्तर्यामिणा सम्पाद्यमानस्य योगं युञ्जतः कालक्षपणहेतवः वृथासमयक्षेपकारणानि । श्वासजयस्तु चित्तचाञ्चल्यनिवृत्तौ स्वतएव भवतीति ज्ञेयम् ।

१७७।१७८ । असंयतस्य व्रतादिकं सर्व्वं नश्यति, भगवत्परायणतायां पुनः सहजेनैव संयम उपतिष्ठते, तत आह य इति, तस्मादिति । यः यतिः यत्नपरायणः धिया भगवत्प्रवणबुद्ध्या वाङ्मनसी सम्यक् असंयच्छन् भवति न संयच्छति, आमघटाम्बुवत् अनग्निदग्धघटस्थजलवत् तस्य व्रतं तपः ज्ञानं स्रवति । तस्मात् ततएव मत्परायणः सर्व्वान्तर्यामिपरायणः सन् मद्भक्तियुक्तया मयि सर्व्वान्तर्यामिणि भक्तिसमन्वितया बुद्ध्या धिया मनः वचः प्राणान् नियच्छेत्, ततः परिसमाप्यते कृतकृत्यो भवतीत्यर्थः ।

१७९ । अनर्पितज्ञानस्याभिमानवर्द्धकत्वाद् भगवति तस्यार्पणमाह य इति । विद्याश्रुतसम्पन्नः विद्या अनुभवः तत्पर्य्यन्तेन श्रुतेन सम्पन्नः

१८०। तपस्तीर्थं जपोदानं पवित्राणीतराणि च।
नालं कुर्व्वन्ति तां सिद्धिं या ज्ञानकलया कृता॥
१८१। तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव।
ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावतः॥
११।१९।४।५।

१८२। तापत्रयेणाभिहतस्य घोरे
सन्तप्यमानस्य भवाध्वनीश।
पश्यामि नान्यच्छरणं तवाङ्घ्रि-
द्वन्द्वातपत्रादमृताभिवर्षात्॥११।१९।९।

अतएव आत्मवान् प्राप्तात्मतत्त्वः नानुमाणिकः केवलपरोक्षज्ञानवान् न भवति ईदृशः यः स इदं जगत् मायामात्रं स्वाज्ञानविजृम्भितम् इति ज्ञात्वा ज्ञानं च तत्साधनं मयि सर्व्वान्तर्यामिणि संन्यसेत्। अयमेव विद्वत्सन्यासो नाम।

१८०।१८१। अभिमानवर्ज्जितभगवदर्पितज्ञानेन किं भवति तदाह तप इति तस्मादिति। ज्ञानकलया ज्ञानलेशेन या सिद्धिः कृता तां सिद्धिं—'भक्तिरूपां ; शुद्धिमिति पाठे भक्तौ योग्यताम्' इति श्रीमज्जीवः—तपः, तीर्थं, जपः, दानम्, इतराणि पवित्राणि पवित्रता-साधनानि न अलम् अत्यर्थं कुर्व्वन्ति। तस्मात् ततः ज्ञानेन सहितं तत्पर्य्यन्तं यथाभवति तथा स्वात्मानं जीवस्वरूपं ज्ञात्वा ज्ञानविज्ञान-सम्पन्नः मां सर्व्वान्तर्यामिणं भक्तिभावतः भज।

१८२। भगवच्चरणमेव शरणमित्याह तापत्रयेणेति। घोरे भीषणे भवाध्वनि संसारमार्गे तापत्रयेण अध्यात्मादिना अभिहतस्य सन्तप्य-मानस्य जनस्य अमृताभिवर्षात् तव चरणद्वन्द्वातपत्रात् अन्यत् शरणं न पश्यामि।

२८३। श्रद्धाऽमृतकथायां मे शश्वन्मदनुकीर्त्तनम्।
परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम॥
१८४। आदरः परिचर्य्यायां सर्व्वाङ्गैरभिवन्दनम्।
मद्भक्तपूजाभ्यधिका सर्व्वभूतेषु मन्मतिः॥
१८५। मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम्।
मय्यर्पणञ्च मनसः सर्व्वकामविवर्ज्जनम्॥
१८६। मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च।
इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः॥
१८७। एवं धर्म्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम्।
मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते॥

११।१९।२०—२४।

१८३—१८७। भक्तेः कारणमाह श्रद्धेति पञ्चकम्। शश्वदिति सर्व्वत्रानुषज्यते। मम सर्व्वान्तर्यामिणः अमृतकथायां श्रद्धा श्रवणादरः, मदनुकीर्त्तनं श्रवणानन्तरं मत्कथाव्याख्यानम्—'नामोच्चारणं'—कैवल्यदीपिका, पूजायां च परिनिष्ठा, स्तुतिभिः मम सर्व्वान्तर्यामिणः स्तवनम्, परिचर्य्यायां सेवायाम् आदरः, सर्व्वाङ्गैः अभिवादनम्—'अष्टभिरङ्गैः तथाच,

दोर्भ्यां पद्भ्याञ्च जानुभ्यामुरसा शिरसा दृशा।
मनसा वचसा चेति प्रणामोऽष्टाङ्ग ईरितः॥'

कैवल्यदीपिका, मद्भक्तपूजा मम सर्व्वान्तर्यामिणः भक्तानां पूजा समादरः अभ्यधिका—'मत्पूजातोऽपि तत्र मम सन्तोषविशेषात्' इति—श्रीमज्जीवः; सर्व्वभूतेषु मन्मतिः मच्चिन्तनं मत्स्वरूपावलोकनम्—'ममैव मतिः तत्र तत्र स्फुरणम्'—श्रीमज्जीवः; मदर्थेषु मद्विषयेषु अङ्गचेष्टा लौकिकी क्रिया; वचसा लौकिकेनापि मद्गुणेरणं मद्गुणकथनम्—

१८८ । केचिद्देहमिमं धीराः सुकल्पं वयसि स्थिरम् ।
विधाय विविधोपायैरथ युञ्जन्ति सिद्धये ॥

१८९ । न हि तत् कुशलादृत्यं तदायासो ह्यपार्थकः ।
अन्तवत्त्वाच्छरीरस्य फलस्येव वनस्पतेः ॥

१९० । योगं निषेवतो नित्यं कायश्चेत् कल्पतामियात् ।
तच्छ्रद्दध्यान्न मतिमान् योगमुत्सृज्य मत्परः ॥

१९१ । योगचर्य्यामिमां योगी विचरन् मदपाश्रयः ।
नान्तरायैर्विहन्येत निस्पृहः स्वसुखानुभूः ॥

११।२८।४१—४४ ।

'उद्धारणं'—कैवल्यदीपिका ; मयि मनसः अर्पणम् ; सर्व्वकामविव-र्ज्जनं सर्व्वविधस्याभिलाषस्य त्यागः ; मदर्थे मद्भजनार्थं भोगस्य तत्-साधनस्य चन्दनादेः—'भोगोविषयार्ज्जनम्'—कैवल्यदीपिका—त्यागः ; सुखस्य पुत्रोपलालनादेः—'सुखम् उपभोगः'—कैवल्यदीपिका—त्यागः ; अर्थपरित्यागः भजनविरोधिनः अर्थस्य परित्यागः ; इष्टं दत्तं हुतं जप्तं व्रतं तपः यत् तत् मदर्थम् ; हे उद्धव, एवं धर्म्मैः आत्मनिवेदिनाम्—'आत्मनि वेदनं ज्ञानं आत्मनिवेदनमित्युक्त्‌······ आत्मसमर्पणमिति व्याख्याने "मय्यर्पणञ्च मनसः" इत्यनेन पौनरुक्त्यम्' —कैवल्यदीपिका, मनुष्याणां मयि सर्व्वान्तर्यामिणि भक्तिः संजायते ; अस्य भक्तस्य कः अन्यः अर्थः साधनरूपः साध्यरूपो वा अवशिष्यते 'सर्व्वोऽपि स्वतएव भवतीत्यर्थः परम पुरुषार्थशिरोमणौ तत्र सर्व्वसुखा-न्तर्भावात्'—श्रीमज्जीवः । विष्णुभक्त्यङ्गपञ्चदशवर्गोऽयं मुक्ताफले ।

१८८—१९१ । योगच्छद्मेन विपथगामिनां विमतिं प्रदर्श्य चरमे प्रकृतयोगमुपदिश्यति केचिदिति चतुर्भिः । अथ केचित् धीराः इमं

१९२। कुर्य्यात् सर्व्वाणि कर्म्माणि मदर्थं शनकैः स्मरन्।
मय्यर्पितमनश्चित्तो मद्धर्म्मात्ममनोरतिः॥

१९३। देशान् पुण्यान् संश्रयेत मद्भक्तैः साधुभिः श्रितान्।
देवासुरमनुष्येषु मद्भक्ताचरितानि च॥

१९४। पृथक् सत्रेण वा मह्यं पर्व्वयात्रामहोत्सवान्।
कारयेद्गीतनृत्याद्यैर्महाराजविभूतिभिः॥

देहं सुकल्पं जरारोगादिरहितं वयसि तारुण्ये स्थिरं विधाय कृत्वा सिद्धये अदृश्यपरकायप्रवेशादिसिद्धये योगधारणां युञ्जन्ति। न हि तत् कर्म्म कुशलादृत्यं कुशलैः प्राज्ञैः आदृत्यम् आदरणीयम्। कथम्? तदायासः तस्मिन् आयासः प्रयत्नः हि निश्चितम् अपार्थकः निष्फलः। कथं वा यत्नो निष्फलः? वनस्पतेः फलस्य इव शरीरस्य फलस्थानीयस्य अन्तवत्त्वात् नश्वरत्वात्, वनस्पतिस्थानीयः आत्मा त्वविनश्वरः। न केवलं निष्फलप्रयासत्वं किन्तर्हि न तच्छ्रद्धायोग्यमपीत्याह—नित्यं योगं धारणाविशेषं निषेवतः कायः देहः चेत् कल्पतां कल्पकालस्थायिताम् इयात् प्राप्नुयात्, मत्परः मत्परायणः मतिमान् बुद्धिमान् जनः न श्रद्दध्यात् न विश्वस्यात्। ततः किं कुर्य्यात्? मद्व्यपाश्रयः अहम् सर्व्वान्तर्य्यामी एव अपाश्रयः आश्रयः शरणं यस्य स योगी इमां योगाचर्य्यां योगानुष्ठानं विचरन् आचरन् अन्तरायैः विघ्नैः न विहन्यते न उपद्रुतो भवेत्? कथम्? अयं योगी निस्पृहः स्पृहाशून्यः—स्पृहामूलका हि विघ्नाः, पुनश्च स्वसुखानुभूः स्वसुखे अनुभूः अनुभूतिः यस्य सः स्वानन्दपूर्णः।

१९२—२०३। चरमभक्तिसाधनानि—

हन्त ते कथयिष्यामि मम धर्म्मान् सुमङ्गलान्।
यान् श्रद्धया चरन् मर्त्त्यो मृत्युं जयति दुर्ज्जयम्॥

इत्युपक्रम्याह कुर्य्यादिति द्वादशभिः। मां सर्व्वान्तर्य्यामिणि अर्पित-

१९५ । मामेव सर्व्वभूतेषु वहिरन्तरपावृतम् ।
ईच्चेतात्मनि चात्मानं यथाखममलाशयः ॥
१९६ । इति सर्व्वाणि भूतानि मद्भावेन महाद्युते ।
सभाजयन् मन्यमानो ज्ञानं केवलमाश्रितः ॥
१९७ । ब्राह्मणे पुक्कसे स्तेने ब्रह्मण्येऽर्के स्फुलिङ्गके ।
अक्रूरे क्रूरके चैव समदृक् पण्डितो मतः ॥
१९८ । नरेष्वभीक्ष्णं मद्भावं पुंसो भावयतोऽचिरात् ।
स्पर्द्धासूयातिरस्काराः साहङ्कारा वियन्ति हि ॥
१९९ । विसृज्य स्मयमानान् स्वान् दृशं व्रीड़ाञ्च दैहिकीम्।
प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम् ॥
२०० । यावत् सर्व्वेषु भूतेषु मद्भावो नोपजायते ।
तावदेवमुपासीत वाङ्मनःकायवृत्तिभिः ॥

मनश्चित्तः अर्पिते मनश्चित्ते सङ्कल्पविकल्पानुसन्धानात्मके येन—'मनः प्रवृत्तिनिवृत्तिरूपं, चित्तं स्वच्छत्वादिरूपम्'—कैवल्यदीपिका—; अतएव मद्धर्म्मात्ममनोरतिः मद्धर्म्मेषु एव आत्ममनसोः रतिः यस्य स शनकैः असंरम्भतः विनाड़म्बरेण मदर्थं सर्व्वाणि कर्म्माणि कुर्य्यात्, मद्भक्तैः साधुभिः श्रितान् पुण्यान् देशान् संश्रयेत, देवासुरमनुष्येसु मद्भक्ताचरितानि च ये मद्भक्ताः तेषाम् चरितानि च संश्रयेत—'पूजयेत् श्रवणादिभिः'—कैवल्यदीपिका, पृथक् एकाकित्वेन सत्रेण अन्यैः संभूय अनुष्ठानेन वा मह्यं माम् सर्व्वान्तर्यामिणम् उद्दिश्य पर्व्वयात्रामहोत्सवान् महाराजविभूतिभिः चामराद्यैः नृत्याद्यैः कारयेत्; खम् आकाशं यथा तथा बहिः अन्तः अपावृतं अतिरोहितं वहिरन्तः-पूर्णं माम् आत्मानम् आत्मनाम् आत्मानं सर्व्वभूतेषु आत्मनि च

२०१ । सर्व्वं ब्रह्मात्मकं तस्य विद्ययात्ममनीषया ।
परिपश्यन्नुपरमेत् सर्व्वतो मुक्तसंशयः ॥

२०२ । अयं हि सर्व्वकल्पानां सध्रीचीनो मतो मम ।
मद्भावः सर्व्वभूतेषु मनोवाक्कायवृत्तिभिः ॥

२०३ । न ह्यङ्गोपक्रमे ध्वंसो मद्धर्म्मस्योद्धवाण्वपि ।
मया व्यवसितः सम्यक् निर्गुणत्वादनाशिषः ॥

११।२९।१९—२० ।

अमलाशयः निर्म्मलचित्तः ईक्षेत ; इति अनेन प्रकारेण, हे महाद्युते अतिप्राज्ञ उद्धव, केवलं शुद्धं ज्ञानं ज्ञानरूपां दृष्टिम् आश्रितः सन् सर्व्वाणि भूतानि मद्भावेन मम भावः सत्ता सा एव भावः तेन—'मद्बुद्ध्या' —कैवल्यदीपिका—मन्यमानः सम्मानयन्,—'ज्ञानं प्रपञ्चाधिष्ठानमिति मन्यमानः'—कैवल्यदीपिका, सभाजयन् सेवमानः—'सभाजनं सेवा'—कैवल्यदीपिका—ब्राह्मणे, पुक्कसे अन्त्यजविशेषे, स्तेने चौरे ब्रह्मस्वापहारिणि, ब्रह्मण्ये ब्राह्मणेभ्यः दातरि, अर्के सूर्य्ये, स्फुलिङ्गके, अक्रूरे क्रूरे च—जातिक्रियाद्रव्यगुणकृतवैषम्ये समदृक् समदर्शी पण्डितः मतः, अभीक्ष्णं नरेषु मनुष्येषु—'नरशब्द उपलक्षणं सर्व्वभूतेषु'—कैवल्यदीपिका —मद्भावं मत्सत्तां भावयतः चिन्तयतः पुंसः जनस्य अचिरात् साहङ्काराः स्पर्द्धासूयातिरस्काराः— स्पर्द्धा गुणाधिकैः सह साम्येच्छा, असूया गुणिषु दोषारोपः, तिरस्कारः मानभङ्गः, अहङ्कारः अनात्मनि आत्मबुद्धिः गर्व्वो वा'—कैवल्यदीपिका—हि-'स्फुटं न स्तुतिमात्रं'—कैवल्यदीपिका —विशेषात् नश्यन्ति—संस्कारैः सह नश्यन्ति ; स्मयमानान् हसतः स्वान् सखीन् तथा दैहिकीं दृशम्—अहम् उत्तमः स तु नीच इति दृष्टिम्, तया दृशा व्रीड़ा लज्जा तां च विसृज्य—'विसृज्य स्वयमन्यां वा दृशं व्रीड़ाम्'—इति मुक्ताफलपाठः, तत्र व्याख्या च—'स्वयं स्वरुच्यैव

२०४। श्रुतः संकीर्त्तितो ध्यातः पूजितश्चादृतोऽपि वा॥
नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम्।
२०५। यथा हेम्नि स्थितो वह्निर्दुर्व्वर्णं हन्ति धातुजम्।
एवमात्मगतो विष्णुर्योगिनामशुभाशयम्॥

स्वां दृशम् अहम्बुद्धिम्, अन्यां मम बुद्धिं, चकारात् लोकव्रीड़ाम्'—आश्वचाण्डालगोखरम् अश्वचाण्डालगोखरान् अभिव्याप्य दण्डवत् प्रणमेत्। यावत् सर्व्वेषु भूतेषु मद्भावः मत्सत्ता न उपजायते न प्रत्यक्षीभवति तावत् वाङ्मनःकायवृत्तिभिः एवम् उपासीत। तस्य एवं कुर्व्वतः पुंसः आत्ममनीषया सर्व्वत्रेश्वरस्वरूपदृष्ट्या विद्यया तत्त्वज्ञानेन सर्व्वं ब्रह्मात्मकं ब्रह्मस्वरूपसम्भूतं परिपश्यन् मुक्तसंशयः सर्व्वतः क्रियाभावात् अच्युतभाववर्ज्जितात् उपरमेत् विरतो भवेत्। मनोवाक्कायवृत्तिभिः सर्व्वभूतेषु मद्भावः मम स्वरूपचिन्तनम् सर्व्वकल्पानां—'ज्ञानकर्म्मयोगानाम्'—श्रीमज्जीवः-—अयं सध्रीचीनः सहायः मम मतः। अङ्ग हे उद्धव, अनाशिषः निष्कामस्य मद्धर्म्मस्य सर्व्वत्र मद्भावदर्शनरूपस्य धर्म्मस्य उपक्रमे अनुष्ठानारम्भे अण्वपि ईषदपि न हि ध्वंसः न वैगुण्यादिभिः नाशः। कथं ? निर्गुणत्वात् गुणातीतत्वात् सत्त्वादिजनितविकारशून्यत्वात् अयं धर्म्मः मया सर्व्वान्तर्यामिणा व्यवसितः निश्चितः। मुक्ताफले द्वादशवर्गोऽयम्।

२०४। भगवत्साक्षात्सम्बन्धेनैव सर्व्वाशुभविध्वंसो न तु साधनादिनेत्याह श्रुत इति। श्रुतः, सङ्कीर्त्तितः, ध्यातः, पूजितः अपि वा आदृतः भगवान् हृत्स्थः सन् नृणां जन्मायुताशुभं धुनोति अपाकरोति।

२०५। यथेति। यथा हेम्नि सुवर्णे स्थितः वह्निः अग्निः धातुजं दुर्व्वर्णं हन्ति, एवम् आत्मगतः आत्मन्यधिष्ठितः विष्णुः परमपुरुषः न तु योगादिकं योगिनाम् अशुभाशयं हन्ति।

२०६। विद्यातपःप्राणनिरोधमैत्री-
तीर्थाभिषिकव्रतदानजप्यैः।
नात्यन्तशुद्धिं लभतेऽन्तरात्मा
यथा हृदिस्थे भगवत्यनन्ते ॥१२।३।४६—४८।

२०७। मृषा गिरस्ता ह्यसतीरसत्कथा
न कथ्यते यद्भगवानधोक्षजः।
तदेव सत्यं तदुहैव मङ्गलं
तदेव पुण्यं भगवत्कथोदयम् ॥

२०८। तदेव रम्यं रुचिरं नवं नवं
तदेव शश्वन्मनसो महोत्सवम्।
तदेव शोकार्णवशोषणं नृणां
यदुत्तमश्लोकयशोऽनुगीयते ॥१२।१२।४८।४९।

२०६। विद्येति। विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषिकव्रतदानजप्यैः विद्या देवतोपासना, तपः त्रिविधम्, प्राणनिरोधः प्राणसंयमः, मैत्री सर्व्वभूतानुकम्पा, तीर्थाभिषेकः तीर्थस्नानं, व्रतं, दानं, जप्यः मन्त्रः, एतैः न तथा अन्तरात्मा अत्यन्तशुद्धिं लभते यथा भगवति अनन्ते हृदिस्थे सति।

२०७। हरिगुणकीर्त्तनमेव महाफलं तद्व्यतिरिक्तं सर्व्वं मिथ्यालापमात्रमित्याह मृषेति। ताः मृषागिरः मिथ्यावाचः, ताः असतीः असत्यः असत्कथाः असतां कथाः यत् यत्र भगवान् अधोक्षजः न कथ्यते। भगवद्गुणोदयं भगवद्गुणानाम् अभ्युदयः यस्मात् तत्, तदेव सत्यं, तत् एवहि मङ्गलम्—ह इति हर्षे—तत् एव पुण्यम्।

२०८। तदेवेति। तत् एव रम्यं मनोहरं, तत् एव नवं नवं

२०९ । यशः श्रियामेव परिश्रमः परो
वर्णाश्रमाचारतपःश्रुतादिषु ।
अविस्मृतिः श्रीधरपादपद्मयो-
र्गुणानुवादश्रवणादिभिर्हरेः ॥१२।१२।५३ ।

यथा भवति तथा रुचिरं रुचिप्रदं, तत् एव मनसः महोत्सवम् महान् उत्सवः यस्मात् तत्, तत् एव नृणां शोकार्णवशोषणं यत् यत्र उत्तम-श्लोकयशः अनुगीयते सातत्येन कीर्त्त्यते ।

२०९ । वर्णाश्रमाचारैः कीर्त्तिलाभः श्रवणादिभिर्भगवदविस्मृति-रित्याह यशइति । वर्णाश्रमाचारतपःश्रुतादिषु परः महान् परिश्रमः श्रियाम् एव यशः कीर्त्तिः सम्पत्तिः, केवलं पुरुषार्थं इति । हरेः गुणानु-वादश्रवणादिभिः श्रीधरपादपद्मयोः श्रीधरस्य सौन्दर्य्यराशेः पादपद्मयोः अविस्मृतिः चिन्तापथे नियतस्थितिः भवति ।

इति श्रीसात्त्वतसंहितोत्थायां व्याख्यानसहितायां
श्रीमद्गीताप्रपूर्त्तौ साधननिर्द्देशो नाम
अष्टमोऽध्यायः ।

———

# नवमोऽध्यायः।

## विषयविषयिसम्बन्धनिर्देशः।

१। एतद्रूपं भगवतो ह्यरूपस्य चिदात्मनः।
मायागुणैर्विरचितं महदादिभिरात्मनि ॥१।३।३०।

१। विषयविषयिसम्बन्धनिर्देशेऽस्मिन्नध्याये विषयैर्विषयिणां विषयभूतैश्च विषयिभिस्तेषां सम्बन्धो निर्णीयते। अतः पृथिव्यादिभिः साधुभिश्च स्वानुमोदितसम्बन्धं प्रदर्शयितुं प्रथमं तावत् सर्व्वविषयात्मकं विश्वं भगवद्रूपत्वेन विषयिभिर्ग्राह्यमित्याह एतद्रूपमिति। एतत् विश्वम् अरूपस्य प्राकृतरूपविरहितस्य चिदात्मनः चैतन्यस्वरूपस्य मायागुणैः महदादिभिः रूपं—रूप्यते शब्द्यते मानसविषयं क्रियतेऽनेनेति रूपं—प्रकाशस्थानम् आत्मनि जीवे—'अन्तर्यामिणो'ति श्रीमद्विश्वनाथः—विरचितं कृतम्। श्रीमत्स्वामिना जीवाधिकृतत्वेनेदं पद्यं व्याख्यातम्, तत्त्वन्यैरुपेक्षितम्।

जगृहे पौरुषं रूपं भगवान् महदादिभिः। (५।१)

इत्यादिमवाक्येनान्तिमवाक्यस्यास्य सम्बन्धचिन्तनात्तेषामेव व्याख्यानं चारुतया प्रतिभाति। अपिच—

एतद्भगवतोरूपं स्थूलं ते व्याहृतं मया।
मह्यादिभिरावरणैरष्टभिर्बहिरावृतम् ॥
अतःपरं सूक्ष्मतममव्यक्तं निर्व्विशेषणम्।
अनादिमध्यनिधनं नित्यं वाङ्मनसः परम् ॥
अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते।
उभे अपि न गृह्णन्ति मायासृष्टे विपश्चितः ॥ (२।१०।३२—३४);

'भगवतो गुणमये स्थूलरूप आवेशितं मनो ह्यगुणेऽपि सूक्ष्मतम आत्मज्योतिषि परे ब्रह्मणि भगवति वासुदेवाख्ये क्षमसावेशितुं तद्गुरुतद्गुरो-

ऽर्हस्यनुवर्णयितुमिति' (५।१६।३); 'एतावानेवाण्डकोशो यश्चतुर्धा पुराणेषु विकल्पित उपगीयते यत्तद्भगवतो नारायणस्य साक्षान्महापुरुषस्य स्थविष्ठं रूपमात्ममायागुणमयमनुवर्णितम्'

> श्रुत्वा स्थूलं तथा सूक्ष्मं रूपे भगवतो यतिः।
> स्थूले निर्जितमात्मानं शनैः सूक्ष्मं धिया नयेत्॥ (५।२६।३६।३७)।

इत्यादिभिः सिद्ध्यतेऽन्येषां व्याख्यातॄणां व्याख्यानं। मुक्ताफले श्रीमद्बोपदेवेन निराकारपक्षे समुद्धृतञ्च

> न यत्र कालोऽनिमिषां परः प्रभुः कुतो नु देवा जगतां य ईशिरे।
> न यत्र सत्त्वं न रजस्तमश्च न वै विकारो न महान् प्रधानम्॥
> परं पदं वैष्णवमामनन्ति तद्यन्नेति नेतीत्यतदुत्सिसृक्षवः।
> विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यार्हपदं पदे पदे।
> इत्थं मुनिस्तूपरमेद्व्यवस्थितो विज्ञानदृग्वीर्यसुरन्धिताशयः॥ (२।२।१७—१९);

पुरुषरूपिसाकारपक्षे च

> भूतैर्यदा पञ्चभिरात्मसृष्टैः पुरं विराजं विरचय्य तस्मिन्।
> स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः॥
> यत्काय एष भुवनत्रयसन्निवेशो यस्येन्द्रियैस्तनुभृतामुभयेन्द्रियाणि।
> ज्ञानं स्वतः श्वसनतो बलमोज ईहा सत्त्वादिभिः स्थितिलयोद्भव आदिकर्त्ता॥
>
> (११।४।३।४) इति।

'अगोचरस्य गोचरत्वे हेतुः प्रकृतिगुणः सत्त्वम्' इति न्यायेन विश्वस्य रूपत्वमीश्वरस्य संहितायामस्यां यदनुमोदितम्, तत्तस्य प्रकाशस्थानत्वेनास्माभिरपि स्वीकर्तुं शक्यम्। जीवसन्निधौ जगदाविष्करोति परात्मा तन्मनोनुरूपत्वेनेति 'आत्मनि जीवे' इति सुष्ठु व्याख्यानम्। श्रीमज्जीवेनोक्तम्—'मायागुणैर्विरचितमेवैतज्जगदाकारं रूपं तच्चात्मनि जीव एव विरचितं तत्सम्बन्धतयैव कल्पितं न तु परमेश्वरसम्बन्धतयेत्यर्थः; आसङ्गादनासङ्गाच्चेति भावः' इति। परिणामवादिनां तत्त्वतोऽन्यथाभावं विना परिणामसाधनमेवमेव सिद्ध्यति। यतः स्वशक्तिवैचित्र्यप्रकाशे न जातु भगवति विकारः सम्भवति, सम्भवति स पुनः जीवएव तेन तस्य विविधभावाधीनतोपस्थितेः स्वज्ञानावरणसंघटनाच्च।

२ । भवद्विधा भागवतास्तीर्थीभूताः स्वयं विभो ।
तीर्थीकुर्व्वन्ति तीर्थानि स्वान्तःस्थेन गदाभृता ॥
१।१३।८ ।

३ । तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥
१।१८।१३ ।

२ । विषयिणां विषयभूतैः साधुभिश्च सम्बन्धं प्रस्तोतुं कुतस्तेषां पावनत्वमुपतिष्ठते तदाह विदुरं प्रति युधिष्ठिरवाक्येन भवद्विधा इति । हे विभो समर्थ, भवद्विधाः त्वत्सदृशाः भागवताः भगवद्भक्ताः स्वयं तीर्थीभूताः तीर्थस्वरूपाः । कथम् ? स्वान्तःस्थेन स्वस्य अन्तरस्थेन गदाभृता—

ओजःसहोबलयुतं मुख्यतत्त्वं गदां दधत् । (४।९४)

इति प्राणस्य प्राणरूपेण परमात्मना तीर्थानि तीर्थीकुर्व्वन्ति । 'मलिन-जनसम्पर्कात् तीर्थानि अतीर्थानि सन्ति, सन्तः पुनस्तीर्थीकुर्व्वन्ति' इति श्रीमत्स्वामी । तीर्थानां तीर्थत्वं साधुसमागमवशात्, तेषाञ्च साधुत्वं तेषु भगवदाविर्भावहेतोः ।

३ । भगवदनुरक्तजनानां सङ्गस्य श्रैष्ठ्यमृषीणां वाक्येन प्रतिपाद-यति तुलयामेति । भगवत्सङ्गिसङ्गस्य भगवत्सङ्गिनां भगवदनुर-क्तानां सङ्गस्य लवेन अत्यल्पकालेनापि न स्वर्गं न अपवर्गं मोक्षं तुलयाम न समं पश्याम—'सम्भावनायां लोडिति, तुलयितुं सम्भावनामपि न कुर्मः' इति श्रीमज्जीवः । मर्त्यानाम् आशिषः तुच्छाः राज्याद्याः न तुलयाम इति किमुत वक्तव्यम् । पद्यमिदं चतुर्थस्कन्धे त्रिंशाध्याये पुनरुक्तम् ।

४। प्रसङ्गमजरं पाशमात्मनः कवयो विदुः।
सएव साधुषु कृतो मोक्षद्वारमपावृतम् ॥३।२५।२०।

५। तएते साधवः साध्वि सर्व्वसङ्गविवर्ज्जिताः।
सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते ॥३।२५।२४

६। भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गो
भूयादनन्त महतामसलाशयानाम्।
येनाञ्जसोल्वणमुरुव्यसनं भवाब्धिं
नेष्ये भवद्गुणकथामृतपानमत्तः॥

४। सङ्गो हि बन्धकारणं स एव हि साधुषु कृतः तदपनयायेत्याह देवहूतिं प्रति कपिलवाक्येन प्रसङ्गमिति। कवयः क्रान्तदर्शिनः प्रसङ्गं जनसङ्गम् अक्षयं पाशं बन्धकारणं विदुः। स एव प्रसङ्गः साधुषु कृतः मोक्षद्वारम् अपावृतं निरावरणं भवति।

५। के पुनस्ते इत्यपेक्षायां,

तितिक्षवः कारुणिकाः सुहृदः सर्व्वदेहिनाम्।
अजातशत्रवः शान्ताः साधवः साधुभूषणाः॥
मय्यनन्येन भावेन भक्तिं कुर्व्वन्ति ये दृढाम्।
मत्कृते त्यक्तकर्म्माणस्त्यक्तस्वजनबान्धवाः॥
मदाश्रयकथामृष्टाः शृण्वन्ति कथयन्ति च।
तपन्ति विविधास्तापा नैतान् मद्गतचेतसः॥

इत्येवं लक्षणाक्रान्ताः साधवएव सङ्गदोषमपनयन्तीत्याह तद्वाक्येनैव तत ते इति। हे साध्वि देवहूते, ते एते साधवः सर्व्वसङ्गविवर्ज्जिताः सर्व्वविधसङ्गदोषविहीनाः—'पुरुषार्थचतुष्टयासक्तिशून्याः' इति श्रीमज्जीवः। अथ अतो हेतोः तेषु साधुषु ते तव सङ्गः प्रार्थ्यः प्रार्थनीयः; हि यस्मात् ते साधवः संगदोषहराः संगजनितबन्धनदोषस्यापनोदकाः।

६। कथं साधुसङ्गेन सङ्गदोषोऽपनीयते तत्कारणमाह ध्रुववाक्येन

७। ते न स्मरन्त्यतितरां प्रियमीश मर्त्त्यं
ये चान्वदः सुतसुहृद्गृहवित्तदाराः ।
ये त्वब्जनाभ भवदीयपदारविन्द-
सौगन्ध्यलुब्धहृदयेषु कृतप्रसङ्गाः ॥४।९।११।१२

८। तेषामहं पादसरोजरेणु-
मार्य्यावहेयाधिकिरीटमायुः ।

भक्तिमिति । हे अनन्त, त्वयि परमात्मनि मुहुः सातत्येन भक्तिं प्रवहतां कुर्व्वताम् अमलाशयानां निर्म्मलचित्तानां महतां मे मम प्रसङ्गः भूयात्, येन महत्सङ्गेन भवद्गुणकथामृतपानमत्तः सन् अञ्जसा अयत्नतः उरुव्यसनम् उरूणि व्यसनानि यस्मिन् तं भवाब्धिं नेष्ये पारं गमिष्यामि ।

७। एवं प्रमत्ततायाः हेतुमभिदधाति ते नेति । हे ईश, हे अब्जनाभ अब्जं विश्वं नाभौ नभसि यस्मिन् स त्वम्, हे विश्वाधार—‘धर्म्मज्ञानादिभिर्युक्तं सत्त्वं पद्म मिहोच्यते’ (४।८३) इत्यत्र आसनस्योल्लेखात् अन्यत्रोक्तं ‘पद्मं विश्वं करे स्थितम्’ ( ४।८५व्या ) इत्यनुसारेण अब्जमत्र विश्वत्वेन ग्राह्यम् । ‘नभः नाभिः’ (४।८६) इति नाभौ नभसि नामरूपमयं विश्वं स्थितमिति लक्ष्यते । ‘आकाशोह वै नामरूपयोर्निर्व्वहिता’ इति श्रुत्यनुमोदितं नभसो भगवता चाभिन्नत्वम्—भवदीयपदारविन्दसौगन्ध्यलुब्धहृदयेषु भक्तजनेषु ये तु कृतप्रसंगाः, ते अतितराम् अतिशयेन प्रियम् अपि मर्त्त्यं देहं न स्मरन्ति न अनुसन्दधते, अदः देहम् अनु ये सुतसुहृद्गृहवित्तदाराः तान् अपि न स्मरन्तीति शेषः । तथाहि श्रीमत्परिक्षिदनुभवः—

नैषातिदुःसहा क्षुन्मां त्यक्तोदमपि बाधते ।
पिबन्तं त्वन्मुखाम्भोजच्युतं हरिकथामृतम् ॥ (१०।१।१३) इत्यादि ।

८। आस्तां सत्सङ्गो दास्यभावेन तेषां चरणसेवायामपि पापापनोदनं महद्गुणलाभश्च भवतीत्याह पृथुवाक्येन तेषामिति । हे आर्य्याः,

यं नित्यदा बिभ्रत आशु पापं
नश्यत्यमुं सर्व्वगुणा भजन्ति ॥४।२१।४२।

९। सङ्गमः खलु साधूनामुभयेषाञ्च सम्मतः।
यत्सम्भाषणसंप्रश्नः सर्व्वेषां वितनोति शम्॥
४।२२।१९।

१०। न कुर्य्यात् कर्हिचित् सङ्गं तमस्तीव्रं तितीरषुः।
धर्म्मार्थकाममोक्षाणां यदत्यन्तविघातकम्॥४।२२।३४

११। अथानघाङ्घ्रेस्तव कीर्त्तितीर्थयो-
रन्तर्ब्बहिःस्नानविधूतपाप्मनाम्।

आ आयुः यावज्जीवम् अधिकिरीटं मुकुटस्योपरि अहं तेषां सतां पादसरोजरेणुम् वहेय धारयेय, यं रेणुं नित्यदा सर्व्वदा बिभ्रतः जनस्य आशु सत्वरं पापं नश्यति, अमुं रेणुवाहकं जनं सर्व्वगुणाः सर्व्वे महद्गुणाः भजन्ति, तस्मिन् ते संक्रामिताः भवन्ति।

९। कथमेवं भवति तत्कारणमाह सनत्कुमारवाक्येन सङ्गम इति। साधूनां संगमः खलु उभयेषां वक्तॄणां श्रोतॄणां च सम्मतः—'अभिलषितः' इति श्रीमद्विश्वनाथः, 'परमसुखप्रदः' इति श्रीमज्जीवः। कथम्? यत्सम्भाषणसम्प्रश्नः येषां साधूनां सम्भाषणसहितः संप्रश्नः सर्व्वेषां—'श्रोतृवक्तृसन्निहिततत्सन्निहितानामपि' इति—श्रीमद्विश्वनाथः—शं सुखं वितनोति विस्तारयति।

१०। सत्संगस्याधिकमहिमानं दृष्टोचरीकर्त्तुमसद्विषयसंगस्याक्षेमकरत्वं प्रस्तौति न कुर्य्यादिति। यत् वस्तु धर्म्मार्थकाममोक्षाणाम् अत्यन्तविघातकं निरतिशयविघ्नकरं, तच्च तीव्रं तमः संसारं तितीरषुः तितीर्षुः तरीतुमिच्छुः कर्हिचित् सङ्गं न कुर्य्यात्।

११। सत्संगलाभो भगवदनुग्रहेण सिद्ध्यतीत्याह अथेति।

भूतेष्वनुक्रोशसुसत्त्वशीलिनां
स्यात् सङ्गमोऽनुग्रह एष नस्तव ॥४।२४।५८ ।

१२ । यत्रेड्यन्ते कथामृष्टास्तृष्णायाः प्रशमो यतः ।
निर्व्वैरं यत्र भूतेषु नोद्वेगो यत्र कश्चन ॥

१३ । यत्र नारायणः साक्षाद्भगवान्न्यासिनां गतिः ।
संस्तूयते सत्कथासु मुक्तसङ्गैः पुनः पुनः ॥

१४ । तेषां विचरतां पद्भ्यां तीर्थानां पावनेच्छया ।
भीतस्य किं न रोचेत तावकानां समागमः ॥

४।३०।३५—३७ ।

क्षणार्द्धेनापि तुलये न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्त्यानां किमुताशिषः ॥

अथ अतो हेतोः अनघाङ्घ्रेः पापहरणचरणस्य तव कीर्त्तितीर्थयोः कीर्त्तिः यशः तीर्थं पवित्रसलिलं तयोः अन्तर्व्वहिः स्नानविधूतपाप्मनां क्रमेण अन्तर्वहिः स्नानाभ्यां विधूतः पाप्मा येषाम्, अतएव भूतेषु अनुक्रोशसुसत्त्वशीलिनाम् अनुक्रोशः कृपा, सुसत्त्वं च रागादिरहितं चित्तं, शीलं च आर्ज्जवादि विद्यते येषां तेषां संगमः स्यात् एष एव नः अस्मभ्यं तव अनुग्रहः ।

१२—१४ । सत्संगस्य भूयो भूयोगुणकीर्त्तने कोवा हेतुस्तं पुनर्दर्शयितुमाह प्रचेतोवाक्येन यत्रेति त्रिभिः । यत्र येषु सन्निहितेषु सत्सु मृष्टाः शुद्धाः कथाः ईड्यन्ते स्तूयन्ते, यतः याभ्यः कथाभ्यः तृष्णायाः वासनायाः प्रशमः निवृत्तिः, यत्र येषु भूतेषु प्राणिषु निर्व्वैरं वैराभावः, यत्र येषु कश्चन न उद्वेगः भगवत्याश्वस्तचित्तत्वात् ; यत्र येषु न्यासिनां सर्व्वात्मसमर्पकाणां गतिः भगवान् नारायणः नरसमूहानामाश्रयः साक्षाद्विद्यमान इति शेषः ; मुक्तसङ्गैः विषयासक्तिविरहितैः यैः पुनः पुनः

१५। तज्जन्म तानि कर्म्माणि तदायुस्तन्मनोवचः।
नृणां येनेह विश्वात्मा सेव्यते हरिरीश्वरः॥
१६। किं जन्मभिस्त्रिभिर्व्वेह शौक्रसावित्र्ययाज्ञिकैः।
कर्म्मभिर्व्वा त्रयीप्रोक्तैः पुंसोऽपि विबुधायुषा॥
१७। श्रुतेन तपसा वा किं वचोभिश्चित्तवृत्तिभिः।
बुद्ध्या वा किं निपुणया बलेनेन्द्रियराधसा॥
१८। किं वा योगेन सांख्येन न्यासस्वाध्याययोरपि।
किं वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिः॥
१९। श्रेयसामपि सर्व्वेषामात्मा ह्यवधिरर्थतः।
सर्व्वेषामपि भूतानां हरिरात्मात्मदः प्रियः॥

४।३१।९—१३।

सत्कथासु भवगत्प्रसंगेषु प्रस्तूयते प्रवर्त्त्यते, तीर्थानां पावनेच्छया पवित्रीकरणेच्छया—'पद्भ्यां तीर्थानां पावनेच्छया सत्पादस्पर्शात् तीर्थान्यपि शुद्ध्यन्तीत्यर्थः' इति—श्रीमद्विष्णुपुरी; 'तीर्थानां या स्वपावनेच्छा तया' इति श्रीमज्जीवः—पद्भ्यां विचरतां भ्रमणशीलानां तावकानां त्वदीयानां त्वमन्तर्यामी त्वत्सम्पर्कीयाणां तेषां सतां समागमः संगमः भीतस्य संसारवस्तस्य जनस्य किं न रोचेत? अवश्यं रोचेत एव।

१५—१९। जन्मादिनिखिलविषयाणां सफलत्वं भगवत्सान्निध्येन; अतस्तदेव भङ्ग्योपवर्णयति तज्जन्मेत्यादिभिः। नृणां तत् जन्म जन्म, तानि कर्म्माणि कर्म्माणि, तत् आयुः आयुः, तत् मनः मनः, तत् वचः वचः, येन हि विश्वात्मा विश्वस्य विश्वेषां वा आत्मा आत्मनामात्मा ईश्वरः नियन्ता हरिः सेव्यते। इह संसारे पुंसः जनस्य शौक्रसावित्र्ययाज्ञिकैः शौक्रं विशुद्धमातापितृभ्यां, सावित्र्यम् उपनयनेन, याज्ञिकं दीक्षया इति त्रिभिः जन्मभिः, त्रयीप्रोक्तैः वेदविहितैः कर्म्मभिः यज्ञैः,

२० । महत्सेवां द्वारमाहुर्विमुक्ते-
स्तमोद्वारं योषितां सङ्गिसङ्गम् ।
महान्तस्ते समचित्ताः प्रशान्ता
विमन्यवः सुहृदः साधवो ये ॥५।५।२ ।

विबुधायुषा वा विबुधानां देवानाम् इव आयुषा वा किम् ? श्रुतेन वेदान्तादिश्रवणेन, तपसा कृच्छ्रसाधनेन वा किम् ? वचोभिः वचन-चातुर्य्यैः, चित्तवृत्तिभिः नानावधानसामर्थ्यैः, निपुणया बुद्ध्या, बलेन शक्तिमत्त्वेन, इन्द्रियराधसा इन्द्रियपाटवेन वा किम् ? योगेन कर्म्मार्प-णेन, सांख्येन आत्मज्ञानेन वा किम् ? न्यासस्वाध्याययोः सन्न्यासवेदा-ध्ययनाभ्याम् अन्यैश्च श्रेयोभिः वा किम् ? यत्र येषु जन्मादिषु आत्म-प्रदः आत्मानं प्रददातीत्येतत्स्वभावः हरिः न । तदाविष्टत्वेनैव जन्मादीनां साफल्यमन्यथा तुच्छमेव तत्सर्व्वमिति निर्गलितार्थः ।

२० । मोक्षबन्धयोर्निदानं सदसत्संगः । को वा सन् को वा असन् यस्य संगादेवं विपरीतफलमुदेति, तत् कथयति, एकत्र विषय-निर्व्वचनेनान्यत्र लक्षणैः महत्सेवामिति । महत्सेवां महतां सतां सेवां विमुक्तेः द्वारं, योषिताम् अधमस्त्रीणां संगिसंगं संगिनां संगं तमोद्वारं नरकद्वारम् आहुः । के ते महान्तः ? ते महान्तः ये सम-चित्ताः समदर्शिनः, प्रशान्ताः निवृत्तविषयाभिलाषाः, विमन्यवः भूत-द्वेषशून्याः, सुहृदः मैत्रीयुक्ताः अनिमित्तबन्धवः, साधवः असाध्यसाधन-पराः—'सदाचाराः' इति श्रीमत्स्वामी, 'परदोषाग्राहिणः' इति श्रीम-द्विश्वनाथः। 'योषितां संगिसंगः' इत्यत्र विषयनिर्व्वचनेनासत्संगनिर्णयः । अत्रेदं विवेच्यम्—सामान्यतोऽत्र योषिच्छब्दस्योल्लेखात् किं पुनरस्मिन् शास्त्रे स्त्रीणामविशेषेणाधमत्वमेव निर्णीयते ? यद्येवं स्यात् न खल्वे-कान्त्यावलम्बी श्रीमन्मध्वः स्वकृतब्रह्मसूत्रभाष्ये स्त्रीणां वेदाधिकार-

२१। गुरुर्न स स्यात् स्वजनो न स स्यात्
पिता न स स्याज्जननी न सा स्यात्।
दैवं न तत् स्यान्न पतिश्च स स्या-
न्नमोचयेद्यः समुपेतमृत्युम् ॥५।५।१८।

प्रदर्शनाय व्योमसंहितातः प्रमाणमुपन्यस्येत—

आहुरप्युत्तमस्त्रीणामधिकारन्तु वैदिके। इति।

मैत्रेयीगार्गीप्रभृत्युत्तमस्त्रीणां ब्रह्मजिज्ञासा तत्र कृतकृत्यता योगाधिकारश्च स्मृत्याद्युक्तवचनानामधमयोषित्परत्वमेव दर्शयति, अतएव तथैव व्याख्यातमत्र।

२१। भगवानेव गुर्व्वादि सम्बन्धानां मूलम्। यदि तैर्भगवद्विमुखैः सम्बन्धः भगवत्सम्बन्धविच्छेदाय भवति, तदा तैः सम्बन्धविच्छेदोऽवश्यकर्त्तव्य इति प्रदर्शयति गुरुरिति। समुपेतमृत्युं समुपेतः संप्राप्तः मृत्युः संसारो येन तं जनं यः न मोचयेत्, स गुरुः न स्यात्, स स्वजनः न स्यात्, स पिता न स्यात्, सा जननी न स्यात्, तत् दैवं पूजार्हं न स्यात्, स पतिः न स्यात्। अत्र व्यावहारिकगुर्व्वादित्यागेऽपि परमार्थपथिकानां न दोष इति यत् श्रीमज्जीवेनोक्तं भक्तिसन्दर्भपर्य्यालोचनां विना न तस्यार्थपरिग्रहः सम्भवति। तत्र हि श्रवणगुरुः शिक्षागुरुः मन्त्रगुरुरिति त्रिविधगुरुरुक्तः। तेषामाद्यं द्वयं व्यावहारिकमन्तिमस्तु पारमार्थिकः। श्रवणगुरुः शिक्षागुरुर्मन्त्रगुरुस्तत्रैवं निर्णीतः—

'तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्।

'अथ ब्रह्मवैवर्त्ते—

वक्ता सरागो नीरागो द्विविधः परिकीर्त्तित'।
सरागो लोलुपः कामी तदुक्तं हृन्न संस्पृशेत्॥

उपदिशं करोत्येव न परीक्षां करोति च ।
अपरीक्ष्योपदिष्टं यत् लोकनाशाय तद्भवेत् ॥

'किञ्च,

कुलं शीलं तथाचारमविज्ञाय परं गुरुम् ।
भजेत श्रवणाद्यर्थी सरस सारसागरम् ॥

'तत्रैवान्यत्र—

कामक्रोधादियुक्तोऽपि कृपणोऽपि विषादवान् ।
श्रुत्वा विकाशमायाति स वक्ता परमो गुरुः ॥

'अथ श्रवणगुरुभजनशिक्षागुर्व्वोः प्रायिकमेकत्वमिति तथैवाह । श्रीमन्त्रगुरुस्त्वेक एवेत्याह—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

इति श्रुतयः श्रीभगवत्त्वम् । अतः श्रीमन्त्रगुरोरावश्यकत्वं सुतरामेव । तदेतत्-परमार्थगुर्व्वाश्रयो व्यावहारिकगुर्व्वादिपरित्यागेनापि कर्त्तव्य इत्याशयेनाह—"गुरुर्न स स्यात्—।" अत उक्तं श्रीनारदेन—

जुगुप्सितं धर्मकृतेऽनुशासतः स्वभावरक्तस्य महान् व्यतिक्रमः ।

इत्यादि । तस्मात्तावदेव तेषां गुर्व्वादिव्यवहारो यावन्मृत्युमोचकं श्रीगुरुचरणं नाश्रयत इत्यर्थः ।' इति । गुर्व्वाश्रयकारणं हरिभक्तिविलासे—

कृपया कृष्णदेवस्य तद्भक्तजनसङ्गतः ।
भक्तेर्माहात्म्यमाकर्ण्य तामिच्छन् सद्गुरुं भजेत् ॥
अत्रानुभूयते नित्यं दुःखश्रेणी परत्र च ।
दुःसहा श्रूयते शास्त्रात् तितीर्षेदपि तां सुधीः ॥ इति ।

यदि मन्त्रगुरुः पारमार्थिकोऽत्याज्यस्तदा विना परीक्षां न कोऽपि कमपि गुरुत्वेन वृणीत । अतएवानुशासनम्—

तयोर्वत्सरवासेन ज्ञातोऽन्योन्यस्वभावयोः ।
गुरुता शिष्यता चेति नान्यथैवेति निश्चयः ॥
नावत्सरवासिने देयम् । इति ।

भगवत्साक्षात्कारसम्पन्न एव शास्त्रीयगुरुर्यथा—

शाब्दे परे च निष्णातं ब्रह्मण्युपशमाश्रयम्।

टीका च—'शाब्दे ब्रह्मणि वेदाख्ये निष्णातं तत्त्वज्ञम्, अन्यथा संसारनिरासकत्वायोगात्; परे च ब्रह्मणि अपरोक्षानुभवे निष्णातम् अन्यथा बोधसञ्चारायोगात्।' इति। अतएव हि शास्त्रे गुरुशिष्यलक्षणानि विस्तारेणोपवर्णितानि। लक्षणाक्रान्तोऽपि

परिचर्य्यायशोलाभलिप्सुः शिष्याद्गुरुर्न हि।

इति परिचर्य्याद्याकाङ्क्षी चेत् न स गुरुत्वेन वरणीयः। गुरुशिष्ययोर्व्यवहारे न्यायलङ्घनं न जातु शास्त्रमनुमोदते। तथाहि,

यो वक्ति न्यायरहितमन्यायेन शृणोति वा।
तावुभौ नरकं घोरं व्रजतः कालमक्षयम्॥ इति।

वस्तुतस्तु,

शास्ता जनानां सर्व्वान्तरात्मा।
शास्ता विष्णुरशेषस्य जगतो यो हृदि स्थितः।
तमृते परमात्मानं जन्तुः कः केन शास्यते॥

इत्याद्यनुसारेण स्वयं परमात्मैव पारमार्थिकगुरुः। वैष्णवसिद्धान्तस्तु 'तदाविर्भावेषु भेदग्राही निन्द्यते' इति न्यायमनुसृत्यैवेति तत्त्वम्। श्रीमत्स्वामिनमनुवर्त्त्यौव श्रीमद्विश्वनाथः;—'एवं भक्तेरुपदेष्टारमभिनन्द्य तदनुपदेष्टॄणां गुरुबन्धुत्वाद्यभावं तद्धेतुकं तेषां त्यागं चाभिव्यञ्जयति। ······जनं भक्तियोगोपदेशेन यो न मोचयेत् स गुर्व्वादिर्न भवेत् न भवति। बलिः शुक्रमिव तं गुरुं त्यजेदेव, तस्य प्रणत्यनुवृत्त्याद्यभावेऽपि न प्रत्यवायी स्यादिति भावः। एवं विभीषणो रावणमिव तं स्वजनं, प्रह्लादो हिरण्यकशिपुमिव तं पितरं, श्रीभरतः कैकेयीमिव तां जननीं, खट्वाङ्ग इन्द्रादिमिव तद्दैवं, याज्ञिकब्राह्मणी याज्ञिकविप्रमिव तं पतिं त्यजेदित्यर्थः। यद्वा स्यादिति विधिलिङा यस्तं मोचयितुं न शक्नुयात् स तस्य गुर्व्वादिर्न स्यात् प्रणत्यनुवृत्त्यादिकं न गृह्णीयात्, यदि गृह्णीयात् तर्हि प्रत्यवायी स्यात् इति। तेन च यदि मोचयितुं न शक्नुयात्

२२ । सर्व्वाणि मद्धिष्ण्यतया भवद्भि-
श्चराणि भूतानि सुता ध्रुवाणि ।
सम्भावितव्यानि पदे पदे वो
विविक्तदृग्भिस्तदुहार्हणं मे ॥५।५।२६ ।

२३ । न कुर्य्यात् कर्हिचित् सख्यं मनसि ह्यनवस्थिते ।
यद्विश्रम्भाच्चिराच्चीर्णं चस्कन्द तपऐश्वरम् ॥
५।६।३ ।

तर्हि गुरुर्भवितुमन्यं न शिष्यं कुर्य्यात्; स्वजनोभवितुं बन्धुतां न दध्यात्, पिता भवितुं पुत्रोत्पत्तौ न यतेत, जननी भवितुमन्यं न गर्भे दध्यात्, दैवं भवितुं पूजां न गृह्णीयात्, पतिर्भवितुं पाणिं न गृह्णीयादिति द्योतितम्' इति ।

२२ । शास्त्रेऽस्मिन् जगज्जीवौ यद्भगवच्छरीरत्वेन वर्णितौ, तत् तदधिष्ठानतयेति विवृणोति पुत्रान् प्रति ऋषभवाक्येन सर्व्वाणीति । हे सुताः, सर्व्वाणि चराणि जङ्गमानि, ध्रुवाणि स्थावराणि च भूतानि मद्धिष्ण्यतया ममान्तर्यामिणोऽधिष्ठानतया वो युष्माभिः सम्भावितव्यानि सम्माननीयानि, पदे पदे क्षणे क्षणे विविक्तदृष्टिः विविक्ता पूता मत्-सरादिरहिता दृष्टिः येषां तैः तदुह तदेवहि मे मम अर्हणम् ।

२३ । विषयैर्विषयिणां सम्बन्धस्तावद्भ्रंशकरो यावन्न मनसः स्थैर्य्यलाभः । अतएवासंयतमनसि यादृशविषयसम्बन्धेनासक्तिरुपतिष्ठते तादृशं सम्बन्धं परिहरेदित्याह न कुर्य्यादिति । मनसि हि अनव-स्थिते स्थिरतामप्राप्ते कर्हिचित् कदाचित् सख्यं घनिष्ठसम्बन्धं न कुर्य्यात् । कथम् ? यद्विश्रम्भात् यस्य सख्यस्य विश्रम्भात् विश्वासात् चिराच्चीर्णं बहुकालसञ्चितम् ऐश्वरम् ईश्वराणां समर्थानां सौरभिप्रभृती-नाम् अपि तपः चस्कन्द चस्खाल ।

२४ । रहूगणैतत्तपसा न याति
न चेज्यया निर्व्वपणाद्गृहाद्वा ।
न छन्दसा नैव जलाग्निसूर्य्यै-
र्विना महत्पादरजोभिषेकम् ॥

२५ । यत्रोत्तमश्लोकगुणानुवादः
प्रस्तूयते ग्राम्यकथाविघातः ।
निषेव्यमाणोऽनुदिनं मुमुक्षो-
र्मतिं सतीं यच्छति वासुदेवे ॥५।१२।१२।१३ ।

२६ । अहो नृजन्माखिलजन्मशोभनं
किं जन्मभिस्त्वपरैरप्यमुष्मिन् ।

१४।२५ । न केवलं तपोभ्रंशाशङ्का विद्यते मनसोऽनवस्थितत्वे नान्यैर्विविधैरुपायैर्भगवत्प्राप्तिः । एकोहि साधुसङ्गोभगवत्प्रसङ्गेन तस्मिन् रतिं जनयति, तया च मनसः स्थैर्य्यमुपतिष्ठते, सुतरां सएव सेव्य इत्याह रहूगणं प्रति ब्राह्मणवाक्येन रहूगणेति, यत्रेति । हे रहूगण, महत्पादरजोभिषेकं विना न तपसा, न च इजया यज्ञेन, न निर्व्वापणात् अन्नादिविभजनात्, न गृहात् गार्हस्थधर्म्मपरोपकारादेः, न छन्दसा वेदाभ्यासेन, न एव जलाग्निसूर्य्यैः उपासितैः एतत् सर्व्वभूताश्रयं परं सत्यं याति प्राप्नोति ; यत्र महत्सेवायां ग्राम्यकथाविघातः ग्राम्यकथानां विघातः यस्मात् तादृशः उत्तमश्लोकगुणानुवादः उत्तमश्लोकस्य भगवतः गुणानुवादः गुणानां भक्तवात्सल्यादीनाम् अनुवादः पुनः पुनः कथनं प्रस्तूयते । अनुदिनं प्रतिदिनं निषेव्यमाणः स गुणानुवादः मुमुक्षोः मोक्षकामस्य वासुदेवे सर्व्वाश्रयभगवति सतीं मतिं यच्छति ददाति ।

२६ । रहूगणस्य सत्सङ्गलाभात् किमभवत् तद्वाक्येन तदुपन्यस्य

न यद्धृषीकेशयशःकृतात्मनां
महात्मनां वः प्रचुरः समागमः ॥

२७ । न ह्यद्भुतं त्वच्चरणाब्जरेणुभि-
र्हतांहसो भक्तिरधोक्षजेऽमला ।
मौहूर्त्तिकाद्यस्य समागमाच्च मे
दुस्तर्कमूलोपहतोऽविवेकः ॥५।१३।२१।२२।

२८ । जरायुजं स्वेदजमण्डजोद्भिदं
चराचरं देवर्षिपितृभूतमैन्द्रियम् ।
द्यौः खं क्षितिः शैलसरित्समुद्र-
द्वीपग्रहर्क्षेत्यभिधेय एकः ॥५।१८।३२ ।

साधुसङ्गस्य महिमानं दर्शयति अहो इति । यत् यदि हृषीकेशयशः-कृतात्मनां सर्व्वेन्द्रियनियन्तुः यशसा कृतः शोधितः आत्मा यैः तेषां महात्मनां वः युष्माकं प्रचुरः समागमः न स्यात्, तदा अमुष्मिन् परत्र अपरैः देवादिरूपेण जन्मभिः किम् ? अहो नृजन्म मानवजन्म अखिलजन्मशोभनम् अखिलेषु देवादिरूपेषु जन्मसु शोभनं श्रेष्ठम् । तत्र सत्सङ्गलाभसम्भवादिति भावः ।

२७ । नहीति । तच्चरणाब्जरेणुभिः तेषां महात्मनां पादरेणुभिः हतांहसः हतम् अंहः पापं यस्य तस्य अधोक्षजे भगवति अमला भक्तिः भवति इति न हि अद्भुतम् आश्चर्य्यम् । कथं न ? यस्य तव मौहूर्त्तिकात् मुहूर्त्तमात्रभवात् समागमात् अपि मे मम दुस्तर्कमूलः दुस्तर्केण लब्धमूलः अविवेकः अपहतः विनष्टः ।

२८ । मत्स्यकूर्म्मादिषु भगवदवतरणं पश्यन्तः पौराणिकाः तत्तदवतारकथाः कथमवतारयन्ति तत्कारणं दर्शयितुं तेषु तेषु चैकस्य

२८। न यत्र वैकुण्ठकथासुधापगा
न साधवो भागवतास्तदाश्रयाः।
न यत्र यज्ञेशमखा महोत्सवाः
सुरेशलोकोऽपि न वै स सेव्यताम् ॥५।१८।२४

प्रत्यक्षीकरणार्थञ्चाह जरायुजमिति। जयायुजं, स्वेदजम्, अण्डजोद्भिदम् अण्डजम् उद्भिदं च, चराचरं स्थावरजङ्गमं, देवर्षिपितृभूतं देवर्षयः पितरः भूतं च प्राणिमात्रम्, ऐन्द्रियम् इन्द्रियसम्भूतं ज्ञानं शब्दस्पर्शादि, द्यौः स्वर्गः, खम् आकाशः, क्षितिः पृथिवी, शैलसरित्समुद्रद्वीपग्रहर्क्षम् शैलः सरित् समुद्रः द्वीपः ग्रहः ऋक्षम् इति बहुरूपम् एषाम् अभिधेयः प्रतिपाद्यः मूलभूतः एकः परमेश्वरः। जरायुजादि सर्व्वं भिन्नभिन्ननामरूपेण परिचितं तमेकमेव प्रतिपादयति तत्तन्मूलभूतत्वादिति संहितार्भिप्रायः। प्रथमोपासनार्थं जरायुजादिरूपकल्पनेति वैष्णवाभिप्रायः।

'यस्मिन्नसंख्येयविशेषनामरूपाकृती कविभिः कल्पितेयम्।'

इति परवर्त्तिपद्यं श्रीमज्जीवेनातो व्याख्यातम्—'इयं संख्या जरायुजादिरूपा कल्पिता, प्रथमोपासनार्थं तद्रूपत्वेनारोप्यैवोपदिष्टा' इति।

२८। भगवत्कथानिरताः साधवो यत्र न सन्ति, चेत्तत् स्वर्गोऽपि स्यात् न तत्र निवसेदित्याह न यत्रेति। न यत्र वैकुण्ठकथासुधापगा वैकुण्ठः सृज्यशक्तीनां विश्लेषावरोधकः—

यया संश्लेषिता भूमिरद्भिः व्योम च वायुना।
वायुश्च तेजसा सार्द्धं वैकुण्ठत्वं ततो मम॥

इति स्मरणात्—तस्य कथा एव सुधापगा सुधासरित्; न यत्र तदाश्रयाः तत्कथाश्रयाः भागवताः भगवत्परायणाः साधवः; न यत्र महोत्सवाः महान्तः कृत्याद्युत्सवाः येषु तादृशाः यज्ञेशमखाः भगवदर्च्चनाः,—स सुरेशलोकोऽपि ब्रह्मलोकोऽपि लोकः न सेव्यताम् न आश्रीयताम्।

३०। भूद्वीपवर्षसरिदद्रिनभःसमुद्र-
पातालदिङ्नरकभागणलोकसंस्था।
गीता मया तव नृपाद्भुतमीश्वरस्य
स्थूलं वपुः सकलजीवनिकायधाम॥

५।२६।३८।

३१। नारायणपराः सर्व्वे न कुतश्चन बिभ्यति।
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः॥६।१७।२८।

३०। निखिलं जगत् भगवतः स्थूलतनुत्वेन ग्राह्यं साधनार्थिभिरिति दर्शयति परीक्षितं प्रति शुकवाक्येन भूद्वीपेति। हे नृप, तव सन्निधौ भू-द्वीप-वर्ष-सरिद्-अद्रि-नभः-समुद्र-पाताल-दिङ्-नरक-भागण-लोकसंस्था मया गीता। यदेषा सकलजीवनिकायधाम सकालानां जीवनिकायानां प्राणिसमूहानां धाम आश्रयभूतं स्थूलं वपुः।

३१। कथं वा नारायणपरायणजनाः सत्यपि भयकारणे न बिभ्यति तत्कारणमाह नारायणेति। नारायणपराः सर्व्वे न कुतश्चन बिभ्यति, कथम्? ते स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः तुल्यः अर्थः प्रयोजनमिति द्रष्टुं शीलं येषाम्। 'श्रीनारायणं विना अन्यत्र हानोपादानदृष्टिराहित्यादपवर्ग इव स्वर्ग इव नरकेऽपि तुल्यमेकमेवार्थं नारायणरूपपुरुषार्थं द्रष्टुमनुभवितुं शीलं येषां ते' इति श्रीमज्जीवः। अत्रेदं विवेच्यम्—'भयं द्वितीयाभिनिवेशतः स्यात्' इति न्यायेन भगवन्तं विना विषयान्तरेषु निविष्टचित्ता जनाः सर्व्वतो भयमुपलभन्ते। यदा हि ते भगवदभिनिविष्टचित्तास्तदा सर्व्वत्र तद्राज्यं पश्यन्तस्तच्छासनानुसरणाह्लादवशात् यत्र यत्र तेन ते स्थाप्यन्ते, तत्र तत्र तमुपलभ्य स्वर्गादिषु तुल्यदर्शिनो भवन्ति। भगवदभिनिवेशानभिनिवेशभेदतो विषयिणां विषयग्रहणतारतम्यं दर्शयितुं पद्यमिदमध्यायेऽस्मिन्नुपन्यस्तम्।

३२। स उत्तमश्लोकपदारविन्दयो-
र्निषेवयाऽकिञ्चनसङ्गलब्धया।
तन्वन् परां निर्वृतिमात्मनो मुहु-
र्दुःसङ्गदीनस्य मनः शमं व्यधात् ॥७।४।४२।

३३। नैषां मतिस्तावदुरुक्रमाङ्घ्रिं
स्पृशत्यनर्थापगमो यदर्थः।
महीयसां पादरजोभिषेकं
निष्किञ्चनानां न वृणीत यावत् ॥७।५।३२।

३४। तस्मादमूस्तनुभृतामहमाशिषोज्ञ-
आयुः श्रियं विभवमैन्द्रियमाविरिञ्चात्।

३२। सत्सङ्गेन स्वयं कृतकृत्योऽन्यानपि कृतकृत्यान् करोतीत्याह प्रह्लाददृष्टान्तेन स उत्तम इति। अकिञ्चनसङ्गलब्धया अकिञ्चनस्य भगवद्भक्तस्य सङ्गेन लब्धया उत्तमश्लोकपदारविन्दयोः निषेवया स प्रह्लादः मुहुः आत्मनः स्वस्य परां निर्वृतिं तन्वन् दुःसङ्गेन भगवद्विमुख-जनसङ्गेन दीनस्य अन्यस्य मनः शमं शान्तं व्यधात् अकरोत्।

३३। बहुशास्त्राध्ययनेन विदिततत्त्वानामपि मनो न भगवच्चर-णानुरक्तं भवति यावन्न महत्सङ्गलाभ इत्याह प्रह्लादवाक्येन नैषामिति। श्रुतिवाक्यतो ज्ञातेऽपि निष्किञ्चनानां विरतविषयाभिमानानां महीयसां महत्तमानां पादरजोभिषेकं यावत् न वृणीत, तावत् एषां मतिः उरुक्रमस्य विचित्रशक्तेः अङ्घ्रिं चरणं न स्पृशति न प्राप्नोति ; यदर्थः यस्याः अङ्घ्रिस्पर्शिन्याः मतेः अर्थः प्रयोजनम् अनर्थापगमः अनर्थस्य भगवच्चरणसंस्पर्शविघ्नस्य अपगमः।

३४। सत्सङ्गं विना साधकानां नान्यत्किञ्चनाभिलषणीयमस्ती-

नेच्छामि ते विलुलितानुरुविक्रमेण
कालात्मनोपनय मां निजभृत्यपार्श्वम् ॥

७।९।२४ ।

३५ । एवं जनं निपतितं प्रभवाहिकूपे
कामाभिकाममनु यः प्रपतन् प्रसङ्गात् ।
कृत्वात्मसात् सुरर्षिणा भगवन् गृहीतः
सोऽहं कथं नु विसृजे तव भृत्यसेवाम् ॥

७।९।२८ ।

त्याह तद्वाक्येन तस्मादिति । तस्मात् महैश्वर्य्यसम्पन्नस्य पितुर्निरास-दर्शनात् तनुभृतां देहिनां अमूः आशिषः भोगान् यः तत् परिपाकं विद्वान् अहम् आयुः श्रियं विभवम् आविरिञ्च्यात् ब्रह्मणो भोगम् अभिव्याप्य ऐन्द्रियम् इन्द्रियैः भोग्यं न इच्छामि । ते तव परमात्मनः कालात्मना कालस्वरूपेण उरुविक्रमेण महाशक्त्या विलुलितान् योगविभवान् न इच्छामि । मां निजभृत्यपार्श्वम् उपनय ।

३५ । सत्सङ्गवशात् कुलगतदोषोऽपि क्षीयते भगवद्दर्शनयोग्यता च भवति, अतएव न जातु महतां सेवा परित्याज्येत्याह तद्वाक्येन एवमिति ।

क्वाहं रजःप्रभव ईश तमोधिकेऽस्मिन् जातः

इत्येवं प्रभवाहिकूपे प्रभवएव तमःप्रचुरजन्मस्थानमेव अहिकूपः सर्पयुक्तः कूपः तस्मिन् निपतितं कामाभिकामं कामान् अभितः कामयमानं जनम् अनु प्रसङ्गात् तत्प्रसङ्गात् प्रपतन् सोऽहं सुरर्षिणा नारदेन आत्मसात् कृत्वा, हे भगवन्, त्वया गृहीतः । एवं सति कथं नु तव भृत्यसेवां विसृजे त्यजामि ।

३६ । त्वं वायुरग्निरवनिर्वियदम्बुमात्राः
प्राणेन्द्रियाणि हृदयं चिदनुग्रहश्च ।
सर्व्वं त्वमेव सगुणो विगुणश्च भूमन्
नान्यत्त्वदस्त्यपि मनोवचसा निरुक्तम् ॥

७।६।४८ ।

३७ । या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा ।
हर्य्यात्मना हरेर्लोके पत्या श्रीरिव मोदते ॥

७।११।२९ ।

३६ । 'सर्व्वं समाप्नोषि ततोऽसि सर्व्वः' इति न्यायेन सर्व्वात्मकत्वं प्रदर्शयन्ती तत्र तत्र भगवत्त्वमनुसन्धातुमाह तद्वाक्येन त्वमिति । त्वं वायुः, अग्निः, अवनिः क्षितिः, वियत् आकाशम्, अम्बु जलम्, मात्राः पञ्चतन्मात्रं, प्राणेन्द्रियाणि प्राणाः च इन्द्रियाणि च, हृदयं, चित् चित्तम्, अनुग्रहः अहङ्कारः देवतावर्गोवा—'स्वसन्मुखीकरणशक्तिः' इति श्रीमज्जीवः, हे भूमन्, सगुणः स्थूलः, विगुणः सूक्ष्मः, सर्व्वं त्वम् एव । मनोवचसा निरुक्तं प्रकाशितं त्वत् त्वत्तः अन्यत् न अस्ति ।

३७ । दम्पत्योः सम्बन्धं प्रदर्शयितुमाह या पतिमिति । या पत्नी श्रीरिव तत्परा सती हरिभावेन पतिं भजेत्, हर्य्यात्मना हरिस्वरूपेण पत्या सह श्रीरिव सा हरेः लोके मोदते । पत्नी यदि पत्यौ भगवदधिष्ठानं पश्यन्ती तं तद्भावेन सेवेत, पतिः केन भावेन वा पत्नीं पश्येदित्यत्र संहितायाम् अस्यां को वा सिद्धान्त इति जिज्ञासायां पत्नी पतिसन्निधौ 'पत्नग्रामर्द्धइवात्मनो' (४।१६।१७) इति सिद्धान्तः स्मारयति मनुवचनमिदं—

द्विधाकृत्वात्मनोदेहमर्द्धेन पुरुषोऽभवत् ।
अर्द्धेन नारी तस्यां स विराजमसृजत् प्रभुः ॥ (१।३२) इति ।

३८। यावदर्थमुपासीनो देहे गेहे च पण्डितः ।
विरक्तोरक्तवत्तत्र नृलोके नरतां न्यसेत् ॥

३९। ज्ञातयः पितरौ पुत्रा भ्रातरः सुहृदोऽपरे ।
यद्वदन्ति यदिच्छन्ति चानुमोदेत निर्म्ममः ॥

'विराजमसृजत् प्रभुः' इत्यंशः पुरुषसूक्तेनास्य सम्बन्धं दर्शयति ।

जगृहे पौरुषं रूपं भगवान् महदादिभिः ।
सम्भूतं षोडशकलमादौलोक सिसृक्षया ॥ (१।१)

इत्यनेन वैराजरूपमुक्त्वा—

एतन्नानावताराणां निधानं बीजमव्ययम् ।
यस्यांशांशेन सृज्यन्ते देवतिर्य्यङ्नरादयः ॥ (१।३।५)

इत्युक्तत्वात् पतिः पत्नी च वैराजांशएव । ततः पत्यौ पत्न्याञ्च सर्व्वान्तर्यामिणमाश्रित्य भगवद्भावदर्शनं शास्त्रसिद्धम् । शाक्ता यथा शक्तिमेव हरिहराद्यपेक्षया श्रेष्ठत्वेन गृहीत्वा नारीषु तस्या अवतरणं पश्यन्ति, न तथा वैष्णवाः । ते तु समत्वेन पुरुषञ्च नारीञ्च भगवद्भावेन गृह्णन्ति तद्यथा वैष्णवे—

देवतीर्य्यङ्मनुष्यादौ पुंनाम्नि भगवान् हरिः ।
स्त्रीनाम्नि लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम् ॥ (१अं, ८अ, ३२श्लो) इति ।
अर्थो विष्णुरियं वाणी नीतिरेषा नयो हरिः ।
बोधो विष्णुरियं बुद्धिर्धर्म्मोऽसौ सत्क्रिया त्वियम् ॥

इत्यादिविशेषस्तत्रैव द्रष्टव्यः । शक्तिशक्तिमतोरभेदएव वैष्णवसिद्धान्तः ।

३८। साधारणतो विषयसम्बन्धान्निर्णेतुमाह यावदर्थमिति । यावदर्थं प्रयोजनानुरूपम् उपासीनो भुञ्जानः—भोगादि वस्तूनीति शेषः—पण्डितः समदर्शी देहे गेहे च विरक्तोरक्तवत् अन्तरनासक्तः बहिरासक्तवत् नृलोके नरलोके नरतां पुरुषत्वं पुरुषकारं न्यसेत् आविष्कुर्य्यात् ।

३९। ज्ञातय इति । ज्ञातयः स्वजनाः, पितरौ मातापितरौ,

४०। दिव्यं भौमं चान्तरिक्षं वित्तमच्युतनिर्म्मितम्।
तत्सर्व्वमुपभुञ्जान एतत् कुर्य्यात् स्वतोबुधः॥
४१। यावद्भ्रियेत जठरं तावत् स्वत्वं हि देहिनाम्।
अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति॥
७।१४।५—८।
४२। साधुषु प्रहितं तेजः प्रहर्त्तुः कुरुतेऽशिवम्।
तपोविद्या च विप्राणां निःश्रेयसकरे उभे।
तेएव दुर्व्विनीतस्य कल्पेते कर्त्तुरन्यथा॥८।४।७०।

पुत्राः तनयाः अपरे सुहृदः यत् वदन्ति, यत् इच्छन्ति निर्म्मम: अनासक्तः अव्यग्रः सन् अनुमोदेत। धर्म्माविरुद्धभावेनैवानुमोदेत, अन्यथा 'यो वक्ति न्यायरहितम्' (८।२१) इत्यादि शास्त्रं व्याकुप्येत।

४०। दिव्यमिति। दिव्यं वृष्ट्यादिभिर्जातं धान्यादि, भौमम् आकरादिप्राप्तं रत्नादि, आन्तरिक्षम् अकस्मात् प्राप्तम्, तत् सर्व्वम् अच्युतनिर्म्मितं वित्तम स्वयं भगवता दत्तम्। सुतरां तत् सर्व्वम् उपभुञ्जानः व्यवहारविषयं कुर्व्वाणः एतत् पूर्व्वोक्तं कर्त्तव्यनिचयं स्वतः स्ववित्तेन कुर्य्यात्।

४१। यावदिति। यावत् यावता जठरं भ्रियेत पूर्य्येत, देहिनां तावत् स्वत्वम्। यो जनः अधिकम् उदरभरणात् अधिकम् अभिमन्येत आत्मीयमिति मन्येत स स्तेनः परस्वापहारकः दण्डम् अर्हति, परेषां ग्राह्यस्यात्मसात्करणात्।

४२। तपआदिभिरुद्भूताभिमानानां साध्ववमानना तेषामश्रेयसाय कल्पत इत्याह साधुष्विति। साधुषु प्रहितं तेजः प्रहर्त्तुः द्रोग्धुः अशिवम् अकल्याणं कुरुते। कथं साधुद्रोहमुपतिष्ठते तत्कारणमाह— तपः विद्या च उभे विप्राणां पूर्णकृत्यानां निःश्रेयसकरे। दुर्व्विनीतस्य

४३। अहो अनन्तदासानां महत्त्वं दृष्टमद्य मे।
कृतागसोऽपि यद्राजन् मङ्गलानि समीहसे॥

४४। दुष्करः कोनु साधूनां दुस्त्यजो वा महात्मनाम्।
यैः संगृहीतोभगवान् सात्त्वतामृषभो हरिः॥

९।५।१५।१६।

४५। साधवो न्यासिनः शान्ता ब्रह्मिष्ठा लोकपावनाः।
हरन्त्यघं तेऽङ्गसङ्गात् तेष्वास्ते ह्यघभिद्धरिः॥९।९।६

४६। यदा न कुरुते भावं सर्व्वभूतेष्वमङ्गलम्।
समदृष्टेस्तदा पुंसः सर्व्वाः सुखमयादिशः॥

९।१९।१५।

अभिमानपरवशस्य ते तपोविद्या च कर्त्तुः अन्यथा अनिश्रेयसाय कल्पेते।

४३।४४। भगवद्दासानां महत्त्वं कुतस्तद्दर्शयति अंबरीषं प्रति दुर्व्वाससो वाक्येन अहो इति दुष्कर इति। अहो, अद्य अनन्तदासानां भगवद्भृत्यानां महत्त्वं दृष्टम्। यत् यस्मात् हे राजन्, कृतागसोऽपि कृतापराधस्यापि त्वदमङ्गलमीहमानस्यापि मे मम मङ्गलानि समीहसे आकाङ्क्षसि। साधूनां को नु दुष्करः, महात्मनां को नु वा दुस्त्यजः, यैः साधुभिः सात्त्वताम् ऋषभः पतिः हरिः संगृहीतः आत्मसात्कृतः।

४५। साधुसंस्पर्शात् तद्धृदयस्थभगवत्संस्पर्शो जायते, अतः पापापनयो भवतीत्याह साधव इति। साधवः असाध्यसाधनशीलाः, न्यासिनः कर्म्मतत्फलानासक्ताः, शान्ताः शुद्धान्तःकरणाः, ब्रह्मिष्ठाः ब्रह्मनिष्ठाः, लोकपावनाः लोकानां शुद्धिहेतवः। ते अङ्गसङ्गात् अघं पापं हरन्ति, हि यस्मात् तेषु अघभित् पापनाशनः हरिः आस्ते।

४६। सर्व्वभूतेषु कीदृग्व्यवहारः सुखाय भवति तदाह यदेति।

४७। भवापवर्गो भ्रमतो यदा भवे-
ज्जनस्य तर्ह्यच्युतसत्समागमः।
सत्सङ्गमो यर्हि तदैव सद्गतौ
परावरेशे त्वयि जायते रतिः ॥१०।५१।५५।

४८। नाग्निर्न सूर्य्यो न च चन्द्रतारका
न भूर्जलं खं श्वसनोऽथ वाङ्मनः।
उपासिता भेदकृतो हरन्त्यघं
विपश्चितो घ्नन्ति मुहूर्त्तसेवया ॥

सर्व्वभूतेषु यदा न अमङ्गलं भावं रागद्वेषादिवैषम्यं कुरुते, तदा समदृष्टेः समदर्शिनः पुरुषस्य तस्य सर्व्वाः दिशः सुखमयाः।

४७। कदा सत्सङ्गो जायते तदाह मुचुकुन्दस्तोत्रेण भवापवर्ग इति। संसारपथे भ्रमतो जनस्य यदा भवापवर्गः भवस्य संसारस्य अपवर्गः अन्तः भवेत्, तर्हि तदा, हे अच्युत, सत्समागमः साधुसङ्गः भवेत्। साधुसङ्गे किं भवति? यर्हि यदा सत्सङ्गमः तदा एव सद्गतौ सतां गतौ परावरेशे कार्य्यकारणनियन्तरि त्वयि रतिः अनुरागो जायते।

४८। अग्न्याद्युपासकानां न ते पापमोचकाः किन्तर्हि साधव इत्याह नाग्निरिति। न अग्निः, न सूर्य्यः, न च चन्द्रतारकाः, न भूः, जलं, खम् आकाशम्, श्वसनः वायुः, अथ वाक्, मनः, उपासिताः अन्तर्यामित्वा नैकत्वेन किन्तर्हि भिन्नभिन्नदेवबुद्ध्या आराधिताः भेदकृतः तादृशभेदबुद्धिमतो—'भगवदधिष्ठानत्वेनाभिन्नेष्वप्येषु प्रत्येकमीश्वरबुद्ध्या भेदं कुर्व्वतः'—श्रीमत्सनातनः—अघं पापं हरन्ति नाशयन्ति, विपश्चितः साधवः मुहूर्त्तसेवया पापं घ्नन्ति उन्मूलयन्ति।

४९। यस्यात्मबुद्धिः कुणपे त्रिधातुके
स्वधीः कलत्रादिषु भौम इज्यधीः।
यत्तीर्थबुद्धिः सलिले न कर्हिचित्
जनेष्वभिज्ञेषु स एव गोखरः॥१०।८४।१२।१३

५०। खं वायुमग्निं सलिलं महीञ्च
ज्योतींषि सत्त्वानि दिशो द्रुमादीन्।
सरित्समुद्रांश्च हरेः शरीरं
यत् किञ्च भूतं प्रणमेदनन्यः॥११।२।४१।

५१। सर्व्वभूतेषु यः पश्येद्भगवद्भावमात्मनः।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः॥

४९। यस्येति। त्रिधातुके वातपित्तश्लेष्ममये कुणपे शरीरे—'कुणपः शवः तत्तुल्यदेह एव कुणपस्तस्मिन्'—श्रीमत्सनातनः—यस्य आत्मबुद्धिः, कलत्रादिषु दारादिषु स्वधीः आत्मीयबुद्धिः, भौमे मृद्दारुशैलाभूमिद्रव्यमयप्रतिमादौ इज्यधीः पूज्यबुद्धिः, सलिले यत् यस्य तीर्थबुद्धिः, अभिज्ञेषु तत्त्ववित्सु जनेषु कर्हिचित् कदाचित् अपि न तादृशी बुद्धिः, स एव गोखरः गवां तृणादिभारवाहकः गर्द्दभः।

५०। आकाशादिनिखिलविषयान् भगवदधिष्ठानत्वेन पश्यतां तेषु सम्माननी कर्त्तव्येत्याह खमिति। खम् आकाशं, वायुम् अनिलम्, सलिलं जलं, महीं क्षितिं च, ज्योतींषि सूर्य्यादीन्, सत्त्वानि प्राणिनः, दिशः, द्रुमादीन् वृक्षादीन्, सरित्समुद्रान् च, यत् किञ्च भूतं वस्तु हरेः शरीरं अंश इव अंश इतिवत् शरीरमिव शरीरम्—'अधिष्ठानम्' इति श्रीमद्विश्वनाथः—मत्वा अनन्यः न विद्यते अन्यः हरिं विना यस्य सः प्रणमेत्।

५१। विषयिणामास्वादयावनाय भगवद्भक्तएव सर्व्वोत्तमविषयः,

५२। ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च।
प्रेम मैत्री कृपोपेक्षा यः करोति स मध्यमः॥

५३। अर्च्चायामेव हरये पूजां यः श्रद्धयेहते।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः॥

५४। गृहीत्वापीन्द्रियैरर्थान् यो न द्वेष्टि न हृष्यति।
विष्णोर्मायामिदं पश्यन् स वै भागवतोत्तमः॥

अतस्तल्लक्षणान्याह सर्व्वभूतेष्विति। सर्व्वभूतेषु यः आत्मनः स्वस्य भगवद्भावं ब्रह्मभावेन समन्वयं पश्येत्, तथा ब्रह्मरूपे आत्मनि भूतानि च यः पश्येत्, यद्वा आत्मनो हरेः सर्व्वभूतेषु मशकादिष्वपि नियन्तृत्वेन वर्त्तमानस्य भगवद्भावं निरतिशयैश्वर्य्यमेव पश्येत्, तथा भगवति अशेषमितैश्वर्य्ये आत्मनि हराविव भूतानि च पश्येत्, स भागवतोत्तमः।

५२। ईश्वर इति। ईश्वरे प्रेम, तदधीनेषु भक्तेषु मैत्री, बालिशेषु मूर्खेषु भक्तिविमुखेषु कृपा, द्विषत्सु च उपेक्षा, तेषु तेषु ताः ताः यः करोति स मध्यमः भागवतः।

५३। अर्च्चायामिति। अर्च्चायां प्रतिमायाम् एव यः श्रद्धया हरये पूजाम् ईहते, तद्भक्तेषु अन्येषु च न करोति, स प्राकृतः इतरः अधमः भक्तः स्मृतः।

विवर्णः पामरो नीच' प्राकृतश्च पृथग्जनः।
निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च स'॥

इत्यमरः। 'प्राकृतः प्रकृतिः प्रारम्भः अधुनैव प्रारब्धभक्तिः' इति श्रीमच्छ्रीधरः। 'भगवान् प्राकृत इव' (१।१।३५) इत्यादावस्यामन्यत्र इतर इति प्रसिद्धार्थएव प्राकृतशब्दस्य व्यवहारः।

५४। पुनरष्टभिः श्लोकैरभ्यर्हितत्वादुत्तमभागवतस्यैव लक्षणान्याह गृहीत्वापीति। इदम् विष्णोः परमपुरुषस्य मायां विचिन्त्-

५५ । देहेन्द्रियप्राणमनोधियां यो
जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः ।
संसारधर्म्मैरविमुह्यमानः
स्मृत्या हरेर्भागवतप्रधानः ॥

५६ । न कामकर्म्मबीजानां यस्य चेतसि सम्भवः ।
वासुदेवैकनिलयः स वै भागवतोत्तमः ॥

५७ । न यस्य जन्मकर्म्माभ्यां न वर्णाश्रमजातिभिः ।
सज्जतेऽस्मिन्नहंभावो देहे वै स हरेः प्रियः ॥

शक्तिविलासं पश्यन् यः इन्द्रियैः अर्थान् गृहीत्वा अपि न द्वेष्टि, न हृष्यति, स वै भागवतोत्तमः ।

५५ । देहेति । देहेन्द्रियप्राणमनोधियां जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः देहस्य जन्माप्ययौ, प्राणस्य क्षुत्, मनसः भयं, बुद्धेः तर्षः तृष्णा, इन्द्रियाणां कृच्छ्रं श्रमः—तैः संसारधर्म्मैः यः हरेः स्मृत्या अविमुह्यमानः स भागवतप्रधानः ।

५६ । न कामेति । यस्य चेतसि कामकर्म्मबीजानां कामाः च कर्म्माणि च, बीजानि च वासनाः तेषां न सम्भवः, यः वासुदेवैकनिलयः वासुदेवः एकः निलयो यस्य, स वै भागवतोत्तमः ।

५७ । न यस्येति । जन्मकर्म्माभ्यां जन्म सत्कुलं, कर्म्म तप आदि ताभ्यां, वर्णाश्रमजातिभिः वर्णाः ब्राह्मणादयः, आश्रमाः ब्रह्मचर्य्यादयः, जातयः मूर्द्धाभिषिक्ताम्बष्ठादयः, तैः देहे अहम्भावः अहङ्कारः न सज्जते न भवति स वै हरेः प्रियः । अवस्थैषा भगवदनुग्रहसम्भूता, तद्यथा—

जन्मकर्म्मवयोरूपविद्यैश्वर्य्यधनादिभिः ।
यद्यस्य न भवेत् स्तम्भस्तत्रायं मदनुग्रहः ॥ (८।२२।२६) इति ।

५८। न यस्य स्वः पर इति वित्तेष्वात्मनि वा भिदा।
सर्व्वभूतसमः शान्तः स वै भागवतोत्तमः॥

५९। त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृति-
रजितात्मसुरादिभिर्विमृग्यात्।
न चलति भगवत्पदारविन्दा-
ल्लवनिमिषार्द्धमपि यः स वैष्णवाग्र्यः॥

६०। भगवत उरुक्रमाङ्घ्रिशाखानख-
मणिचन्द्रिकया निरस्ततापे।
हृदि कथमुपसीदतां पुनः स
प्रभवति चन्द्र इवोदितेऽर्कतापः॥

५८। न यस्येति। वित्तेषु आत्मनि वा यस्य न स्वः परः इति भिदा भेदबुद्धिः, सर्व्वभूतसमः सर्व्वभूतेषु समः समदर्शी, शान्तः संयतेन्द्रियः, स वै भागवतोत्तमः।

५९। त्रिभुवनेति। अकुण्ठस्मृतिः अकुण्ठा प्रलोभयितुमशक्या स्मृतिः यस्य तादृशः यः अजितात्मसुरादिभिः अजिते भगवति एव आत्मा येषां तादृशैः सुरादिभिः विमृग्यात् अन्वेषणीयात् भगवत्पदारविन्दात् भगवतः पादपद्मात् त्रिभुवनविभवहेतवे अपि त्रैलोक्यराज्यार्थम् अपि लवनिमिषार्द्धमपि लवार्द्धमपि निमिषार्द्धमपि न चलति न विचलितो भवति, स वैष्णवाग्र्यः परमपुरुषोपासकश्रेष्ठः।

६०। अभिलाषसन्तप्तचित्तानामेव विषयाभिसन्धिना विचलनं भवति, भगवद्भक्तिपरायणानां न तज्जातु सम्भवतीत्याह भगवतः इति। भगवतः उरुक्रमाङ्घ्रिशाखानखमणिचन्द्रिकया उरुविक्रमौ च तौ अङ्घ्री च तयोः शाखाः अङ्गुलयः तासु नखानि तान्येव मणयः तेषां चन्द्रिका शीतला दीप्तिः तया निरस्तत्तापे निरस्ताः तापाः यस्मिन् तादृशे उप-

६१ । विसृजति हृदयं न यस्य साक्षा-
द्धरिरवशादभिहितोऽप्यघौघनाशः ।
प्रणयरसनया धृताङ्घ्रिपद्मः
स भवति भागवतप्रधान उक्तः ॥

११।२।४५—५५ ।

६२ । भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः ।
तद्विद्वान्न चलेन्मार्गादन्वशिक्षं क्षितेर्व्रतम् ॥

६३ । शश्वत् परार्थसर्व्वेहः परार्थैकान्तसम्भवः ।
साधुः शिक्षेत भूभृत्तो नगशिष्यः परात्मताम् ॥

सीदतां भजतां हृदि—चन्द्रे उदिते अर्कतापः इव—कथं स तापः प्रभवति ।

६१ । विसृजतीति । अवशात् अवशेन अभिहितोऽपि कीर्त्तितोऽपि अघौघनाशः पापनिचयहरणः हरिः प्रणयरसनया धृताङ्घ्रिपद्मः प्रणयरसनया प्रेमदाम्ना धृतम् अङ्घ्रिपद्मं यस्य सः तादृशः सन् साक्षात् यस्य हृदयं न विसृजति न मुञ्चति स भागवतप्रधानः उक्तः भवति ।

६२ । पृथिव्यादिभ्यो विषयेभ्यो विषयिणां तत्त्वदर्शिनां शिक्षितव्यानि दिग्दर्शनमात्रेण निर्द्दिशति अवधूतवाक्यैः भूतैरिति । दैववशानुगैः स्वभावकर्म्मानुरूपप्रेरणावशवर्त्तिभिः भूतैः आक्रम्यमाणः पीड्यमानः अपि धीरः तत् दैववशवर्त्तित्वं विद्वान् जानन् मार्गात् न चलेत् इति व्रतं नियमं क्षितेः पृथिव्याः अन्वशिक्षम् अहमवधूतः ।

६३ । शश्वदिति । साधुः भूभृत्तः पर्व्वतात् शश्वत् सर्व्वदा परार्थसर्व्वेहः परार्थाः परोपकारार्थाः सर्व्वाः ईहाः यस्य सः, परार्थैकान्तसम्भवः परार्थं एव एकान्ततः सम्भवो जन्म यस्य सः, एवम्भूतः स्यात् । तच्छिक्षया नगशिष्यः वृक्षशिष्यः सन् स परात्मतां परेष्वर्पितात्मतां

६४। प्राणवृत्त्यैव संतुष्येन्मुनिर्नैवेन्द्रियप्रियैः।
ज्ञानं यथा न नश्येत नावकीर्य्येत वाङ्मनः॥
६५। विषयेष्वाविशन् योगी नानाधर्म्मेषु सर्व्वतः।
गुणदोषव्यपेतात्मा न विषज्जेत वायुवत्॥
६६। पार्थिवेष्विह देहेषु प्रविष्टस्तद्गुणाश्रयः।
गुणैर्न युज्यते योगी गन्धैर्वायुरिवात्मदृक्॥

शिक्षेत। पर्व्वतस्य वृक्षनिर्भरप्रसरक्रियाः परार्था एव, अतएव ततः तादृशीं परार्थतां शिक्षेत। वृक्षो हि परैश्चोद्दगर्पितात्मा यत् हेतुरपि पार्श्वगतां छायां नोपसंहरते फलपुष्पदानेन च तं तर्पयति। अतएव ततः तादृशीं परात्मतां शिक्षेत।

६४। प्राणवृत्त्येति। मुनिः प्राणवृत्त्या एव—प्राणोहि यथा आहारमात्रेणैव वर्त्तते रूपरसादीन् इन्द्रियविषयांस्तु नापेक्षते तथा—प्राणधारणयोग्येनाहारमात्रेणैव सन्तुष्येत्, न इन्द्रियप्रियैः विषयैः सन्तुष्येदिति शेषः। कथमेवं कुर्य्यात्? ज्ञानं यथा न नश्येत—प्राणधारणयोग्याहाराग्रहणे मनो वैकल्येन यथा ज्ञाननाशः न स्यात्, वाङ्मनः न अवकीर्य्येत विक्षिप्येत—इन्द्रियप्रियवस्तुलालसया वाङ्मनसोरतिचाञ्चल्यं नोपतिष्ठेत। शिक्षात्र प्राणवृत्तितः।

६५। विषयेष्विति। नानाधर्म्मेषु शीतोष्णादिधर्म्मेषु विषयेषु सर्व्वतः आविशन् योगी वायुवत् गुणदोषव्यपेतात्मा विषयाणां गुणैः दोषैः च व्यपेतात्मा अविमृष्टस्वरूपः न विषज्जेत न आसक्तः भवेत्। अत्र वायोः शिक्षा। यद्यपि शीतोष्णादयो वायौ संक्रामिता लक्ष्यन्ते तथापि न तैः तस्य स्वरूपविच्युतिः। एवं विषयान् भुञ्जानः अपरैर्विषयासक्तोऽयमिति लक्षितोऽपि तैर्व्विकारमभजन् स्वस्वरूपएव वायुवत् योगी तिष्ठति।

६६। पार्थिवेष्विति। पार्थिवेषु देहेषु प्रविष्टः आत्मदृक् आत्म-

६७। अन्तर्हितश्च स्थिरजङ्गमेषु
ब्रह्मात्मभावेन समन्वयेन।
व्याप्त्याऽव्यवच्छेदमसङ्गमात्मनो
मुनिर्नभस्त्वं विततस्य भावयेत्॥

६८। तेजोबन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः।
न स्पृश्यते नभस्तद्वत् कालसृष्टैर्गुणैः पुमान्॥

दर्शी योगी तद्गुणाश्रयः तेषां देहानां गुणानाम् आश्रयः सन्—गन्धैः वायुरिव—गुणैः देहानां गुणैः न युज्यते न संसक्तो भवति। पूर्व्वश्लोके विषयेषु अस्मिंश्च देहेष्विति विशेषः।

३७। अन्तर्हितश्चेति। अन्तर्हितश्च देहप्रच्छन्नोऽपि मुनिः ब्रह्मात्मभावेन ब्रह्मस्वरूपभावनया स्थिरजङ्गमेषु समन्वयेन ब्रह्मस्वरूप-सम्बन्धेन या व्याप्तिः तया विततस्य आत्मनः अव्यवच्छेदं नभस्त्वम् आकाशसादृश्यं भावयेत्—'आत्मनः परमात्मनः' इति श्रीमद्विश्वनाथः। तत्पक्षे मुनिः स्वयं देहप्रच्छन्नः तत्रैव परमात्मानमनुसन्धत्ते, एवमनु-सन्धानपरः यदा परमात्मनः ब्रह्मस्वरूपत्वं चिन्तयति तदा तस्य स्थिर-चरेषु व्याप्तिमनुभवति, न कुत्रापि तस्य देहाद्यैर्व्यवच्छेदं पश्यति। आत्मनो जीवात्मन इति पक्षे ब्रह्मस्वरूपभावनया तस्मिन् स स्वस्य स्थितिं पश्यति न तु देहे, अतः स्थिरजङ्गमादिषु ब्रह्मव्याप्त्या निज-व्याप्तिमुपलभते। व्याप्तिरियं नातात्त्विकी, देहातीतवस्तुचिन्तने चिन्तनीयस्य तदन्तर्भूतत्वात्।

६८। तेजइति। वायुना ईरितैः प्रेरितैः मेघाद्यैः नभः न स्पृश्यते तद्वत् तेजोबन्नमयैः तेजश्च आपश्च अन्नं पृथिवी च तन्मयैः कालसृष्टैः गुणैः देहादिभिः पुमान् पुरुषः न स्पृश्यते। द्वाभ्यामाका-शतः शिक्षा।

६९ । स्वच्छः प्रकृतितः स्निग्धो माधुर्य्यस्तीर्थभूर्नृणाम् ।
मुनिः पुनात्यपांमित्त्रमीक्षोपस्पर्शकीर्त्तनैः ॥

७० । तेजस्वी तपसा दीप्तो दुर्द्धर्षोदरभाजनः ।
सर्व्वभक्षोऽपि युक्तात्मा नादत्ते मलमग्निवत् ॥

११।७।३७—४५ ।

७१ । मुनिः प्रसन्नगम्भीरो दुर्व्विगाह्यो दुरत्ययः ।
अनन्तपारोह्यक्षोभ्यः स्तिमितोद इवार्णवः ॥

६९ । स्वच्छइति । अपांमित्त्रम् उदकतुल्यः मुनिः स्वच्छः निर्म्मलः, प्रकृतितः स्वभावतः स्निग्धः जनेषु अनुरागवान्, माधुर्य्यः मधुरालापी, नृणां तीर्थभूः तीर्थस्थानम्, एवम्भूतः उदकगुणयुक्तः ईक्षोपस्पर्शकीर्त्तनैः पुनाति भुवनमिति शेषः । अपांमित्रेत्यत्र अघादिति पाठे मित्रं सखायं अघात् पापात् पुनाति पवित्रीकरोति । उदकाच्छिक्षा ।

७० । तेजस्वीति । तेजस्वी ज्ञानातिशयात् तेजःसम्पन्नः तपसा तीव्रसाधनेन दीप्तः प्रोज्ज्वलः, दुर्द्धर्षोदरभाजनः दुर्द्धर्षः अक्षोभ्यः स चासौ उदरभाजनः च अपरिग्रहः, युक्तात्मा मुनिः सर्व्वभक्षः अपि अग्निवत् मलं न आदत्ते मालिन्यं न भजते । अनलाच्छिक्षा ।

७१ । मुनिरिति । मुनिः प्रसन्नगम्भीरः प्रसन्नः निर्म्मलः स चासौ गम्भीरः अन्तर्गभीरश्चेति, दुर्व्विगाह्यः अलब्धप्रमाणान्तस्तत्त्वः, दुरत्ययः अनतिक्रमणीयः, अनन्तपारः भगवत्स्वरूपाविर्भाववशात् कालतः देशतः अपरिच्छेद्यः, अक्षोभ्यः अविकार्य्यः रागाद्यभावात्, स्तिमितोदः निश्चलोदकः अर्णव इव समुद्र इव ।

७२ । समृद्धकामो हीनो वा नारायणपरो मुनिः ।
नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ॥११।८।५।६

७३ । अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ।
सर्व्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः ॥

७४ । सायन्तनं श्वस्तनं वा न संगृह्णीत भिक्षितम् ।
पाणिपात्रोदरामत्रो मक्षिकेव न संग्रही ॥
११।८।१०।११ ।

७५ । तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान् ।
न जयेद्रसनं यावत् जितं सर्व्वं जिते रसे ॥११।८।२१

७२ । समृद्धेति । नारायणपरः सर्व्वाश्रयभगवत्परः मुनिः सरिद्भिः स्रोतस्वतीभिः—वर्षासु समृद्धः ग्रीष्मे तद्विहीनः—सागर इव समृद्धकामः पूर्णकामः हीनः अपूर्णकामः वा न उत्सर्पेत न हृष्येत् न शुष्येत न शोचेत् । द्वाभ्यां समुद्राच्छिक्षा ।

७३ । अणुभ्य इति । कुशलः निपुणः नरः जनः अणुभ्यः क्षुद्रेभ्यः महद्भ्यः विपुलेभ्यः शास्त्रेभ्यः च—पुष्पेभ्यः षट्पदः भ्रमर इव—सर्व्वतः सारम् आदद्यात् आददीत गृह्णीयात् ।

७४ । सायन्तनमिति । सायन्तनं सायमिदं भोक्ष्ये श्वस्तनं श्व इदं भोक्ष्ये इति भिक्षितम् अन्नादि न संगृह्णीत न सञ्चितं कुर्य्यात् । पाणिपात्रोदरामत्रः पाणिरेव पात्रम् उदरम् एव अमत्रं भिक्षानिधानभाण्डं यस्य एवम्भूतः सन् मक्षिका मधुमक्षिका इव न संग्रही स्यात् । द्विविधेभ्यो मधुकृद्भ्यो द्विविधं शिक्षितं द्वाभ्याम् ।

७५ । शब्दस्पर्शरूपरसगन्धैः कुरङ्गादीनां विनाशः

कुरङ्गमातङ्गपतङ्गभृङ्गमीना हता पञ्चभिरेव पञ्च ।
एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पञ्च ॥

७६। परिग्रहो हि दुःखाय यद्यत् प्रियतमं नृणाम्।
अनन्तं सुखमाप्नोति तद्विद्वान् यस्त्वकिञ्चनः॥
११।९।१।

७७। यत्र यत्र मनो देही धारयेत् सकलं धिया।
स्नेहाद्द्वेषाद्भयाद्वापि याति तत्तत् स्वरूपताम्॥
११।९।२२।

७८। देहो गुरुर्मम विरक्तिविवेकहेतु-
र्बिभ्रत् स्म सत्त्वनिधनं सततार्त्त्युदर्कम्।

इति प्रसिद्ध एव। तत्तदुक्ता रसामक्तेर्दुर्ज्जयत्वात् तज्जये सर्व्वान्ये-न्द्रियजयसुकरत्वात् सा च पुनरुच्यते तावदिति। विजितान्येन्द्रियः पुमान् तावत् न जितेन्द्रियः स्यात्, यावत् न रसनं जयेत् रसे जिते सर्व्वं जितम्। 'रसासक्त्यां सर्व्वेन्द्रियक्षोभः स्यात् अतः रसासक्तिं परित्यज्य औषधवत् भुञ्जीत' इति श्रीमत्स्वामी। 'अन्नं ब्रह्म रसो विष्णुः' इत्यवं ज्ञानेन भोज्ये भगवदाविर्भावं पश्यन् तदुच्छिष्टं ग्रह्णीयात् ततः स्याज्जयो रसनाया इति तत्त्वम्। 'जयस्तु रसनयैव भगवदुच्चनाम-कीर्त्तनरसास्वादाद्भवेत्' इति श्रीमद्विश्वनाथः।

७६। प्रियविषयासक्तिर्दुःखायेति तत्त्यागेन सुखमेधतइत्याह परि-ग्रह इति। यत् यत् नृणां प्रियतमं तस्य तस्य परिग्रहः हि दुःखाय, तद्विद्वान् परिग्रहो दुःखायेति विद्वान् यः तु अकिञ्चनः त्यक्तपरिग्रहः स अनन्तसुखम् आप्नोति। कुररतः शिक्षेयम्।

७७। विषयध्यानाच्चित्तवृत्तेः परिणाममाह यत्रेति। स्नेहात् भयात् द्वेषात् वा सकलम् एकाग्रम् अनन्यगामि मनः धिया यत्र यत्र देही धारयेत् तत्तत्स्वरूपतां याति प्राप्नोति। पेशस्कृतधृतकीटा-च्छिक्षेयम्।

७८। देह इति। सततार्त्त्युदर्कं सततार्त्तिरेव उदर्कम् उत्तरफलं

तत्त्वान्यनेन विमृषामि यथा तथापि
पारक्यमित्यवसितो विचराम्यसङ्गः ॥११।९।२५

७९ । प्रायेण भक्तियोगेन सत्सङ्गेन विनोद्धव ।
नोपायो विद्यते सम्यक् प्रायणं हि सतामहम् ॥
११।११।४८ ।

८० । न रोधयति मां योगो न सांख्यं धर्म्म एव च ।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं न दक्षिणा ॥

८१ । व्रतानि यज्ञश्छन्दांसि तीर्थानि नियमा यमाः ।
यथावरुन्धे सत्सङ्गः सर्व्वसङ्गापहो हि माम् ॥
११।१२।१।२ ।

यस्य तत् सत्त्वनिधनम् उत्पत्तिविनाशी बिभ्रत् मम अवधूतस्य देहः विरक्तिविवेकहेतुः वैराग्यविवेकजनकः गुरुः । अनेन देहेन तत्त्वानि यथा यथावत् विमृषामि । यद्यप्येवं तथापि देहम् इमं पारक्यं श्वसृगालादिभक्ष्यमिति अवसितो निश्चितवान् । असङ्गः देहे अनासक्तः सन् विचरामि । देहाच्छिद्या ।

७९ । एवं विविधविषयेभ्य उपकारमुक्त्वा सर्व्वोपरि भक्त्युत्पत्त्युपकारभूतस्य सत्सङ्गस्य महिमानं सकारणमभिदधाति आचार्य्यवाक्येन प्रायेणेति । सत्सङ्गेन यो भक्तियोगः तेन विना, हे उद्धव, प्रायेण सम्यक् उपायः न विद्यते । कथम् ? हि यस्मात् अहम् अन्तर्यामी सतां प्रायणम् प्रकृष्टम् अयनम् आश्रयः ।

८०।८१ । निखिलोपायानामुपरि सत्सङ्गस्य साम्राज्यं स्पष्टमाह न रोधयतीति, व्रतानीति । न योगः आसनप्राणायामादिः, न सांख्यं तत्त्वानां विवेकः, धर्म्मः सामान्यतः अहिंसादिः, स्वाध्यायः वेदजपः, तपः कृच्छ्रादिः, त्यागः सन्न्यासः, इष्टापूर्त्तम् इष्टम् अग्निहोत्रादि, पूर्त्तं

कूपारामादिनिर्म्माणम्, दक्षिणा दानम्, न माम् अन्तर्यामिणं रोधयति न वशीकरोति, तथा च व्रतानि एकादश्युपवासादीनि, यज्ञः देवपूजा, छन्दांसि सरहस्यमन्त्राः, तीर्थानि काश्यादीनि, नियमाः यमाः—

यमाः—अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः।
आस्तिक्यं ब्रह्मचर्य्यञ्च मौनं स्थैर्य्यं क्षमा भयम्॥
नियमाः—शौचं जपस्तपो होमः श्रद्धातिथ्यं मदर्च्चनम्।
तीर्थाटनं परार्थेहा तुष्टिराचार्य्यसेवनम्॥ (११।१८।३०।३१)।

इति। शौचं बाह्यमभ्यन्तरञ्चेति द्वयम्। ताभ्यां द्वादश नियमाः, द्वादश यमाश्च। योगसूत्रे तु 'अहिंसासत्यास्तेयब्रह्मचर्य्यापरिग्रहा यमाः' इति पञ्च यमाः 'शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' इति पञ्च नियमाः—न माम् अन्तर्यामिणं तथा रोधयन्ति यथा सर्व्वसङ्गापहः सर्व्वविधासक्तिनिरासकः सत्सङ्गः माम् अन्तर्यामिणम् अवरुन्धे वशीकरोति।

इति श्रीसात्त्वतसंहितोत्थायां व्याख्यानसहितायां
श्रीमद्गीताप्रपूर्त्तौ विषयविषयिसम्बन्धनिर्द्देशो
नाम नवमोऽध्यायः।

———

# दशमोऽध्यायः।

## भक्तिनिर्द्देशः।

अथ भक्तिनिर्द्देशोऽध्याय आरभ्यते। साधननिर्द्देशाध्याये भक्तेः साधनानि प्रोक्तानि। 'आदौ श्रद्धा ततः साधुसङ्गोऽथ भजनक्रिया' इत्यादौ श्रद्धां विना न साधुसङ्गे प्रवृत्तिर्भवति। नापि साधुसङ्गं विना भजनक्रियोपतिष्ठते, अतः साधुसङ्गकथनाय विषयविषयिनिर्द्देशोऽध्याय एवाग्रे निर्व्वचनीयः। तत् कथमग्रे साधनान्युक्त्वा पश्चात् विषयविषयि-निर्द्देशोऽध्यायोऽभिहित इति प्रश्ने श्रद्धां विना न यदा साधुसङ्गे रतिरुत्-पद्यते तदा श्रद्धाया उल्लेखएव प्राथमिक इति सिद्ध्यति। श्रद्धा हि भगवद्गुणश्रवणलालसामुत्पादयति तेन च साधुसङ्गान्वेषणमुपतिष्ठते, सुतरां श्रद्धैव यदा श्रवणादिषु प्रवृत्तेः कारणं, श्रवणादीनामुत्कर्षसाध-नाय यदा साधुसङ्गः, तदा श्रद्धान्तःपातितया साधनानामुल्लेखोऽग्रे न दोषायेति तथाभिधानमित्युत्तरम्। साधुसंगेन चेत् भक्तिरुत्पद्यते, न सिद्ध्यत्यस्या अहैतुकीत्वमिति श्रीमदीशावाचार्य्याणां प्रयत्नो भक्तेर्भक्त्युत्-पत्तिख्यापनाय। तेषां युक्तिक्रम एवं प्रदर्शयितुं शक्यः—भगवदनुग्रहं विना न साधुसङ्गलाभः। साधूनाञ्च तत्प्रेरणानुवर्त्तित्वं भगवतश्च भक्तवत्सलत्वमिति तेषामनुग्रहो न भगवदनुग्रहतः पृथक्। अपिच तेषां हृदये कृपोदयः भक्त्यैव सिद्ध्यति, तां विना तदुदयस्यासम्भवात्। भक्ति-रेव कृपाया हेतुः। ये च तेषां सङ्गमन्विषन्ति ते पुनर्भक्त्यङ्गत्वेन तत् कुर्व्वन्त्यतोऽत्रापि भक्तेरेव साम्राज्यम्। वस्तुतस्तु

> देवानां गुणलिङ्गानामानुश्रविककर्म्मणाम्।
> सत्त्वएवैकमनसोवृत्तिः स्वाभाविकी तु या॥
> अनिमित्ता भागवती भक्तिः———।

इति भक्तेर्मानसवृत्तित्वात् ततएव श्रद्धादेरभ्युदयः। भगवदनुग्रहादेः

कारणत्वञ्च तत्प्रादुर्भावनैयोति सर्व्वमनवद्यम्। उद्भूतानुद्भूतावस्थात्व-मस्या उपलक्ष्य 'भक्त्या संजातया भक्त्या'इत्यादेरुल्लेखः। भक्तिभेदोऽपि भक्तिशास्त्रेऽतएव बहुशो दृश्यते तद्यथा भक्तिसन्दर्भे—'सा भक्तिस्त्रिधा ;—आरोपसिद्धा, संगसिद्धा, स्वरूपसिद्धा च। तत्रारोपसिद्धा स्वतो भक्तित्वाभावेऽपि भगवदर्पणादिना भक्तित्वं प्राप्ता कर्म्मादिरूपा। संगसिद्धा—स्वतो भक्तित्वाभावेऽपि तत्परिकरतया संस्थापनेन। "तत्र भागवतान् धर्म्मान् शिक्षेत्" इत्यादिप्रकरणेषु "सर्व्वतो मनसोऽसंगम्" इत्यादिना लब्धतदन्तःपाता ज्ञानधर्म्मतदंगरूपा। स्वरूप-सिद्धा च—अज्ञानादिनापि प्रादुर्भावे भक्तित्वाव्यभिचारिणी साक्षात्तद-नुगत्या तदीयश्रवणकीर्त्तनादिरूपा। "श्रवणं कीर्त्तनं विष्णोः" इत्यादौ "विष्णोः श्रवणं" "विष्णोः कीर्त्तनम्" इति विशिष्टस्यैव विव-क्षितत्वात्तेषामपि नारोपसिद्धत्वम्। प्रत्युत मूढ़प्रोन्मत्तादिषु तदनु-कर्त्तृष्वपि कथञ्चित्सम्बन्धेन फलप्रापकत्वात् स्वरूपसिद्धत्वम्।' इति। अपिच 'अथ यस्या एवोत्कर्षज्ञानार्थमिते भक्तिभेदा निरूपिताः, सा भक्तिमात्रकामत्वान्निष्कामा निर्गुणा केवला स्वरूपसिद्धा निरूप्यते। इयमेवाकिञ्चनाद्याख्यत्वेन सर्व्वोर्द्धं पूर्व्वमभिहिता, तामाह—

> यद्गुणश्रुतिमात्रेण मयि सर्व्वगुहाशये।
> मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ॥
> लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्।
> अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे॥
> सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत।
> दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः॥
> स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः।
> येनातिव्रज्य त्रिगुणान् मद्भावायोपपद्यते॥

इति।' किञ्च—'तदेवं बहुधा साधितैषा अकिञ्चनात्यन्तिकीत्यादिसंज्ञा। भक्तिर्द्विधा, वैधी रागा चेति। तत्र वैधी शास्त्रोक्तविधिना प्रवर्त्तिता। स च विधिर्द्विविधः। तत्र प्रथमप्रवृत्तिहेतुः......अकर्त्तव्यकर्त्तव्यानां

१ । स वै पुंसां परो धर्म्मो यतो भक्तिरधोक्षजे ।
अहैतुक्यप्रतिहता ययात्मा सुप्रसीदति ॥१।२।६ ।

ध्यानहेतुश्च । प्रथमस्तूदाहृतः—

तस्मादेकेन मनसा भगवान् सात्वतां पतिः ।
श्रोतव्यः कीर्त्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥

इत्यादिना, द्वितीयश्चार्च्चनाव्रतादिगतः । तमाह—

मामेव नैरपेक्ष्येण भक्तियोगेन विन्दति ।
भक्तियोग संलभते एव यः पूजयेत माम् ॥ इति ।

'अथानुरागा । तत्र विषयिणः स्वाभाविको विषये संसर्गेच्छामयः प्रेमा रागः । यथा चक्षुरादीनां सौन्दर्य्यादौ तादृश एवात्र भक्तस्य श्रीभगवत्यपीत्युच्यते । स च रागेण विशेषणभेदेन बहुधा दृश्यते ।' इति ।

१ । कोऽयं परोधर्म्मो येन च भगवता साक्षात्कारो जायते तदाह स वै इति । पुंसां स वै स एव धर्म्मः परः निवृत्तिमूलकप्रवृत्तिमत्त्वात् श्रेष्ठः, यतः यस्मात् धर्म्मात् अधोक्षजे सर्व्वेन्द्रियातीते भगवति अहैतुकी अनिमित्ता हेतुः फलाभिसन्धानं तद्रहिता अप्रतिहता विघ्नैः अनभिभूता भक्तिः; यया भक्त्या आत्मा मनः सुप्रसीदति कामनामालिन्यविरहितत्वात् सम्यक् निर्म्मलं भवति । अहैतुकीति विशेषणेन स्वर्गकामनादिपरः प्रवृत्तिलक्षणो धर्म्मो व्यावृत्तः; न तु

स्वनुष्ठितस्य धर्म्मस्य संसिद्धिर्हरितोषणम् । (८।८)

इति । भगवत्सन्तोषैकलक्ष्यनिवृत्तिमूलकः प्रवृत्तिमान् सः । भगवद्गुणाकृष्टचित्तत्वात् श्रवणकीर्त्तनादिषु प्रवृत्तिरस्य प्रवृत्तिमत्त्वैव दर्शयति । सेयं स्वर्गादिकामनाविरहितत्वान्निवृत्तिमूलिकैव । अत्र श्रीमच्छ्रीधरः—'धर्म्मो द्विविधः, प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च । अत्र यः स्वर्गाद्यर्थः प्रवृत्तिलक्षणः सोऽपरः । यतो धर्म्मात् कृष्णे श्रवणादिलक्षणा भक्तिर्भवति स परो धर्म्मः' इति ।

२ । कोन्वीश ते पादसरोजभाजां
सुदुर्ल्लभोऽर्थेषु चतुर्ष्वपीह ।
तथापि नाहं प्रवृणोमि भूमन्
भवत्पदाम्भोजनिषेवणोत्सुकः ॥३।४।१५ ।

३ । स वै निवृत्तिधर्म्मेण वासुदेवानुकम्पया ।
भगवद्भक्तियोगेन तिरोधत्ते शनैरिह ॥३।७।१२ ।

२ । उद्धववाक्येन भक्तेः परधर्म्मत्वं प्रतिपादयति सुलभत्वेऽपि भगवन्तं विना विषयान्तरस्पृहाशून्यत्वादस्याः कोन्वीशेति । हे ईश, ते तव पादसरोजभाजां पादपद्मभक्तार्थानां चतुर्षु अपि अर्थेषु धर्म्मार्थकाममोक्षेषु—अनेन भक्तेर्मोक्षलघुताकृदिति गुणः सुव्यक्तः—को नु सुदुर्ल्लभः, न कोऽपीत्यर्थः । तथापि एवं सुलभत्वेऽपि, हे भूमन्, भगवत्पदाम्भोजनिषेवणोत्सुकः तव पादपद्मसेवाकुलः अहं तान् अर्थान् न प्रवृणोमि न प्रार्थयामि ।

३ । अयं परधर्म्मो वासनान्तरविरहान्निवृत्तिप्रधानः, सुतरां

यथा जले चन्द्रमसः कम्पादिस्तत्कृतोगुणः ।
दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनोगुणः ॥ (५।५)

इत्यात्मन्यनात्मधर्म्मस्यारोपोऽप्यनेन निवृत्तो भवतीत्याह स वै इति । निवृत्तिधर्म्मेण—'निष्कामस्वभावेन'—श्रीमज्जीवः—भक्तियोगेन या वासुदेवानुकम्पया सर्व्वान्तरात्मनः अनुग्रहः तया स अनात्मनि आत्मधर्म्मस्यारोपः इह शनैः—'साधनानुसारेण'—श्रीमच्छ्रीधरः, 'तदनुकम्पातारतम्येन'—श्रीमज्जीवः, 'अनर्थनिवृत्तितारतम्येन'—श्रीमद्विश्वनाथः —तिरोधत्ते अदृश्यः भवति । निवृत्तिधर्म्मेण भक्तियोगेनेत्युभयं स्वातन्त्र्येण गृहीत्वा श्रीमच्छ्रीधरानुसरणेन श्रीमद्विश्वनाथः निवृत्तिधर्म्मेण भक्तिविमिश्रज्ञानं साधयित्वा—'तन्निवृत्त्युपयोगि ज्ञानं वा भक्तिर्वेति भवेत्' इति व्याख्यातवान् ।

४ । त्वं भक्तियोगपरिभावितहृत्सरोज
आस्से श्रुतेक्षितपथो ननु नाथ पुंसाम् ।
यद्यद्धिया तउरुगाय विभावयन्ति
तत्तद्वपुः प्रणयसे सदनुग्रहाय ॥३।९।११ ।

५ । पुंसामतोविविधकर्म्मभिरध्वराद्यै-
र्दानेन चोग्रतपसा व्रतचर्य्यया च ।
आराधनं भगवतस्तव सत्क्रियार्थो
धर्म्मोऽर्पितः कर्हिचिन्म्रियते न यत्र ॥
३।९।१३ ।

४ । न केवलमात्मन्यनात्मधर्म्मारोपनिवृत्तिर्भवति, किन्तर्हि भक्ता-नामूर्द्ध्वोर्द्ध्वभूमावारोहणानुसारेण भगवत्स्वरूपाविर्भावानुभवोऽपि जायते इत्याह आदिपुरुषस्तुतिवाक्येन त्वमिति । पुंसां जनानां भक्तियोगपरि-भावितहृत्सरोजे भक्तियोगेन—भावयोगेनेति पाठे भक्तिरेवार्थः—परि-भाविते शोधिते हृत्सरोजे श्रुतेक्षितपथः श्रुतेन श्रवणेन ईक्षितः पन्थाः यस्य स त्वम् आस्से तिष्ठसि । हे उरुगाय उरुकीर्त्ते, ते पुमांसः धिया यत् यत् वपुः जगज्जीवबीजभूतं स्वरूपं विभावयन्ति परिचिन्तयन्ति तत् तत् वपुः जगज्जीवबीजभूतं स्वरूपं सदनुग्रहाय सतां भक्तानाम् अनुग्रहाय प्रणयसे प्रकटयसि ।

५ । विविधवैदिकलौकिककर्म्माण्यपि भगवदर्पितान्यविनाशीनि भवन्तीत्याह पुंसामिति आदिपुरुषवाक्येन । अतः—

नातिप्रसीदति तथोपचितोपचारैराराधितः सुरगणैर्हृदि बद्धकामैः ।
यत् सर्व्वभूतदयया सदलभ्ययैको नानाजनेष्ववहितः सुहृदन्तरात्मा ॥

इति निष्काममभावस्य श्रेष्ठत्वहेतोः अध्वराद्यैः यज्ञाद्यैः विविधकर्म्मभिः, दानेन, उग्रतपसा, परिचर्य्यया च भगवतः तव आराधनं पुंसां स्तु-

६ । तस्मिन् प्रसन्ने सकलाशिषां प्रभौ
किं दुर्ल्लभं ताभिरलं लवात्मभिः ।
अनन्यदृष्ट्या भजतां गुहाशयः
स्वयं विधत्ते स्वगतिं परः पराम् ॥

३।१३।४८ ।

७ । तं त्वां विदाम भगवन् परमात्मतत्त्वं
सत्त्वेन सम्प्रति रतिं रचयन्तमेषाम् ।
यत्तेऽनुतापविदितैर्दृढ़भक्तियोगै-
रुद्ग्रन्थयो हृदि विदुर्मुनयो विरागाः ॥

३।१५।४७ ।

क्रियार्थः सत्कर्म्मणां फलम् । कथम् ? यत्र त्वयि अर्पितः धर्म्मः कर्हि-
चित् न म्रियते न नश्यति ।

६ । निष्कामभजनेन सर्व्वमन्यत् तुच्छं भवति भक्तसन्निधौ तस्य साक्षाद्भगवत्प्राप्तिहेतुत्वादित्याह तस्मिन्निति । सकलाशिषां निखिलकल्याणानां प्रभौ स्वामिनि तस्मिन् प्रसन्ने सति किं दुर्ल्लभं न किञ्चिदपि ? लवात्मभिः तुच्छाभिः ताभिः आशीर्भिः अलं निष्प्रयोजनम् । भगवतो निखिलकल्याणदातृत्वेऽपि तन्निरपेक्षत्वं किन्न भजनवैफल्यं सम्पादयति ? न, ततोऽप्यनेन सत्फललाभात् । तदाह—स्वयं गुहाशयः हृदयस्थः परः परमपुरुषः अनन्यदृष्ट्या भगवद्भजनव्यतिरेकेण फलान्तरदृष्टिं विना भजतां परां स्वगतिं स्वरूपप्राप्तिं विधत्ते ।

७ । परमात्मतत्त्वनिरता न खलु तावच्छास्त्रोपदिष्टं विचित्रैश्वर्य्यवन्तं भगवन्तमाद्रियन्ते, यावन्न ते तत्स्वरूपसौन्दर्य्याकृष्टा भक्तिविद्रावितचेतसो भवन्ति । अयमेवार्थो ब्रह्मानुभविनां कुमाराणां वाक्येन प्रतिपाद्यते तमिति । हे भगवन्, सम्प्रति सत्त्वेन स्वरूपवैभवेन एषाम्

८। इच्छाद्वेषविहीनेन सर्व्वत्र समचेतसा ।
भगवद्भक्तियोगेन प्राप्ता भागवती गतिः ॥
३।२४।४७ ।

९। चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम् ।
गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये ॥
३।२५।१५ ।

अस्माकं रतिम् अनुरागं रचयन्तम् उत्पादयन्तं तं त्वां परमात्मतत्त्वं विदाम विद्मः, स्वरूपवैभवविस्तारेऽपि सएव परमात्मेति प्रत्यभिजानीमः। यत् परमात्मतत्त्वं ते तव अनुतापविदितैः अनुतापः कृपा तेन विदितैः ज्ञातैः दृढ़भक्तियोगैः उद्ग्रन्थयः निरहङ्काराः विरागाः वीतरागाः मुनयः मननशीलाः हृदि विदुः जानन्ति ।

८। कोऽयं भक्तियोगेन भागवतीं गतिं प्राप्नोति तदाह कर्द्दमदृष्टान्तेन इच्छेति। इच्छाद्वेषविहीनेन सर्व्वत्र समचेतसा कर्द्दमेन भगवद्भक्तियोगेन भागवती गतिः प्राप्ता ।

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्व्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् (गी १८।५४।५५)

इति भगवति स्थितिरेव भागवती गतिः ।

९। विषयेष्वनुरागोबन्धनाय स तु परमात्मनि मुक्तयइत्याह चेतइति। अस्य आत्मनः जीवस्य चेतः चित्तं खलु बन्धाय मुक्तये च। कथं वा बन्धाय कथं वा मुक्तये तदाह—गुणेषु विषयेषु सक्तम् अनुरक्तं चेतः चित्तं बन्धाय बन्धनाय, पुंसि परमात्मनि वा रतं मुक्तये मोक्षाय ।

१० । देवानां गुणलिङ्गानामानुश्रविककर्म्मणाम् ।
सत्त्वएवैकमनसो वृत्तिः स्वाभाविकी तु या ॥
११ । अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ।
जरयत्याशु या कोशं निगीर्णमनलो यथा ॥

३।२५।३२।३३ ।

१०।११। न हि भक्तिरागन्तुकी, जीवस्य सहजन्मैव सा। सर्व्वेन्द्रियवृत्तिस्तदधिष्ठानभूमिः। यदा भगवति तासामिन्द्रियवृत्तीनामभिनिवेशो भवति तदेव तस्याः प्रादुर्भावः। एतदेव विवृणोति देवानामिति। एकमनसः एकाग्रचित्तस्य जनस्य आनुश्रविककर्म्मणां श्रुतिपरम्परागम्यं कर्म्म येषां—'गुरोरुच्चारणमनु श्रूयते इत्यनुश्रवो वेदः तद्विहितमानुश्रविकं तदेव कर्म्म येषां'—श्रीमच्छ्रीधरः, 'आनुश्रविकं श्रुतिपुराणादिगम्यं कर्म्म आचरितं येषां'—श्रीमज्जीवः,'अनुश्रवः मन्त्रस्तद्विहितमानुश्रविकं कर्म्म नित्यकृत्यं येषां'—श्रीमद्विश्वनाथः, गुणलिङ्गानां गुणाः शब्दादयः विषयाः लिङ्ग्यन्ते ज्ञाप्यन्ते यैः तेषां, देवानाम् इन्द्रियाधिष्ठातॄणां सत्त्वे सतां भावे—'सा परानुरक्तिरीश्वरे' इति साधुसमुचितभगवदनुरक्तौ—'सत्त्वमुर्त्तौ हरौ'—श्रीमच्छ्रीधरः, 'सत्त्वगुणोपकारके स्वरूपशक्तिवृत्तिभूतब्रह्मसत्तात्मके विष्णौ'—श्रीमज्जीवः, 'सतां भावः सत्त्वं वैष्णवत्वं तत्र वैष्णवत्वे'—श्रीमद्विश्वनाथः—या तु स्वाभाविकी अयत्नसिद्धा अनिमित्ता निष्कामा वृत्तिः, सा भागवती भक्तिः सिद्धेः मुक्तेः अपि गरीयसी। कथम्? या भक्तिः—अनलो जठराग्निः यथा निगीर्णं भुक्तम् अन्नं, तथा अज्ञातसारेण—कोशं सूक्ष्मदेहम् आशु सत्वरं जरयति जीर्णं करोति मुक्तिं यच्छतीत्यर्थः। स्वाभाविकी वृत्तिरित्यत्र श्रीमच्चक्रवर्त्ती—'स्वाभाविकी वृत्तिश्च विविधा; कस्यचित् शास्त्रशासनेनैव श्रीगुरूपदिष्टशुद्धभक्तौ प्रवृत्तिमतो भजनाभ्यासपौनःपुन्येन निष्ठारत्यासक्तिभूमिकाधिरूढस्येन्द्रियाणां वृत्तिर्हरौ स्वाभाविकी

भवति, यथा प्राकृतलोकानां पतिपुत्रादिषु ; कस्यचिच्च प्राचीनार्व्वाचीनतादृशमहत्सङ्गकृपाजनितविलक्षणसंस्कारवशेन गुरूपदेशात् पूर्व्वमेवानन्तरमेव वा शास्त्रशासनं विनैव स्वभावतएवेन्द्रियाणां भक्तिशास्त्रोक्ताचरणवती एव या हरौ वृत्तिः सापि स्वाभाविकी ज्ञेया ।' इति । निगीर्णमनलो यथेत्यत्र सः—'भुक्तमन्नादिकं जठरानलो भोजनक्षणतएव जरयितुं प्रवृत्तोऽपि द्वित्रतुर्यामानन्तरमेव सम्यक्तया जरयति यथा, तथा भजनक्षणतएव शोकमोहाद्यात्मकं संसारं नाशयितुं प्रवृत्तापि भक्तिः किञ्चित्कालविलम्बेनैव सम्यक्तया नाशयतीत्यतो भजनदशायां शोकमोहाद्यनपगमेऽपि भक्तेषु संसारित्वमिति न प्रत्येतव्यमिति ज्ञेयम् ।' इति । समग्रपद्यस्य सारस्तेनैवं संगृहीतः—'ज्ञानकर्म्मादिरहिता भगवति श्रोत्रादीन्द्रियाणां वृत्तिर्भक्तिः । सा चाल्पप्रमाणा साधनभक्तिरस्वाभाविकी भवति । सैव पूर्णप्रमाणा साध्यभक्तिः स्वाभाविकी भावभक्तिर्भवति । सैव काचिदल्पप्रमाणापि जात्यैवाधिक्यात् स्वाभाविकी चेत् रागानुगा नाम्नी साधनभक्तिः । सा च जातिप्रमाणाभ्यां पूर्णा रागानुगीयभावभक्तिर्भवतीति विवेकः ।' इति । वस्तुतस्तु जीवस्येन्द्रियवृत्तिर्निगूढ़ाया भक्तेरेव प्रेरणातः प्रथमतः शास्त्रीयपरम्परागतकर्म्मसु रता भवति, ततो भगवन्माहात्म्यानुभवे जाते सा पुनः फलान्तरस्पृहाशून्या सहजभावेनैव भगवन्तमेवाधिकरोति । एवमधिकृते भगवति तस्मिन्नेव यदा महाननुराग उत्पद्यते सा भागवती भक्तिरित्याख्यां लभते । अनया भक्त्याऽनिच्छतोऽपि मुक्तिः सिद्ध्यति, भगवन्निविष्टचित्तस्य हृद्ग्रन्थिशैथिल्यस्वाभाविकत्वात् । पद्यमिदं भक्तेर्जीवसहजत्वमेव प्रतिपादयति । न खलु जगन्मिथ्यात्वं जानतामपि भक्तावनादरः । तदुक्तं श्रीमन्नारायणतीर्थेन शाण्डिल्यशतसूत्रव्याख्याभूतायां भगवद्भक्तिचन्द्रिकायां—'सर्व्वमिथ्यात्वं जानतां कथमीशे भक्तिः स्यादिति चेत्, साधनदशाभ्यासजसंस्काराल्लौकिकव्यवहारवदेव प्राप्तप्रपञ्चबाधस्यापि विस्मारणादेवेत्यवेहि, भक्तिरसस्य परमा-

१२। एतावानेव लोकेऽस्मिन् पुंसां निःश्रेयसोदयः।
तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम्॥
३।२५।४४।

१३। अतएव शनैश्चित्तं प्रसक्तमसतां पथि।
भक्तियोगेन तीव्रेण विरक्त्या च नयेद्वशम्॥३।२७।५

१४। भक्तियोगो बहुविधो मार्गैर्भाविनि भाव्यते।
स्वभावगुणमार्गेण पुंसां भावो विभिद्यते॥३।२९।७

नन्दरूपतया स्वेतरसर्व्वाभिभावकत्वात्।' इति। अतएव श्रीमता जीवेनाप्युक्तम्—

सत्यं न सत्यं नः कृष्णपदाब्जमीदमन्तरा।
जगत् सत्यमसत्यं वा कोऽयं तस्मिन् दुराग्रहः॥ इति।

१२। भगवति नैरन्तर्य्येण चित्तस्य स्थितिरेव कृतार्थता ; सा तु अनन्यया भक्त्यैव भवतीत्याह एतवानिति। तीव्रेण दृढ़ेन विषयान्तराव्यवहितेन भक्तियोगेन मयि सर्व्वान्तर्यामिणि अर्पितं मनः स्थिरं भवतीति यत् एतावान् एव पुंसां जनानां निश्रेयसोदयः निश्रेयसस्य परमपुरुषार्थस्य उदयः आविर्भावः।

१३। न खलु चित्तस्यासन्मार्गान्निवृत्तिं विना भगवति स्थितिः सम्भवति, सा तु वैराग्यपुष्टभक्त्यैव सिद्ध्यतीत्याह अतएवेति। संसारनिवृत्तिः अशक्या, अतएव असतां पथि प्रसक्तं चित्तं शनैः क्रमशः तीव्रेण भक्तियोगेन विरक्त्या वैराग्येण च वशं नयेत्।

१४। एकस्याएव भक्तेः जनानां स्वभावानुसारेण प्रकाशो भिद्यते, अतः क्रोधादिसहचरत्वे तस्याः स्वरूपतो विशुद्धाया अपि तत्तद्भावशबलत्वात् बहुविधो भेदो लक्ष्यते, तदेवाह भक्तियोग इति देवहूतिं प्रति कपिलवाक्येन। हे भाविनि, हे मातः, मार्गैः प्रकारविशेषैः भक्तियोगो बहुविधः भाव्यते चिन्त्यते। के ते मार्गास्तानाह—पुंसां जनानां भावः

१५ । लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥३।२९।१२

अभिप्रायः चित्तवृत्तिः स्वभावगुणमार्गेण स्वभावभूताः ये गुणाः सत्त्वादयः तेषां मार्गेण वृत्तिभेदेन विभिद्यते भिन्नः भवति । अनन्तरपद्येषु तदुल्लेखो यथा—

अभिसन्धाय यद्धिंसां दम्भं मात्सर्य्यमेव वा ।
संरम्भी भिन्नदृग्भावं मयि कुर्य्यात् स तामसः ॥
विषयानभिसन्धाय यश ऐश्वर्य्यमेव वा ।
अर्च्चादावर्च्चयेद्यो मां पृथग्भावः स राजसः ॥
कर्म्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम् ।
यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः ॥ इति ।

'तदेवं तामसादिभक्तिषु त्रयस्त्रयो भेदाः, तासु यथोत्तरं श्रेष्ठत्वम् । एवञ्च श्रवणकीर्त्तनादयो नवापि प्रत्येकं नव नव भेदाः । तदेवं सगुणा भक्तिरेकाशीति भेदाः' इति श्रीमच्छ्रीधरः । भक्तेरस्यास्त्रैविध्यं स्पष्टं प्रदर्शयितुं श्रीमच्चक्रवर्त्तिनोद्धृतानि वृहन्नारदीयवचनानि—यथा,

यश्चान्यस्य विनाशार्थं भजते श्रद्धया हरिम् ।
फलवत् पृथिवीपाल सा भक्तिस्तामसाधमा ॥
योऽर्च्चयेत् कैतवधिया स्वैरिणी स्वपतिं यथा ।
नारायणं जगन्नाथं सा वै तामसमध्यमा ॥
देवपूजापरान् दृष्ट्वा स्पर्द्धया योऽर्च्चयेद्धरिम् ।
शृणुष्व पृथिवीपाल सा भक्तिस्तामसोत्तमा ॥

एवं राजस्याः सात्त्विक्याश्च त्रैविध्यमुन्नेयम् ।

१५ । सत्त्वादिगुणयोगेन सगुणां भक्तिमुक्त्वा निर्गुणामाह लक्षणमिति । पुरुषोत्तमे अहैतुकी फलानुसन्धानरहिता अव्यवहिता भेददर्शनरहिता—'स्वरूपसिद्धत्वेन साक्षाद्रूपा'—श्रीमज्जीवः, 'ज्ञानकर्म्मादिव्यवधानशून्या'—श्रीमच्चक्रवर्त्ती—या भक्तिः सा निर्गुणस्य भक्तियोगस्य लक्षणं स्वरूपं हि उदाहृतम् । अस्याः स्वरूपम्—

१६ । स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ।
येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥३।२९।१४

१७ । ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः ।
द्वयोरप्येक एवार्थो भगवच्छब्दलक्षणः ॥३।३२।३२ ।

१८ । त्वं प्रत्यगात्मनि तदा भगवत्यनन्त
आनन्दमात्र उपपन्नसमस्तशक्तौ ।

मद्गुणश्रुतिमात्रेण मयि सर्व्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥ (८।७०)

इत्यस्मिन् स्पष्टं प्रतीयते ।

१६ । निर्गुण भक्तियोगस्य परमफलमाह सएवेति । सएव निर्गुणभक्तियोगएव भक्तियोगाख्यः भक्तियोगनामा आत्यन्तिकः सर्व्वान्तभवः अपवर्गः उदाहृतः कथितः । कोऽयमपवर्ग इत्यपेक्षायां कथयति—येन निर्गुणभक्तियोगेन त्रिगुणान् सत्त्वरजस्तमांसि अतिव्रज्य अतिक्रम्य मद्भावाय ब्रह्मत्वाय मत्स्वरूपैक्याय—'मम भावाय विद्यमानतायै मम साक्षात्काराय यद्वा मत्प्रेमविशेषाय'—श्रीमज्जीवः—उपपद्यते कल्पते ।

१७ । भगवन्निष्ठयोगस्य निर्गुणभक्तियोगस्य चार्थतएकत्वं सकारणमाह ज्ञानयोग इति । मन्निष्ठः सर्व्वान्तर्यामिनिष्ठः परमपुरुषनिष्ठः ज्ञानयोगः अपिच भक्तिलक्षणः नैर्गुण्यः गुणातीतभक्तिलक्षणयोगः द्वयोरपि एकः एव अर्थः प्रयोजनम् । कथम् ? भगच्छब्दलक्षणः

ब्रह्मेति परमात्मेति भगवानिति शब्द्यते । (१।३३)

इत्यत्रोक्तः भगवच्छब्दएव लक्षणं ज्ञापको यस्य । उभयत्र भगवानेवाराध्यते, अतो न तत्र ज्ञानभक्त्योरसामञ्जस्यम् ।

१८ । अस्य भक्तियोगस्य सर्व्वाभिमाननिरासकत्वमाह ध्रुवं प्रति मनुवाक्येन त्वमिति । उपपन्नसमस्तशक्तौ उपपन्नाः नित्यसिद्धाः समस्ताः

भक्तिं विधाय परमां शनकैरविद्या-
ग्रन्थिं विभेत्स्यसि ममाहमिति प्ररूढ़म् ॥
४।११।३० ।

१९ । भक्तिं हरौ भगवति प्रवहन्नजस्र-
मानन्दवाष्पकलया मुहुरर्द्यमानः ।
विक्लिद्यमानहृदयः पुलकाचिताङ्गो
नात्मानमस्मरदसाविति मुक्तलिङ्गः ॥४।१२।१८

२० । श्रुत्वैतच्छ्रद्धयाभीक्ष्णमच्युतप्रियचेष्टितम् ।
भवेद्भक्तिर्भगवति यया स्यात् क्लेशसंक्षयः ॥
४।१२।४६ ।

निखिलाः शक्तयो यस्मिन् तस्मिन् आनन्दमात्रे प्रत्यगात्मनि स्वप्रकाश-परमात्मनि भगवति अनन्ते परमां साक्षाद्दर्शनरूपां भक्तिं विधाय शनकैः क्रमशः मम अहम् इति प्ररूढ़ं दृढ़तामाप्तम् अविद्याग्रन्थिम् अभिमानं विभेत्स्यसि छेत्स्यसि ।

१९ । स ध्रुवो भक्त्या,

तस्यां विशुद्धकरणः शिववार्विगाह्य बद्धासनो जितमरुन्मनसा हृताक्षः ।
स्थूले दधार भगवत्प्रतिरूप एतद्ध्यायंस्तदव्यवहितो व्यसृजत् समाधौ ॥

इति स्थूले जगति व्यवधानेन भगवदाविर्भावं पश्यन् समाधौ केवले भगवति मनसोऽविच्छेदस्थितौ सिद्धायां स्थूलं जगत् परित्यज्याव्यवधानेन तमध्यकरोत् । ततः किमभवत् तदाह भक्तिमिति । अजस्रं नित्यं हरौ भक्तिं प्रवहन् प्रकर्षेण वहन् असौ ध्रुवः आनन्दवाष्पकलया आनन्द-वाष्पस्य कलया विन्दुप्रवाहेण मुहुः अर्द्यमानः अभिभूयमानः विक्लिद्य-मानहृदयः द्रवहृदयः पुलकाचिताङ्गः पुलकैः व्याप्ताङ्गः मुक्तलिङ्गः त्यक्त-शरीराभिमानः आत्मानं स्वम् अहम् इति न अस्मरत् सस्मार ।

२० । भगवद्भक्तचेष्टितं श्रुत्वा भगवति भक्तिरुद्भूयते किमु वक्तव्यं

२१। यः स्वधर्म्मेण मां नित्यं निराशीः श्रद्धयान्वितः।
भजते शनकैस्तस्य मनो राजन् प्रसीदति ॥४।२०।६

२२। यत्पादपङ्कजपलाशविलासभक्त्या
कर्म्माशयं ग्रथितमुद्ग्रथयन्ति सन्तः।
तद्वन्न रिक्तमतयो यतयोऽपि रुद्ध-
स्रोतोगणास्तमरणं भज वासुदेवम् ॥४।२२।३६

तल्लीलाश्रवणेन तद्भवतीत्यभिप्रायेणाह श्रुत्वेति। एतत् अच्युतप्रिय-चेष्टितम् अच्युतप्रियस्य ध्रुवस्य चेष्टितं श्रद्धया श्रुत्वा भगवति भक्तिः भवेत्, यया भक्त्या क्लेशसंक्षयः स्यात्। कथमत्र भक्तेः क्लेशघ्नीत्वं स्वकार्य्यमाविष्करोतीति जिज्ञासायां भक्तस्य [illegible] भगवन्त-मधिकृत्य तन्निर्देशतो भवेत्, अतस्तस्मिन् भगवद्वात्सल्यं प्रकटीभव-तीति न पुनरस्या व्यवहितत्वम्। अव्यवहितत्वे पुनः सा क्लेशसंक्षयफला भवत्येव।

२१। भवति हि चित्तनैर्म्मल्याय,

यतः प्रवृत्तिर्भूतानां येन सर्व्वमिदं ततम्।
स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥ (गी १८।४६)

इति, स्वधर्म्मेण परमपुरुषार्च्चनं ; तेन च भगवद्दर्शनं भवत्यतस्तदेव प्रस्तौति यइति। निराशीः आकाङ्क्षाशून्यः श्रद्धया अन्वितः श्रद्धायुक्तः यः मां सर्व्वान्तर्यामिणं स्वधर्म्मेण स्वकर्म्मणा भजति, शनकैः क्रमशः, हे राजन् पृथो, तस्य मनः प्रसीदति निर्म्मलं भवति।

२२। भक्त्या यथा बन्धनच्छेदनं सुकरं न तथेन्द्रियसंयमादिभि-रित्याह यदिति। यत्पादपङ्कजपलाशविलासभक्त्या यस्य पादपङ्कजयोः पलाशानि अङ्गुलयः तेषां विलासः कान्तिः तस्य भक्त्या अनुरागेण— 'स्मृत्या'—श्रीमच्छ्रीधरः, ग्रथितं दृढ़वद्धं कर्म्माशयं हृदयग्रन्थिं सन्तः

२३ । न भजति कुमनीषिणां स इज्यां
हरिरधनात्मधनप्रियोरसज्ञः ।
श्रुतधनकुलकर्म्मणां मदैर्ये
विदधति पापमकिञ्चनेषु सत्सु ॥४।३१।२१ ।

२४ । यस्यास्ति भक्तिर्भगवत्यकिञ्चना
सर्व्वैर्गुणैस्तत्र समासते सुराः ।
हरावभक्तस्य कुतो महद्गुणा
मनोरथेनासति धावतोबहिः ॥५।१८।१२ ।

साधवः उद्ग्रथयन्ति छिन्नग्रन्थिं करोति ; रिक्तमतयः रिक्ता निर्व्विषया मतिर्येषां निरुद्धस्रोतोगणाः निरुद्धः प्रत्याहृतः स्रोतोगणः इन्द्रियवर्गः यैः ते यतयः न तद्वत् न तथा । अतः तम् अरणं शरणं वासुदेवं सर्व्वान्तर्यामिणं भज ।

२३ । साधुष्वपराध्यन्ति ये न तेषामाराधनं गृह्णाति भगवानित्याह न भजतीति । श्रुतधनकुलकर्म्मणां श्रुतं च, धनं च, कुलं च, कर्म्म च तेषां मदैः गर्व्वैः ये अकिञ्चनेषु निष्कामेषु सत्सु साधुषु पापम् असदाचरणं तिरस्कारं विदधति, तेषां कुमनीषिणां कुत्सितमतीनाम् इज्यां सपर्य्याम् अधनात्मधनप्रियः अधनाश्च ते आत्मधनाः भगवद्धनाः च ते प्रिया यस्य स रसज्ञः प्रेमरसज्ञः—'धनपुत्रादिषु ममतां परित्यज्य मय्येव ममताम् अमी दधते इति भक्तानां प्रेमरसं जानातीति रसज्ञः'—श्रीमच्चक्रवर्त्ती—स हरिः न भजते न स्वीकरोति ।

२४ । निष्कामभक्तिमतां हृदि न केवलं स्वयं हरिर्निवसति, तेन च सर्व्वे देवाः सर्व्वैर्गुणैः स्वावासं तत्र रचयन्तीत्याह यस्येति । यस्य भगवति अकिञ्चना निष्कामा भक्तिः अस्ति, तत्र तस्मिन् जने सुराः देवाः सर्व्वैः गुणैः धर्म्मज्ञानवैराग्यादिभिः समासते नित्यं वसन्ति । मनो-

२५ । योऽसौ भगवति सर्व्वभूतात्मन्यनात्म्येऽनिरुक्ते-ऽनिलयने परमात्मनि वासुदेवेऽनन्यनिमित्तभक्तियोग-लक्षणो नानागतिनिमित्ताऽविद्याग्रन्थिरन्धनद्वारेण यदा हि महापुरुषपुरुषप्रसङ्गः ।५।१८।२० ।

रथेन असति असद्विषये बहिः धावतः हरौ अभक्तस्य जनस्य महद्गुणाः महतां साधूनां देवमहर्षादीनां गुणाः कुतः? श्रीमद्वैष्णवाचार्य्यै-र्गोपीनां भक्तिरसजनितगुणगणाधारत्वं पद्येनानेन साधितम् । तथा-ह्युज्ज्वलनीलमणिव्याख्यायाम्——' "आनन्दचिन्मयरसप्रतिभाविताभिः" इत्यनेन तासां सर्व्वासामपि भक्तिरसप्रतिभावितत्वं गम्यते । भक्तिर्हि पूर्व्वग्रन्थे—"शुद्धसत्त्वविशेषात्मा" इत्यत्र परमानन्दरूपतया दर्शिता, तस्याश्च रसापत्तिः स्थापिता । ततश्च तेन आनन्दचिन्मयरसात्मकेन रसेन भक्तिविशेषमयेन प्रतिभाविताभिः प्रतिक्षणं नित्यमेव भावि-ताभिः कलाभिः शक्तिभिरित्यर्थः । अतएव "यस्यास्ति भक्तिर्भगव-त्यकिञ्चना सर्व्वैर्गुणैस्तत्र समासते सुराः" इत्यनेन सर्व्वगुणाभिरिति लभ्यते' इति ।

२५ । भक्तियोगएव सर्व्वपुरुषार्थसाधनोऽपवर्ग इत्याह योऽसाविति । यदा हि नानागतिनिमित्ताविद्याग्रन्थिरन्धनद्वारेण नानागतीनां निमित्तं योऽविद्याग्रन्थिः तस्य रन्धनं भेदनं तद्द्वारेण महापुरुषपुरुष-प्रसङ्गः महापुरुषस्य पुरुषाः जनाः तैः सङ्गः भवति, तदा भगवति सर्व्वभूतात्मनि सर्व्वभूतानामात्मस्वरूपे अनात्म्ये आत्मनि भवं आत्म्यं रागादि तद्रहिते, अनिरुक्ते वाचामगोचरे, अनिलयने अनाधारे परमा-त्मनि वासुदेवे सर्व्वान्तर्यामिणि अनन्यनिमित्तभक्तियोगलक्षणः अनन्य-निमित्तः अहैतुकः भक्तियोगएव लक्षणं स्वरूपं यस्य तादृशः योऽसौ अपवर्गः मुक्तिः स भवति ।

२६ । एवं विमृश्य सुधियो भगवत्यनन्ते
सर्व्वात्मना विदधते खलु भावयोगम् ।
ते मे न दण्डमर्हन्त्यथ यद्यमीषां
स्यात् पातकं तदपि हन्त्युरगायवादः ॥६।३।२६
२७ । देवानां शुद्धसत्त्वानामृषीणाञ्चामलात्मनाम् ।
भक्तिर्मुकुन्दचरणे न प्रायेणोपजायते ॥६।१४।२ ।
२८ । नालं द्विजत्वं देवत्वमृषित्वं वाऽसुरात्मजाः ।
प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता ॥
२९ । न दानं न तपो नेज्या न शौचं न व्रतानि च ।
प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम् ॥
७।७।५१।५२ ।

२६ । भक्त्या मृत्युभयमतिक्रामति । चेत् पापं स्यात् तदपि भगवद्गुणकीर्त्तनादेव नश्यतीत्याह स्वदूतं प्रति मृत्युवाक्येन एवमिति । एवं भगवद्भक्तिमहिमप्रकारं विमृश्य सुधियः सुमतयः भगवति अनन्ते सर्व्वात्मना सर्व्वथैव मनसा खलु भावयोगं भक्तियोगं विदधते । ते सुधियः मे मम मृत्योः दण्डं न अर्हन्ति । यदि अमीषां भजतां पातकं पापं स्यात्, तदपि उरुगायवादः भगवद्गुणकीर्त्तनं हन्ति नाशयति ।

२७ । भक्तेर्दुर्ल्लभत्वमाह देवानामिति । शुद्धसत्त्वानां शुद्धान्तः-करणानां देवानाम् अमलात्मनां निर्म्मलचित्तानाम् ऋषीणां प्रायो न मुकुन्दचरणे मुक्तिदातृचरणे भक्तिः उपजायते । अन्तःकरणशुद्धौ यथा ज्ञानस्योदयो न तथा भक्तेरित्यभिप्रायः । भक्तजनसङ्गतएव भक्तेरुदयो भवति ।

२८।२९ । भक्त्यैव भगवत्परितोषः न द्विजत्वादिभिरित्याह नालमिति न दानमिति प्रह्लादवाक्येन । हे. असुरात्मजाः, मुकुन्दस्य

३०। मन्ये धनाभिजनरूपतपःश्रुतौज-
स्तेजःप्रभावबलपौरुषबुद्धियोगाः।
नाराधनाय हि भवन्ति परस्य पुंसो
भक्त्या तुतोष भगवान् गजयूथपाय ॥७।९।९।

३१। यस्य नारायणो देवो भगवान् हृद्गतः सदा।
भक्त्या केवलयाऽज्ञानं धुनोति ध्वान्तमर्कवत् ॥
७।१३।२१।

मुक्तिदातुः प्रीणनाय परितोषसाधनाय न द्विजत्वं, देवत्वम्, ऋषित्वं वा, न वृत्तं चरित्रं, न बहुज्ञता, न दानं, न तपः, न इज्या यज्ञः, न शौचं, न व्रतानि च अलं, न समर्थम्। अमलया निर्म्मलया भक्त्या हरिः प्रीयते प्रीतोभवति, भक्तेः अन्यत् यत्किञ्च तत् विड़म्बनं नटनमात्रं, 'तिरस्कारकारणं'—श्रीमच्चक्रवर्त्ती।

३०। भक्त्या विना तदाराधनमपि न सिद्ध्यतीत्याह मन्य इति। मन्ये धनाभिजनरूपतपःश्रुतौजस्तेजःप्रभावबलपौरुषबुद्धियोगाः धनं च, अभिजनः सत्कुले जन्म च, रूपं सौन्दर्य्यं च, तपः कृच्छ्रसाधनं च, श्रुतं पाण्डित्यं च, ओजः इन्द्रियनैपुण्यं च, तेजः कान्तिः च, प्रभावः प्रतापः च, बलं च शारीरं, पौरुषम् उद्यमः च, बुद्धिः प्रज्ञा च, योगः च अष्टाङ्गः, एते धनादयः द्वादशाः अपि गुणाः परस्य पुंसः आराधनाय न भवति, यतः भक्त्या एतैर्विरहितया भगवान् गजयूथपाय गजेन्द्राय तुष्टः अभवत्।

३१। भक्त्या हृदि भगवत्सान्निध्यं सिद्ध्यति तेन चाज्ञाननाशश्चेत्याह यस्येति। यस्य जनस्य केवलया शुद्धया भक्त्या भगवान् नारायणः सर्व्वान्तर्यामी सदा हृद्गतः, तस्य अज्ञानं स भगवान् हृद्गतः सन् ध्वान्तम् अन्धकारम् अर्कवत् सूर्य्यवत् धुनोति अपसारयति।

७२ । श्रेयःस्रुतिं भक्तिमुदस्य ते विभो
क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशलएव शिष्यते
नान्यद्यथा स्थूलतुषावघातिनाम् ॥

३३ । पुरेह भूमन् बहवोऽपि योगिन-
स्त्वदर्पितेहा निजकर्म्मलब्धया ।
विबुद्ध्य भक्त्यैव कथोपनीतया
प्रपेदिरेऽञ्जोऽच्युत ते गतिं पराम् ॥

१०।१४।४।५ ।

३४ । मनोऽकुतश्चिद्भयमच्युतस्य
पदाम्बुजोपासनमत्र नित्यम् ।

३२ । भक्तिमुपेक्ष्य ज्ञानलाभाय प्रयासः क्लेशाय भवतीत्याह श्रेयः-स्रुतिमिति आदिपुरुषवाक्येन । हे विभो, श्रेयःस्रुतिं श्रेयसाम् अभ्युदयापवर्गलक्षणानां स्रुतिः वर्त्मभूतां तव भक्तिम् उदस्य त्यक्त्वा ये केवल-बोधलब्धये ज्ञानमात्रप्राप्तये क्लिश्यन्ति कृच्छ्रसाधनपराः भवन्ति—स्थूल-तुषावघातिनां स्थूलधान्यभागान् तुषान् ये अपघ्नन्ति तेषां यथा तथा—असौ क्लेशलः एव क्लेशमात्रम् एव शिष्यते न अन्यत् किञ्चित् भवति ।

३३ । भक्तेरेवंविधमहत्त्वे सदाचारं प्रमाणयति पुरेति । हे भूमन्, हे अच्युत, पुरा बहवः अपि योगिनः त्वदर्पितेहाः त्वयि अर्पिता ईहा इन्द्रियचेष्टाव्यापाराः यैः तथाभूताः सन्तः निजकर्म्मलब्धया त्वद-र्पितैः निजैः कर्म्मभिः लब्धया कथोपनीतया भगवत्कथया उपनीतया तत्समीपं प्रापितया भक्त्या एव विबुद्ध्य बोधं प्राप्य अञ्जः सुखेन ते तव परां गतिं प्रपेदिरे प्राप्तवन्तः ।

३४ । भगवद्भजनेन भयनिवृत्तिरित्याह मन्ये इति । अच्युतस्य

उद्विग्नबुद्धेरसदात्मभावा-
द्विश्वात्मना यत्र निवर्त्तते भीः ॥

३५ । ये वै भगवता प्रोक्ता उपाया ह्यात्मलब्धये ।
अञ्जः पुंसामविदुषां विद्धि भागवतान् हि तान् ॥

३६ । यानास्थाय नरो राजन् न प्रमाद्येत कर्हिचित् ।
धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिह ॥

११।२।३३—३५ ।

३७ । श्रद्धालुर्मे कथाः शृण्वन् सुभद्रां लोकपावनीं ।
गायन्ननुस्मरन् कर्म्म जन्म चाभिनयन् मुहुः ॥

३८ । मदर्थे धर्म्मकामार्थानाचरन् मदपाश्रयः ।
लभते निश्चलां भक्तिं मय्युद्धव सनातने ॥

अप्रच्युतस्वरूपस्य भगवतः पादाम्बुजोपासनम् अकुतश्चिद्भयं न कुतश्चित् भयं यस्मात् तत् आत्यन्तिकं क्षेमं मन्ये। अत्र संसारे असदात्मभावात् असति देहादौ आत्मभावनातः नित्यं सर्व्वदा उद्विग्नबुद्धेः जनस्य विश्वात्मना सर्व्वथा यत्र भगवदुपासने भीः भयं निवर्त्तते ।

३५ । भगवद्भक्तिशिक्षा स्वयं भगवता दीयते न त्वन्यतोऽस्य प्रवृत्ति-रित्याह ये वै इति । अविदुषां भगवन्माहात्म्यग्राज्ञानां पुंसां जनानां अञ्जः साक्षात्सम्बन्धेन आत्मलब्धये परमात्मप्राप्तये ये उपायाः वै एव प्रोक्ताः, तान् हि भागवतान् धर्म्मान् विद्धि ।

३६ । भगवत्प्रोक्तधर्म्मानुसरणे न पुनः पतनाशङ्केत्याह यानिति । हे राजन् निमि, यान् भागवतधर्म्मान् आस्थाय आश्रित्य न कर्हिचित् प्रमाद्येत न विघ्नैः विहन्येत। नेत्रे निमील्य वा धावन् न इह स्खलेत् न पतेत् ।

३७।३८ । न केवलं भगवत्कथाश्रवणेन किन्तर्हि तल्लीलाभिनया-

३९। सत्सङ्गलब्धया भक्त्या मयि मां स उपासिता।
स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम्॥
११।११।२३—२५।

४०। आज्ञायैवं गुणान् दोषान् मया दिष्टानपि स्वकान्।
धर्म्मान् संत्यज्य यः सर्व्वान् मां भजेत् स तु सत्तमः॥

दिकेनापि तस्मिन् भक्तिः सिद्ध्यतीत्याह श्रद्धालुरिति। श्रद्धालुः श्रद्धावान् सुभद्रां कल्याणमयीं लोकपावनीं लोकपवित्रकरीं मत्कथां शृण्वन्, कर्म्म लीलां, जन्म लोकोत्तरपुरुषे आविर्भावं मुहुः गायन् अनुस्मरन् अभिनयन् स्वयमनुकुर्व्वन्—'नाटकादिरीत्या अभिनयन्'—श्रीमच्चक्रवर्त्ती—धर्म्मकामार्थान् धर्म्मञ्च कामञ्च अर्थञ्च तान् त्रिवर्गान् मदर्थं मम सर्व्वान्तर्यामिणः उद्देश्ये आचरन् मदपाश्रयः अहं सर्व्वान्तर्यामी एव अपाश्रयः एकमात्रशरणं यस्य एवम्भूतः सन्, हे उद्धव, सनातने मयि सर्व्वान्तर्यामिणि निश्चलां भक्तिं लभते।

३९। तया भक्त्या कृतार्थतामाह सत्सङ्गेति। मयि सर्व्वान्तर्यामिणि सत्सङ्गलब्धया सतां साधूनां सङ्गेन लब्धया भक्त्या मां सर्व्वान्तर्यामिणं स उपासिता ध्याता भवति। साधुभिः दर्शितं मे मम सर्व्वान्तर्यामिणः पदं स्वरूपं स अञ्जसा सुखेन शीघ्रम् अव्यवधानेन वा—'रुच्यासक्तिरतिप्रेमभूमिकारूढ़ः सन्' इति—श्रीमच्चक्रवर्त्ती—विन्दते प्राप्नोति।

४०। साधुसमुचितान्,

कृपालुरकृतद्रोहस्तितिक्षुः सर्व्वदेहिनाम्।
सत्यसारोऽनवद्यात्मा समः सर्व्वोपकारकः॥
कामैरहतधीर्दान्तो मृदुः शुचिरकिञ्चनः।
अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः॥
अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः।
अमानी मानदः कल्यो मैत्रः कारुणिकः कविः॥

४१ । ज्ञात्वा ज्ञात्वाथ ये वै मां यावान् यश्चास्मि यादृशः ।
भजन्त्यनन्यभावेन ते मे भक्ततमा मताः ॥

११।११।३३ ।

४२ । बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः ।
प्रायः प्रगल्भया भक्त्या विषयैर्नाभिभूयते ॥

इत्येतान् गुणान् दोषान् तद्विपरीतनिष्ठुरत्वादीन् आम्नाय ज्ञात्वा 'यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्व्वैर्गुणैस्तत्र समासते सुराः' इति सर्व्वेषां देवगुणानामाधारत्वं भक्तेरवेति स्थिरनिश्चयः मया सर्व्वान्तर्यामिणा आदिष्टान् विहितान् स्वकान् स्वभावोचितान् सर्व्वान् धर्म्मान् वर्णाश्रमाचारादीन्

यदा यमनुगृह्णाति भगवानात्मभावितः ।
स जहाति मतिं लोके वेदे च परिनिष्ठिताम् ॥ (४।२९।४६)

इति भगवत्प्रेरणयैव फलान्तराकाङ्क्षानिवृत्त्या संत्यज्य मां सर्व्वान्तर्यामिणं तैरव्यवधानेन भजेत् स तु सत्तमः साधुश्रेष्ठः ।

४१ । एवं धर्म्मान्तराव्यवधानेन भजनतः भगवत्स्वरूपसाक्षात्कारो भवति, भगवत्स्वरूपसाक्षात्कारे पुनरेकान्तभावस्याभ्युदयः, तेन च भावेन भजनं सर्व्वोत्तमभक्तत्वं साधयतीत्याह ज्ञात्वेति । यावान् देशकालापरिच्छिन्नः, यः च सर्व्वात्मा, यादृशः सच्चिदानन्दादिरूपः, तं मां सर्व्वान्तर्यामिणं ज्ञात्वा ज्ञात्वा पुनः पुनः ज्ञात्वा ये अनन्यभावेन एकान्तभावेन भजन्ति ते मे मम भक्ततमाः मताः ।

४२ । भक्तेर्भगवत्प्राप्तिद्वारेण पावनत्वमाह बाध्यमानः इत्यादिभिरष्टभिः । अजितेन्द्रियः अद्यापि अवशीकृतेन्द्रियः, सुतरां विषयैः बाध्यमानः अपि आकृष्यमाणः अपि मद्भक्तः प्रगल्भया समर्थया भक्त्या प्रायः विषयैः न अभिभूयते ।

४३ । यथाग्निः सुसमृद्धार्च्चिः करोत्येधांसि भस्मसात् ।
तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नशः ॥
४४ । न साधयति मां योगो न सांख्यं धर्म्म उद्धव ।
न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्ज्जिता ॥
४५ । भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम् ।
भक्तिः पुनाति मन्निष्ठा श्वपाकानपि सम्भवात् ॥
४६ । धर्म्मः सत्यदयोपेतो विद्या वा तपसान्विता ।
मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति हि ॥

४३ । यथेति । यथा सुसमृद्धार्च्चिः प्रज्वलितः अग्निः एधांसि काष्ठानि भस्मसात् करोति, तथा मद्विषया भक्तिः, हे उद्धव, एनांसि पापानि कृत्स्नशः सर्व्वतोभावेन भस्मसात् करोति ।

४४ । न साधयतीति । हे उद्धव, मां सर्व्वान्तर्यामिणं न योगः सर्व्वकर्म्मार्पणं, न सांख्यम् आत्मतत्त्वनिरतत्वं, न धर्म्मः स्वधर्म्माचरणं, न स्वाध्यायः वेदाध्ययनं, तपः कायिकादि, त्यागः दानं साधयति,—न तथा मत्प्राप्तिसाधनं भवति यथा मम ऊर्ज्जिता प्रवला भक्तिः मां साधयतीति शेषः ।

४५ । भक्त्येति । सतां प्रियः आत्मा अहं सर्व्वान्तर्यामी एकया केवलया श्रद्धया श्रद्धापूर्व्विकया भक्त्या ग्राह्यः ; मन्निष्ठा भक्तिः श्वपाकान् चण्डालान् अपि सम्भवात् जन्मदोषात् पुनाति पवित्री-करोति ।

४६ । धर्म्मइति । सत्यदयोपेतः सत्यं च दया च ताभ्याम् उपेतः सम्यक् धर्म्मः, तपसान्विता तपोयुक्ता विद्या वा, मद्भक्त्या अपेतं विरहितम् आत्मानं न च सम्यक् पुनाति न च सामग्र्येण पवित्री-करोति ।

४७ । कथं विना रोमहर्षं द्रवता चेतसा विना ।
विनानन्दाश्रुकलया शुद्ध्येद्भक्त्या विनाशयः ॥

४८ । वाग्गद्गदा द्रवते यस्य चित्तं
रुदत्यभीक्ष्णं हसति क्वचिच्च ।
विलज्ज उद्गायति नृत्यते च
मद्भक्तियुक्तो भुवनं पुनाति ॥

४९ । यथाग्निना हेम मलं जहाति
ध्मातं पुनः स्वं भजते च रूपम् ।
आत्मा च कर्म्मानुशयं विधूय
मद्भक्तियोगेन भजत्यथो माम् ॥

११।१४।१८—२५ ।

४७ । कथमिति । रोमहर्षं रोमाञ्चं विना द्रवता आर्द्रतामासेम चेतसा चित्तेन विना, आनन्दाश्रुकलया विना,—'रोमहर्षस्तावत् यत्-किञ्चित् चेतोद्रवस्य चिह्नम्, आनन्दाश्रुकला तु विशिष्टस्य तस्य चिह्नम् चेतोद्रवस्तु भक्तेरन्तरङ्गस्वभावः' इति श्रीमज्जीवः—कथं भक्तिः आविर्भवति, भक्त्या च विना कथम् आशयः चित्तं शुद्ध्येत् ।

४८ । वागिति । गद्गदा अस्पष्टाक्षरा वाक् यस्य चित्तं द्रवते द्रावयते, अभीक्ष्णं रुदति, क्वचित् च हसति, विलज्जः लज्जाशून्यः सन् उद्गायति, नृत्यते च, एवं लक्षणः मद्भक्तियुक्तो भुवनं लोकं सर्व्वं पुनाति पवित्रीकरोति, किं पुनर्वक्तव्यं स्वाश्रयं शोधयतीति ।

४९ । यथेति । यथा अग्निना ध्मातं तापितं हेम मलं जहाति, पुनः मलत्यागेन स्वं निजं रूपं भजते, तथा आत्मा च मद्भक्तियोगेन कर्म्मानुशयं कर्म्मवासनां विधूय शोधयित्वा अथ मां सर्व्वान्तर्यामिणं भजति मत्स्वरूपतां प्राप्नोति ।

५० । तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ।
ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावितः ॥
११।१९।५ ।

५१ । यदृच्छया मत्कथादौ जातश्रद्धस्तु यः पुमान् ।
न निर्व्विण्णो नाति सक्तो भक्तियोगोऽस्य सिद्धिदः ॥

५० । सकारणं ज्ञानस्य श्रैष्ठ्यम्,

योविद्याश्रुतसम्पन्न आत्मवानानुमानिकः ।
मायामात्रमिदं ज्ञात्वा ज्ञानञ्च मयि संन्यसेत् ॥
ज्ञानिनस्त्वहमेवेष्टः स्वार्थोहेतुश्च सम्मतः ।
स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मद्दते प्रियः ॥
ज्ञानविज्ञानसम्पन्नाः पद श्रेष्ठं विदुर्म्मम ।
ज्ञानी पियतमोऽतो मे ज्ञानेनासौ बिभर्त्ति माम् ॥
तपस्तीर्थं जपोदानं पवित्राणीतराणि च ।
नालं कुर्व्वन्ति तां सिद्धिं या ज्ञानकलया कृता ॥

इत्येवमुक्त्वा तेन च भक्तेर्मेलनमाह तस्मादिति । तस्मात् ज्ञानस्य तादृश-श्रेष्ठत्वात् ज्ञानेन सहितं तत्पर्य्यन्तं यथा भवति तथा स्वात्मानं जीव-स्वरूपं ज्ञात्वा ज्ञानविज्ञानसम्पन्नः परोक्षापरोक्षज्ञानसम्पन्नः भक्ति-भावितः भक्तिभावयुक्तः मां सर्व्वान्तर्यामिणं भज ।

५१ । ज्ञानकर्म्मयोगयोरधिकारिणोर्विनिर्णय,

योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।
ज्ञानं कर्म्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥
निर्व्विण्णानां ज्ञानयोगोन्यासिनामिह कर्म्मसु ।
तेष्वनिर्व्विण्णचित्तानां कर्म्मयोगश्च कामिनाम् ॥

इति योगत्रयेषु भक्तियोगाधिकारिणमाह यदृच्छयेति । यदृच्छया केनापि भाग्योदयेन—'केनापि परमस्वतन्त्रभगवद्भक्तसङ्गतत्कृपाजात-मङ्गलोदयेन'—श्रीमज्जीवः, 'यादृच्छिकमहत्सङ्गेन'—श्रीमच्चक्रवर्त्ती, यः पुमान् जनः तु मत्कथादौ जातश्रद्धः, न निर्व्विण्णः न निर्व्वेदप्राप्तः,

५२। तावत् कर्म्माणि कुर्व्वीत न निर्व्विद्येत यावता।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते॥
११।२०।८।६।

५३। जातश्रद्धो मत्कथासु निर्व्विण्णः सर्व्वकर्म्मसु।
वेद दुःखात्मकान् कामान् परित्यागेऽप्यनीश्वरः॥

५४। ततो भजेत मां प्रीतः श्रद्धालुर्दृढ़निश्चयः।
जुषमाणांश्च तान् कामान् दुःखोदर्कांश्च गर्हयन्॥

न अतिसक्तः न अत्यनुरक्तः, अस्य जनस्य भक्तियोगः सिद्धिदः सिद्धिहेतुः। कथं 'न निर्व्विण्णो नातिसक्तः' इति विशेषणद्वयं—

न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह।

इत्यत्र वक्ष्यते।

५२। कर्म्मावधिमाह तावदिति। तावत् कर्म्माणि नित्यनैमित्तिकानि कुर्व्वीत, यावता न निर्व्विद्येत—सति निर्व्वेदे ज्ञानयोगाधिकारः—यावत् मत्कथाश्रवणादौ वा श्रद्धा न जायते—ततः भक्त्यावधिकारः। अतएवानन्तरमाह—

स्वधर्म्मस्थो यजन् यज्ञैरनाशीःकाम उद्धव।
न याति स्वर्गनरकौ यद्यन्यन्न समाचरेत्॥
अस्मिँल्लोके वर्त्तमानः स्वधर्म्मस्थोऽनघः शुचिः।
ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छया॥ इति।

५३। 'न निर्व्विण्णो नातिसक्तः' इत्यस्यानुभावं दर्शयति जातश्रद्ध इति। मत्कथासु जातश्रद्धः, सर्व्वकर्म्मसु भगवत्कथाश्रवणातिरिक्तेषु सर्व्वविधेषु कर्म्मसु निर्व्विण्णः विरक्तः, कामान् दुःखात्मकान् वेद जानाति, अथच परित्यागे अनीश्वरः असमर्थः।

५४। किमेवमवस्थायां कर्त्तव्यं तदाह तत इति। ततः श्रद्धालुः श्रद्धावान्—'विश्वासवान्'—श्रीमज्जीवः, दृढ़निश्चयः भक्त्यैव सर्व्वं भवि-

५५ । प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः ।
कामा हृदय्या नश्यन्ति सर्व्वे मयि हृदि स्थिते ॥
११।२०।२७—२९ ।

५६ । तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयोभवेदिह ॥

ध्यतीति दृढ़निश्चयः—'साधनाध्यवसायभङ्गरहितः'—श्रीमज्जीवः—सन् दुःखोदर्कान् दुःखमेव उत्तरफलं येषां तान् कामान् जुषमाणः सेवमानः च गर्हयन् च तत्क्षणमेव निन्दयन् च मां प्रीत्या भजेत । सेवागर्हणयोर्युगपत् स्थितिः दर्शयति शीघ्रमेव निष्कामत्वमुपतिष्ठेत । तत्तु भगवद्भजनेनैव सिद्ध्यति ।

५५ । एवं भजनानन्तरं किं भवति तदाह प्रोक्तेनेति । प्रोक्तेन प्रागुक्तेन भक्तियोगेन असकृत् निरन्तरं मां सर्व्वान्तर्यामिणं भजतः मुनेः मननशीलस्य हृदि मयि सर्व्वान्तर्यामिणि स्थिते सर्व्वे हृदय्याः हृद्गताः कामाः नश्यन्ति ।

५६ । तस्मादिति । यस्माद्भक्तियोगेन,

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः ।
क्षीयन्ते चास्य कर्म्माणि मयि दृष्टेऽखिलात्मनि ॥

एवं भवति तस्मात् मद्भक्तियुक्तस्य मदात्मनः मयि आत्मा चित्तं यस्य तस्य योगिनः योगयुक्तस्य—साक्षाद्दर्शनशीलस्य एव न तु अन्यस्य—न ज्ञानं भगवदनुभवव्यतिरिक्तजरामृत्युव्याध्यादितत्त्वचिन्तनं, न वैराग्यं न विषयाग्रहणम् इह श्रेयः भवेत् प्रायः, किमुत कर्म्मयोगः । 'प्रायोवितर्के' —श्रीमज्जीवः ; 'प्रायोग्रहणेन क्वचिच्छान्तभक्तः प्रथमदशायां तयोर्ग्रहोऽपि नाश्रेयस्करः'—श्रीमच्चक्रवर्त्ती ।

ज्ञानवैराग्ययोर्भक्तिप्रवेशायोपयोगिता ।
ईषत् प्रथममेवेति नाङ्गत्वमुचितं तयोः ॥

यदुभे चित्तकाठिन्ये हेतुः प्रायः सतां मते।
सुकुमारस्वभावेयं भक्तिस्तद्धेतुरीरिता॥

इति भक्तिरसामृतसिन्धुकृतान्तस्य प्रमाणत्वेन गृहीतस्यास्य पद्यस्य एतयोः सिद्धान्तपद्ययोर्व्याख्यानेन व्याख्यानं भवति। तथाहि—'ज्ञानमत्र त्वंपदार्थविषयं तत्पदार्थविषयं तयोरैक्यविषयञ्चेति त्रिभूमिकं ब्रह्मज्ञानमुच्यते, तत्रैषदिति ऐक्यविषयं त्यक्त्वा इत्यर्थः। वैराग्यञ्चात्र ब्रह्मज्ञानोपयोग्येव। तत्रैषदिति भक्तिविरोधि त्यक्त्वेत्यर्थः। तच्च तच्च प्रथममेवेत्यन्यावेशपरित्यागमात्राय ते उपादीयेते तत्परित्यागेन। जाते च भक्तिप्रवेशे तयोरकिञ्चित्करत्वात् तत्तद्भावनया भक्तिविच्छेदकत्वाच्च।' 'उत्तरतस्तु तयोरनुगतौ दोषान्तरमित्याह यदुभे इति। काठिन्यहेतुत्वञ्च नानावादनिरसनपूर्व्वकतत्त्वविचारणादुःखसहनाभ्यासपूर्व्वकवैराग्यस्य च रुक्षस्वरूपत्वात्। तर्हि सहायं विना उत्तरोत्तर भक्तिप्रवेशः कथं स्यात्तत्राह—"भक्तिस्तद्धेतुरीरिता" इति। तस्य भक्तिप्रवेशस्य पूर्व्वपूर्व्वभक्तिरेवेत्यर्थः। ननु भक्तिरपि तत्तदायाससाध्यत्वात् काठिन्यहेतुः स्यात्, तत्राह "सुकुमारस्वभावेयम्" इति, श्रीमद्भगवन्मधुररूपगुणादिभावनामयत्वादिति।' इति। भक्तिमार्गानुगतं वैराग्यं तत्रैवं निरूपितम्—

रुचिमुद्वहतस्तत्र जनस्य भजने हरेः।
विषयेषु गरिष्ठोऽपि रागो यत्र विलीयते॥
अनासक्तस्य विषयान् यथार्हमुपयुञ्जतः।
निर्ब्बन्धः कृष्णसम्बन्धे युक्तं वैराग्यमुच्यते॥
प्रापञ्चिकतया बुद्ध्या हरिसम्बन्धिवस्तुनः।
मुमुक्षुभिः परित्यागो वैराग्यं फल्गु कथ्यते॥ इति।

टीका च—'ननु पूर्व्वं भक्तिप्रविष्टस्य वैराग्यं चित्तकाठिन्यहेतुतयाहेयत्वेनोक्तं तर्हि तस्य विषयभोगएव विहितः। तच्च—"विषयाविष्टचित्तस्य विष्ण्वावेशः सुदूरतः। वारुणीदिग्गतं वस्तु व्रजन्नैन्द्रीं किमाप्नुयात्" इत्यादि शास्त्रविरुद्धम्। अत्रोच्यते भक्तौ रुचिमात्रमेव तस्य विषयरागविलापकं तस्माद्वैराग्याभ्यासकाठिन्यं न युक्तमित्याह रुचिमिति।

५७ । यत् कर्म्मभिर्यत् तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्म्मेण श्रेयोभिरितरैरपि ॥
५८ । सर्व्वं मद्भक्तियोगेन मद्भक्तोलभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥

अत्र रुचिमुद्वहतः प्रायो विलीयत इति परिणामतस्तु कात् स्नेनैव विलीयत इत्यर्थः । तदेतदुपलक्षणमुक्तं ज्ञानञ्च भवत्यस्य—

वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानञ्च यदहैतुकम् ॥

इत्यादेः ।' 'तत् प्रागुक्तं भक्तिप्रवेशयोग्यमेव वैराग्यं व्यनक्ति—अनासक्तस्य सतः यथार्हं स्वभक्त्युपयुक्तमात्रं यथा स्यात् तथा विषयान् उपभुञ्जानस्य पुरुषस्य यत् वैराग्यं तद्युक्तमुच्यते, यत्र कृष्णसम्बन्धे निर्ब्बन्धः स्यादित्यर्थः ।' 'अत्र फल्गु वैराग्यन्तु भक्त्यनुपयुक्तं यत् तदेव ज्ञेयं, भगवद्वहिर्मुखानामपराधपर्य्यन्तं स्यात् इत्याह प्रापञ्चिकतयेति । हरिसम्बन्धिवस्तुच तत्प्रसादादिः, तस्य परित्यागो द्विविधः—अप्रार्थना, प्राप्तानङ्गीकारः । तत्रोत्तरस्तु सुतरामपराध एव ज्ञेयः । "प्रसादाग्रहणं विष्णोः" इत्यादिवचनेषु श्रवणात् ।' इति । अत्रायं निष्कर्षः—भक्तिर्हि सर्व्वत्र परमपुरुषस्य लीलामाधुर्य्यं दर्शयति । यदि ज्ञानेन प्रपञ्चस्य मिथ्यात्वं प्रतिपादितं स्यात्, तेन च तस्य तल्लीलाया अपि मिथ्यात्वमायाति, सुतरां तादृशं ज्ञानं न भक्तिमार्गेऽनुकूलं प्रत्युत तत्सङ्कोचकरमेव । प्रपञ्चस्य न मिथ्यात्वं किन्तर्हि प्रदर्शनं भगवतेति पक्षे भक्तिपरिपुष्टिरेव स्यात्, जीवस्य चित्तपरितोषणाय वैचित्र्याद्यनुभवेन ज्ञानादिवर्द्धनाय च तस्येदृग्यत्नदर्शनेन । अन्नादिकं सर्व्वं भगवत्प्रसादलभ्यं । तत्र तस्य प्रसादत्वमपश्यतो वैराग्यं शुष्कत्वसाधकं सुतरां भक्त्यन्तराय एव तत् ।

५७।५८ । साक्षात्सम्बन्धेन ज्ञानवैराग्यासाधनेन कथं न स्याच्छ्रेयो-

५९। न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम्॥

६०। नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम्।
तस्मान्निराशिषोभक्तिर्निरपेक्षस्य मे भवेत्॥

६१। न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम्॥

११।२०।३१—३६।

हानिस्तत्राह, यदिति सर्व्वमिति। यत् कर्म्मभिः, यत् तपसा, यत् ज्ञानवैराग्यतः, अपिच योगेन, दानधर्म्मेण, इतरैः श्रेयोभिः व्रतादिभिः भवति, तत् सर्व्वं मद्भक्तः मद्भक्तियोगेन अञ्जसा सुखेन लभते, यदि कथञ्चित् भक्त्युपकरणत्वेनैव वाञ्छति स्वर्गापवर्गं मद्धाम लभते।

५९। भक्तास्तु भगवदतिरिक्तेषु सर्व्वेषु स्पृहाशून्याः सुतरां तेषां न वाञ्छास्तीत्याह न किञ्चिदिति। साधवः भक्तिसाधनतत्पराः, धीराः धीमन्तः मम एकान्तिनः मय्येव प्रीतियुक्ताः भक्ताः न किञ्चित् वाञ्छन्ति; मया दत्तम् अपुनर्भवं अपुनरावृत्तिसाधकम् आत्यन्तिकं कैवल्यं केवलीभावम् अपि न वाञ्छन्ति।

६०। एतादृक् सर्व्वनिरपेक्षत्वमेव भक्तिसाधकमित्याह नैरपेक्ष्यमिति। नैरपेक्ष्यं स्वर्गसुखादिनिरपेक्षत्वं परम् उत्कृष्टम् अनल्पं महत् निःश्रेयसं फलं तत्साधनञ्च प्राहुः। तस्मात् निराशिषः प्रार्थनाशून्यस्य निरपेक्षस्य प्रार्थनाकारणभूतापेक्षारहितस्य निवृत्तस्य जनस्य मे मयि भक्तिः भवेत्।

६१। सत्त्वरजस्तमोगुणसम्भूतपापपुण्यादीनां भगवद्भक्तेषु न सम्भव इत्याह न मयीति। साधूनां निरस्तरागादीनाम् अतः समचित्तानाम् अतएव बुद्धेः प्रकृतेः परम् ईश्वरं—'तस्माद्ब्रह्मणि ते स्थिताः' इति स्मर-

६२ । योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः ।
महर्ज्जनस्तपः सत्यं भक्तियोगस्य मद्गतिः ॥११।२४।१४

६३ । एताः संसृतयः पुंसोगुणकर्म्मनिबन्धनाः ।
येनेमे निर्ज्जिताः सौम्य गुणा जीवेन चित्तजाः ।
भक्तियोगेन मन्निष्ठो मद्भावायोपपद्यते ॥

णात्—उपेयुषां प्राप्तानां मयि एकान्तभक्तानां न गुणदोषोद्भवाः गुणाः सत्त्वरजस्तमांसि तैः तदुद्भूतैः दोषैश्च उद्भवो येषां ते गुणाः प्राकृतधर्म्माः, यद्वा गुणदोषैः विहितप्रतिषिद्धैः उद्भवो येषां ते गुणाः पापपुण्यादयः न भवन्ति । न हि ते प्रकृतौ किन्तर्हि भगवति तिष्ठन्ति, अतएव देहादिधर्म्मैर्न तेषां परिभवः ।

६२ । इह खलु

देवानामोक आसीद् स्वर्भूतानाञ्च भुवः पदम् ।
मर्त्यादीनाञ्च भूर्लोकः सिद्धानां वितयात् परम् ॥
अधोऽसुराणां नागाना भूमेरोकोऽसृजत् प्रभुः ।
त्रिलोक्यां गतयः सर्व्वाः कर्म्मणां त्रिगुणात्मनाम् ॥

इति त्रिविधलोकेषु गुणसम्भूतेषु कर्म्मनिरतानां गतिः, सिद्धानान्तु तद्वहिर्महरादिलोकेषु भक्तानान्तु भवगतीत्याह योगस्येति । योगस्य तपसः न्यासस्य संन्यासस्य च गतयः अमलाः विशुद्धाः । कुत्र तत्तत्परायणानां गतिः ? योगादितारतम्येन—महः, जनः, तपः, सत्यम् इति तद्वाख्यलोकेषु गतिः ; भक्तियोगस्य मद्गतिः मयि परमात्मनि स्थितिः ।

६३ । षष्ठाध्याये गुणकर्म्मनिबन्धनसत्यादीनामुल्लेखोऽस्ति, अध्यायेऽस्मिन् भक्तियोगेन तेषां जयो भगवद्भावश्च भक्तानां वक्तव्यः । तदेवोच्यते एता इति । पुंसो जनस्य गुणकर्म्मनिबन्धनाः एताः संसृतयः संसाराः संसारगतयः । हे सौम्य, येन जीवेन चित्तजाः इमे गुणाः निर्ज्जिताः स भक्तियोगेन मन्निष्ठः सन् मद्भावाय मोक्षाय—'मत्प्रेम्णे' —श्रीमज्जीवः, 'मत्साक्षात्काराय'—श्रीमच्चक्रवर्त्ती, उपपद्यते कल्पते ।

६४ । तस्माद्देहमिमं लब्ध्वा ज्ञानविज्ञानसम्भवम् ।
गुणसङ्गं विनिर्धूय मां भजन्तु विचक्षणाः ॥
११।२५।३२।३३ ।

६५ । तेषु नित्यं महाभाग महाभागेषु मत्कथाः ।
सम्भवन्ति हि ता नृणां जुषतां प्रपुनन्त्यघम् ॥
६६ । ता ये शृण्वन्ति गायन्ति ह्यनुमोदन्ति चादृताः ।
मत्पराः श्रद्दधानाश्च भक्तिं विन्दन्ति ते मयि ॥
६७ । भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते ।
मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥
११।२६।२८—३० ।

६४। तत् किं कर्त्तव्यं तदाह तस्मादिति। तस्मात् ज्ञानविज्ञानसम्भवं ज्ञानविज्ञानयोः सम्भवः यस्मिन् तम् इमम् देहं लब्ध्वा गुणसङ्गं गुणासक्तिं विनिर्द्धूय परिहाय विचक्षणाः मां सर्व्वान्तर्यामिणं भजन्तु ।

६५—६७। कथं भक्तिरुदेति तत्, तस्याः परमपुरुषार्थताञ्चाह तेषु इति, ता ये इति, भक्तिमिति। हे महाभाग, तेषु महाभागेषु नित्यं मत्कथाः सम्भवन्ति, ताः कथाः जुषतां सेवमानानां नृणां जनानाम् अघं पापं प्रपुनन्ति । आदृताः आदरयुक्ताः—'कथाविषयकमादरणम् आदृतिः सा विद्यते येषां ते आदृताः अर्श आदिभ्यो मत्वर्थीयोऽच् (क्र, स,३।१३। १ )' इति श्रीमद्राधारमणः—मत्पराः मत्परायणाः श्रद्दधानाः च ये ताः कथा शृण्वन्ति गायन्ति अनुमोदन्ति च, ते मयि सर्व्वान्तर्यामिणि भक्तिः विन्दन्ति । अनन्तगुणे आनन्दानुभवात्मनि ब्रह्मणि मयि सर्व्वान्तर्यामिणि भक्तिं लब्धवतः प्राप्तवतः साधोः निर्ज्जितरागादेः अन्यत् किम् अवशिष्यते ?

६८। तथापि सङ्गः परिवर्ज्जनीयो
गुणेषु मायारचितेषु तावत् ।
मद्भक्तियोगेन दृढ़ेन याव-
द्रजो निरस्येत मनःकषायः ॥११।२८।२७।

६८। यावन्न भक्तियोगेन मनोमालिन्यमपनीतं भवति तावत् विषयसङ्गत्यागः कर्त्तव्य इत्याह तथापीति ।

यथा नभोवायूनलाम्बु भूगुणैर्गतागतैर्व्वर्त्तुगुणैर्न सज्जते ।
तथाक्षर सत्त्वरजस्तमोमलैरहम्मतेः संसृतिहेतुभिः परम् ॥

इति यद्यप्यात्मनोनिर्लेपत्वमेव तथापि दृढ़ेन मद्भक्तियोगेन यावत् मनःकषायः मनोमालिन्यं रजः निरस्येत निवर्त्तयेत तावत् मायारचितेषु गुणेषु विषयेषु सङ्गः परिवर्ज्जनीयः ।

इति श्रीसात्त्वतसंहितोत्थायां व्याख्यानसहितायां
श्रीमद्गीताप्रपूर्त्तौ भक्तिनिर्द्देशो नाम
दशमोऽध्यायः ।

——

# एकादशोऽध्यायः।

## प्रीतिनिर्द्देशः।

भक्तिनिर्द्देशानन्तरं तत्परिणतिः प्रीतिर्निर्द्दिश्यते। प्रीतेस्तत्त्वमेवं प्रीतिसन्दर्भे निर्द्दिष्टम् :—'पुरुषप्रयोजनं तावत् सुखप्राप्तिर्दुःखनिवृत्तिश्च। श्रीभगवत्प्रीतौ तु सुखत्वं दुःखनिवर्त्तकत्वञ्चात्यन्तिकमिति। ......परमतत्त्वसाक्षात्कारलक्षणं ज्ञानमेव परमानन्दप्राप्तिः। सैव परमपुरुषार्थः।......परमसुखं खलु भगवतस्तद्गुणवृन्दस्य च स्वरूपम्। सुखञ्च निरूपाधिप्रीत्यास्पदम्। ततस्तदनुभवे प्रीतेरेव मुख्यत्वम्। तस्मात् पुरुषेण सैव सर्व्वदान्वेष्टव्येति पुरुषप्रयोजनत्वं तत्रैव परमतममिति स्थितम्।......तत्प्रीतिविशेषातिशयवतां हि तेषां तद्भक्तार्त्तिभरेणैव तत्स्फूर्त्तावप्यतृप्तौ सत्यां तत्सामीप्यप्राप्तेश्च तत्प्राप्तिविघातकसंसारबन्धनचोटनस्य च प्रार्थनं दृश्यते।..... तेषां तत्तत्प्रार्थनमपि तत्प्रीतिविलासएव। अत्रेदं तत्त्वम्—एकान्तिनस्तावद्द्विविधाः। अजातजातत्वप्रीतिभेदेन। जातप्रीतयश्च द्विविधाः। एके तदीयानुभवमात्रनिष्ठाः शान्तभक्तादयः। अन्ये तदीयदर्शनसेवनादिरसमयाः परिकरविशेषाभिमानिनः स्वयं परिकरविशेषाश्च। तत्र तेष्वजातप्रीतिभिः सर्व्वैः पुरुषार्थत्वेन तत्प्रीतिरेव प्रार्थनीया। अथ जातप्रीतिषु शान्तभक्तादयस्तु कदाचित् दर्शनादिकं प्रार्थयन्ते सेवादिकं नैव तद्वासनाया अभावात्; सकृदपि कृपादृष्ट्यादिलाभेन तृप्ताश्च भवन्ति 'नातिक्षामं भगवतः स्निग्धापाङ्गविलोकनात्' इति श्रीकर्द्दमवर्णनात्। अतएव तत्सामीप्यादिकेऽपि तेषामनाग्रहः। ये तु तत्परिकरविशेषाभिमानिनस्ते खलु तत्तत्प्रीतिविशेषोत्कण्ठिनो यदा भवन्ति तदा तत्तत्सेवाविशेषेच्छया प्रार्थयन्त्येव तत्सामीप्यादिकम्। तत्प्रार्थना च प्रीति-

विलासरूपैव पुष्णाति च तामिति गुणएव । यदा च दैन्येन तेषां तत्-प्राप्तिसम्भावना जायते तदापि च तत्प्रीत्यविच्छेदमात्रं प्रार्थयन्ते । सोऽपि च गुणएव । यत्तु केवलसंसारमोक्षतत्सामीप्यानन्दविशेषमात्र-प्रार्थनं प्रीतिविकारताशून्यं तत् पुनः सर्व्वथा केषाञ्चिदप्येकान्तिनां नातिरुचिरम् ।.....एवं सालोक्यसार्ष्टीत्यादौ तेषां मध्ये सेवनं विना यत्तन्न गृह्णन्ति किन्तु सेवनोपयोगेऽव गृह्णन्तीति कथ्यते । तत्रैकत्व-लक्षणं सायुज्यन्तु स्वरूपतएव तद्विनाभूतम् । अन्यत्तु वासनाभेदेन । स्वारूप्यस्य च सेवोपकारित्वांशे भावविशेषेण । श्रीवैकुण्ठेऽपि तदीय-नित्यसेवकानां तथैव तादृशत्वम् ।......तस्माद्यथातथा श्रीमत्प्रीतेरेव पुरुषार्थत्वमित्यागतम् ।...अथ तस्याः स्वरूपलक्षणं विष्णुपुराणे प्रह्लादे-नातिदेशद्वारा दर्शितम्—

या प्रीतिरविवेकानां विषयेष्वनपायिनी ।
त्वामनुस्मरतः सा मे हृदयान्नापसर्पतु ॥ इति ।

या यल्लक्षणा सा तल्लक्षणा इत्यर्थः ।......प्रीतिशब्देन खलु मुत् प्रमुद्-हर्षा-नन्दादिपर्य्यायं सुखमुच्यते । भावहार्द्दसौहार्द्दादिपर्य्यायः प्रियता चोच्यते । तत्र उल्लासात्मको ज्ञानविशेषः सुखम् ।......तदेव विषयदृष्टान्तेन श्रीभगवद्विषयानुकूल्यात्मकस्तदनुगतस्पृहादिमयो ज्ञानविशेषस्तत्प्रीति-रिति लक्षितम् ; विषयमाधुर्य्यानुभववत्' इति । अतएवोक्तं वेदान्त-स्यमन्तके—'तच्च ज्ञानं द्विविधं परोक्षमपरोक्षञ्च । परोक्षं शाब्दम्, अपरोक्षन्तु ह्लादिनीसारसमवेतसंविद्रूपम् । यच्च भक्तिशब्दव्यपदेश्यं दृष्टम् ।......तत्र पूर्व्वं परम्परया परन्तु साक्षाद्ब्रह्मप्रापकं बोध्यम् ।' ह्लादिनीसारः प्रेमेति तद्विदः । सिद्धान्तस्यास्य मूलं तत्रैव प्रीति-सन्दर्भे :—'या चैवं भगवन्तं स्वानन्देन मदयति सा किं लक्षणा स्या-दिति । न तावत् सांख्यानामिव प्राकृतसत्त्वमयमायिकानन्दरूपा, भगवतो मायानभिभाव्यत्वश्रुतेः स्वतस्तृप्तत्वाच्च । न च निर्व्विशेषवादि-नामिव भगवत्स्वरूपानन्दरूपा, अतिशयानुपपत्तेः । अतो नतरां

१। विपदः सन्तु ताः शश्वत् तत्र तत्र जगद्गुरो।
भवतो दर्शनं यत् स्यादपुनर्भवदर्शनम्॥

जीवस्य स्वरूपानन्दरूपा अत्यन्तक्षुद्रत्वात्तस्य। ततो

ह्लादिनी सन्धिनी सवित् त्वय्येका सर्व्वसंश्रये।
ह्लादतापकरी मिश्रा त्वयि नो गुणवर्ज्जिते॥

इति श्रीविष्णुपुराणानुसारेण ह्लादिन्याख्यतदीयशक्त्यानन्दरूपैवेत्यवशिष्यते। यया खलु भगवान् स्वरूपानन्दमनुभवति, यदानन्देनानन्दो विशेषी च भवति, ययैव तं तमानन्दमन्यानप्यनुभावयति। अथ तस्या अपि भगवति सदैव वर्त्तमानतया अतिशयानुपपत्तेस्त्वेवं विवेचनीयं· · तस्माद्ध्लादिन्या एव सर्व्वानन्दातिशायिनी वृत्तिर्नित्यं भक्तवृन्देष्वेव निक्षिप्यमाना भगवत्प्रीत्याख्यया वर्त्तते। ततस्तदनुभवेन श्रीभगवानपि श्रीमद्भक्तेषु प्रीत्यतिशयं भजते। अतएव तत्सुखेन भक्तभगवतोः परस्परमावेशमाह—

साधवो हृदयं मह्यं साधूनां हृदयन्त्वहम्।
मदन्यत् ते न जानन्ति नाहं तेभ्यो मनागपि॥'

इति। संहितायामस्यां न खल्वस्ति श्रीराधाया नामोल्लेखः।

अनयाराधितो नूनं भगवान् हरिरीश्वरः। (१०।३०।२८)

इत्यतः श्रीमद्गोस्वामिपादैर्यद्यपि तन्नामकरणं साधितं, तथापि 'महाभावस्वरूपेयं' 'ह्लादिनोसारः प्रेमा सर्व्वभावोद्गमोल्लासी चेत् असौ मादन उच्यते' इत्यादिषु तत्त्वमस्य विद्वद्भिर्ज्ञेयम्। स्वस्वरूपपूर्णतैव भगवतः सुखमुच्यते। सैव ग्रहणसामर्थ्यानुसारतो जीवे संक्रामिता शुद्धप्रीतिं सुखस्वरूपामुद्भावयति।

१। संसारिणो न जातु विपदमाकाङ्क्षन्ति तथा विषयभोगविच्छेदात्। भगवत्प्राणास्तु तामाद्रियन्ते, स्वेष्टसाक्षात्कारानुकूलत्वात् तस्याः। इदं पुनः प्रीतेरसाधारणलक्षणमिति तदेव तदत्र प्रथममुपन्यस्यते कुन्ति-

२ । जन्मैश्वर्य्यश्रुतश्रीभिरेधमानमदः पुमान् ।
नैवार्हत्यभिधातुं वै त्वामकिञ्चनगोचरम् ॥१।८।२५।२६

३ । त्वयि मेऽनन्यविषया मतिर्मधुपतेऽसकृत् ।
रतिमुद्वहतादद्धा गङ्गेवौघमुदन्वति ॥१।८।४२ ।

४ । कोनाम तृप्येद्रसवित् कथायां
महत्तमैकान्तपरायणस्य ।
नान्तं गुणानामगुणस्य जग्मु-
र्योगेश्वरा ये भवपाद्ममुख्याः ॥

वाक्येन विपद इति । हे जगद्गुरो, शश्वत् नियतं ताः विपदः सन्तु । कथम् ? यत् यस्मात् तत्र तत्र विपदि भवतः अपुनर्भवदर्शनं नास्ति पुनरपि भवस्य संसारदुःखस्य दर्शनं यस्मात् तादृशं दर्शनं स्यात् ।

२ । जन्माद्यभिमानवतां भगवन्नामग्रहणेऽपि नास्तुप्रयोगिता, साक्षाद्दर्शनस्य तु का कथा ? तत्त्वकिञ्चनस्य तदर्थत्यक्तसर्व्वस्वस्यैव भवतीत्याह जन्मेति । जन्म सत्कुले, ऐश्वर्य्यं सम्पत्, श्रुतं शास्त्रवित्त्वं, श्रीः सौन्दर्य्यम्, एभिः एधमानमदः वृद्धिशीलः मदः अभिमानः यस्य स पुमान् जनः अकिञ्चनगोचरम् अकिञ्चनानां गोचरं विषयभूतं त्वां सर्व्वान्तर्यामिणं, हे दीनबन्धो, हे शरणागतवत्सल इति अभिधातुं वक्तुं न अर्हति न उपयुक्तो भवति ।

३ । भगवत्यनवच्छिन्ना प्रीतिरेव भक्तिमतां प्रार्थनीयेति तद्वाक्येनैव दर्शयति त्वयीति । हे मधुपते—मधुब्राह्मणेन जगज्जीवयोर्मधुत्वस्थापनात्—हे जगज्जीवस्वामिन्, अनन्यविषया सती मे मम मतिः त्वयि असकृत् अनवच्छेदेन रतिं प्रीतिं—गङ्गा उदन्वति समुद्रे ओघं पूरम् इव—अद्धा सुस्पष्टम् उद्वहतात् उद्वहतु प्रीतिं करोतु ।

४ । भगवद्गुणवर्णनश्रवणोत्सुक्येन तस्मिन् रतिमाविष्करोति

५ । तन्नोभवान् वै भगवत्प्रधानः
महत्तमैकान्तपरायणस्य ।
हरेरुदारं चरितं विशुद्धं
शुश्रूषतां नो वितनोतु विद्वन् ॥१।१८।१४।१५

६ । अहो वयं जन्मभृतोऽद्य हास्म
वृद्धानुवृत्त्यापि विलोमजाताः ।
दौष्कुल्यमाधिं विधुनोति शीघ्रं
महत्तमानामभिधानयोगः ॥

७ । कुतः पुनर्गृणतो नाम तस्य
महत्तमैकान्तपरायणस्य ।
योऽनन्तशक्तिर्भगवाननन्तो
महद्गुणत्वाद्यमनन्तमाहुः ॥

ऋषिगणवाक्येन कोनामेति । महत्तमैकान्तपरायणस्य महत्तमानाम् एकान्तेन परम् अयनम् आश्रयः यः तस्य कथायां को नाम रसवित् रसज्ञः तृप्येत् ? कथं नात्र तृप्तेः सम्भावना ? भवपाद्ममुख्याः भवः शिवः पाद्मः ब्रह्मा च मुख्यौ येषां ते ये योगेश्वराः योगिनां प्रधानाः, ते अगुणस्य प्राकृतगुणरहितस्य गुणानां कल्याणगुणानाम् अन्तं न जग्मुः न गतवन्तः ।

५ । तन्नइति । तत् तस्मात्, हे विद्वन्, नः अस्माकं मध्ये भगवत्प्रधानः भगवान् प्रधानः सेव्यः यस्य स भवान् शुश्रूषतां श्रवणेच्छूनां नः अस्माकं महत्तमैकान्तपरायणस्य हरेः उदारं विशुद्धं चरितं वितनोतु विस्तारयतु ।

६।७ । भगवद्भक्तानां सङ्गः जन्मवैगुण्यमपनयति भगवति प्रीति-

८ । एतावतालं ननु सूचितेन
गुणैरसाम्यानतिशायनस्य ।
हित्वेतरान् प्रार्थयतोविभूति-
र्यस्याङ्घ्रिरेणुं जुषतेऽनभीप्सोः ॥१।१८।१८—२०

९ । यत्रानुरक्ताः सहसैव धीरा
व्यपोह्य देहादिषु सङ्गमूढम् ।

जननद्वारा, सुतरां तद्वैगुण्यापनये तेष्वभिव्यक्तानन्तगुणसंस्पर्शस्तस्मिन् प्रीतियुक्तस्यात्यौत्सुक्याय भवतीति दर्शयति सूतवाक्येन अहो इति कुत इति द्वाभ्याम् । अहो आश्चर्य्ये ह हर्षे । विलोमजाताः सङ्करदोषयुक्ताः वयं वृद्धानुवृत्त्या वृद्धानां ज्ञानवृद्धानाम् अनुवृत्त्या आदरेण जन्मभृतः सफलजन्मानः आस्म जाताः । महत्तमानाम् अभिधानयोगः संलापः शीघ्रं दौष्कुल्यं दुष्कुलनिमित्तम् आधिं मनःपीड़ां विधुनोति, अपनयति । एवं सति यः अनन्तः अनन्तशक्तिः भगवान् महद्गुणत्वात् महत्सु अभिव्यक्तगुणत्वात् यम् अनन्तम् आहुः, महत्तमैकान्तपरायणस्य तस्य भगवतः नाम गृणतः कीर्त्तयतः कुतः पुनः ; किं पुनर्वक्तव्यं दौष्कुल्यमाधिं विधुनोतीति ।

८ । तस्य गुणानन्त्यं दर्शयति एतावतेति । यस्य विभूतिः श्रीः ऐश्वर्य्यशक्तिः प्रार्थयतः प्रार्थयमानान् इतरान् देवादीन् हित्वा परित्यज्य अनभीप्सोः भजतु मामिति अभिलाषविरहितस्य यस्य अङ्घ्रिरेणुं जुषते सेवते, तस्य गुणैः असाम्यानतिशायनस्य न विद्यते तत्साम्यं तदतिशायनम् आधिक्यं च अन्यस्य एतावता सूचितेन अलं पर्य्याप्तम् । तं हित्वा श्रीर्नान्यं भजते इत्येतत् तस्य गुणातिशय्यं गुणैरसाम्यञ्च सूचयतीति फलितार्थः ।

९ । भगवत्प्रीतेरेष महिमा यत् ततः सहसैव संसारासक्तिर्निवृत्त-

व्रजन्ति तत् पारमहंस्यमन्त्यं
यस्मिन्नहिंसोपशमः स्वधर्म्मः ॥१।१८।२२ ।

१० । तस्यैव मेऽघस्य परावरेशो
व्यासक्तचित्तस्य गृहेष्वभीक्ष्णम् ।
निर्व्वेदमूलो द्विजशापरूपो
यत्र प्रसक्तोभयमाशु धत्ते ॥

११ । तं मोपयातं प्रतियन्तु विप्रा
गङ्गा च देवी धृतचित्तमीशे ।
द्विजोपसृष्टः कुहकस्तक्षको वा
दशत्वलं गायत विष्णुगाथाः ॥

भवति, हिंसादयश्च तिरोदधति, तस्मिन्नेव नित्यस्थितिः सिद्ध्यतीत्याह यत्रेति । यत्र भगवति अनुरक्ताः धीराः सन्तः सहसा एव देहादिषु जढ़ं धृतं सङ्गम् आसक्तिं व्यपोह्य परिहाय तत् अन्त्यं पराकाष्ठाप्राप्तं पारमहंस्यं ब्रह्मणि नित्यस्थितिरूपं व्रजन्ति प्राप्नुवन्ति, यस्मिन् पारमहंस्ये अहिंसा उपशमः च स्वधर्म्मः स्वाभाविकधर्म्मः ।

१० । भगवति प्रीतौ क्लेशोऽपि तत्प्रसादत्वेन प्रतिभातीति दर्श-यति परिच्छिन्नाक्येन तस्यैवेति । गृहे अभीक्ष्णं व्यासक्तचित्तस्य अघस्य गर्ह्यकर्म्मणः तस्य मे परावरेशः परावरयोः जीवप्रकृत्योः ईशः नियन्ता निर्व्वेदमूलः वैराग्यहेतुः द्विजशापरूपः अभूत्, यत्र शापे गृहेषु प्रसक्तः अत्यासक्तः आशु भयं धत्ते निर्व्विस्रः भवति ।

११ । भगवद्भक्तितो मृत्युरपि तुच्छीभवतीति प्रदर्शयति परिच्छि-दनुभवेन तमिति । ईशे भगवति धृतचित्तं मा मां विप्राः ब्रह्मविदः देवी गङ्गा भागीरथी च उपयातं शरणागतं प्रतियन्तु जानन्तु । द्विजोप-

१२ । पुनश्च भूयाद्भगवत्यनन्ते
रतिः प्रसङ्गश्च तदाश्रयेषु ।
महत्सु यां यामुपयामि सृष्टिं
मैत्रन्तु सर्व्वत्र नमो द्विजेभ्यः ॥
११।१९।१४—१६ ।

१३ । यदङ्घ्र्यनुध्यानसमाधिधौतया
धियानुपश्यन्ति हि तत्त्वमात्मनः ।
वदन्ति चैतत् कवयो यथारुचं
स मे मुकुन्दो भगवान् प्रसीदताम् ॥२।४।२१

सृष्टः प्रेरितः कुहकः छद्मसारणसाधनं तत्चकः वा अलं दशतु ; भवन्तः विष्णुगाथाः परमपुरुषकथाः गायत ।

१२ । इह परत्र भगवत्यनुरागः भक्तसङ्गश्च प्रार्थनीय इति दर्शयति तद्वाक्येनैव पुनश्चेति । पुनश्च भगवति अनन्ते रतिः प्रीतिः तदाश्रयेषु स आश्रयो येषां तेषु महत्सु सत्सु सङ्गः च भूयात् । यां यां सृष्टिं निर्म्माणं लोकान्तरगतिम्—'जन्मे'ति श्रीमच्छ्रीधरः—उपयामि, तस्यां तस्यां सर्व्वत्र मैत्रं सर्व्वभूतसौहृद्यं तु भूयात् । द्विजेभ्यः उपस्थितेभ्यः नमः ।

१३ । प्रीतेस्तत्त्वसाक्षात्कारसामर्थ्यमाह यदङ्घ्रीति । यदङ्घ्र्यनुध्यानसमाधिधौतया यस्य भगवतः अङ्घ्रिः चरणं तस्य अनुध्यानं नियतधारणं तदेव समाधिः एकाग्रचित्तता तेन धौतया शोधितया धिया बुद्ध्या कवयः क्रान्तदर्शिनः आत्मनः आत्मनामात्मनः तत्त्वं हि पश्यन्ति, एतत् तत्त्वं च यथारुचं रुच्यनुसारेण वदन्ति विविधभावेन वर्णयन्ति, स मुकुन्दः मुक्तिदाता भगवान् मे मह्यं प्रसीदतां प्रसन्नः भवतु ।

१४। न भारती मेऽङ्ग मृषोपलक्ष्यते
न वै क्वचिन्मे मनसो मृषा गतिः।
न मे हृषीकाणि पतन्त्यसत्पथे
यन्मे हृदौत्कण्ठ्यवता धृतोहरिः ॥२।६।३२।

१५। विष्णोर्नु वीर्य्यगणनां कतमोऽर्हतीह
यः पार्थिवान्यपि कविर्विममे रजांसि।
चस्कम्भ यः स्वरहसा स्खलता त्रिपृष्ठं
यस्मात् त्रिसाम्यसदनादुरुकम्पयानम् ॥

२।७।४०।

१४। प्रीत्या हृदि हरौ विधृते वाचामिन्द्रियाणां मनसश्च मृषा गतिरवरुद्ध्यतइत्याह आदिपुरुषवाक्येन न भारतीति। अङ्ग हे नारद, मे मम भारती वाक् न मृषा उपलक्ष्यते, न एव मे मम मनसः क्वचित् मृषा गतिः, न मे मम हृषिकाणि इन्द्रियाणि असत्पथे पतन्ति? कथमेवमभूत्? यत् यस्मात् मे मया औत्कण्ठ्यवता व्याकुलेन भक्त्युद्रेकयुक्तेन हृदा हरिः धृतः।

१५। ऐश्वर्य्यज्ञानविमिश्रां प्रीतिमाह विष्णोरिति। यः विष्णुः यस्मात् स्वरहसो हेतोः त्रिसाम्यसदनात् त्रिसाम्यरूपं सदनम् अधिष्ठानं प्रधानं—'प्रकृत्यावरणं'—श्रीमद्विश्वनाथः—तस्मात् आरभ्य उरु अधिकं कम्पयानं कम्पमानं त्रिपृष्ठं सत्यलोकं—'त्रयाणां लोकानां पृष्ठमण्डकटाहम्'—श्रीमद्विश्वनाथः—अस्खलता प्रतिघातशून्येन स्वरहसा स्ववेगेन चस्कम्भ धृतवान्, तस्य विष्णोः—इह यः कविः समर्थः पार्थिवानि अपि रजांसि विममे विगणितवान् तादृशोऽपि कतमः कोऽपि नु—वीर्य्यगणनाम् अर्हति कर्त्तुमिति शेषः।

१६ । यत् सानुबन्धेऽसति देहगेहे
ममाहमित्यूढ़दुराग्रहाणाम् ।
पुंसां सुदूरं वसतोऽपि पुर्य्यां
भजेम तत्ते भगवन् पदाब्जम् ॥

१७ । तान् वै ह्यसद्वृत्तिभिरक्षभिर्य्यें
पराहृतान्तर्मनसः परेश ।
अथो न पश्यन्त्युरुगाय नूनं
ये ते पदन्यासविलासलक्ष्म्याः ॥३।५।४३।४४ ।

१६ । विषयासक्तानामनेषां दुर्लभत्वेऽपि भजनशीलानां न तथेत्यनुरागमहिमानं दर्शयति यदिति । सानुबन्धे सोपकरणे असति तुच्छे देहगेहे मम अहम् इति जढ़दुराग्रहाणां जढ़ः धृतः दुराग्रहः यैः तेषां जनानां पुर्य्यां स्वदेहे अन्तर्यामितया वसतः अपि तव यत् पदाब्जं सुदूरं, हे भगवन्, तत् ते तव पदाब्जं भजेम, वयं देवा इति शेषः ।

१७ । तादृशानां विषयासक्तानां न केवलं भगवत्पदाब्जं सुदूरं भक्त्युद्दीपनाय ये भक्ताः प्रभवः तेषामपि दर्शनं तथेति निरुच्य प्रीतिमहिमानमधिकतरं स्फोरयति तानिति । हे परेश, हे उरुगाय, असद्वृत्तिभिः अक्षैः इन्द्रियैः ये जनाः पराहृतान्तर्मनसः पराहृतं दूरम् अपहृतम् अन्तःस्थं मनो येषां ते अथो अतएव तान् न पश्यन्ति ये ते तव पदन्यासविलासलक्ष्म्याः पदन्यासाः स्वरूपाधानं तस्य विलासः विविधभावेनाविष्क्रिया तस्य लक्ष्मीः शोभा तस्याः सम्बन्धिनो ये ते । भक्ता हि भगवत्स्वरूपाविर्भावजनितविशेषशोभां वहन्ति, तांस्तथा न पश्यन्ति विषयिणो विषयापहृतचित्तत्वादिति संक्षेपः ।

१८। दैवेन ते हृतधियो भवतः प्रसङ्गात्
सर्व्वाशुभोपशमनाद्विमुखेन्द्रिया ये ।
कुर्व्वन्ति कामसुखलेशलवाय दीना
लोभाभिभूतमनसोऽकुशलानि शश्वत् ॥

२६। क्षुत्तृट्त्रिधातुभिरिमामुहुरर्द्दमानाः
शीतोष्णवातवर्षैरितरेतराच्च ।
कामाग्निनाच्युतरुषा च सुदुर्भरेण
संपश्यतो मन उरुक्रम सीदते मे ॥३।६।७।८।

२०। नातिप्रसीदति तथोपचितोपचारै-
राराधितः सुरगणैर्हृदिबद्धकामैः ।
यत् सर्व्वभूतदययासदलभ्ययैको
नानाजनेष्ववहितः सुहृदन्तरात्मा ॥३।६।१२।

१८। भगवत्प्रीतिस्तद्विमुखान् प्रति करुणामुद्दीपयते तद्दर्शयत्यादिपुरुषवाक्येन दैवेनेति। सर्व्वाशुभोपशमनात् सर्व्वेषाम् अशुभानाम् उपशमनात् भवतः प्रसङ्गात् ये विमुखेन्द्रियाः विमुखानि इन्द्रियाणि येषां ते, दैवेन भगवद्वैमुख्यजनितदेवानुशासनतः हृतधियः नष्टमतयः, दीनाः अध्यात्मसम्पद्धीनाः, अतएव लोभाभिभूतमनसः कामसुखलेशलवाय शश्वत् अकुशलानि अक्षेमकराणि कर्म्माणि कुर्व्वन्ति।

२६। क्षुत्तृड़िति। हे उरुक्रम, क्षुत्तृट्त्रिधातुभिः क्षुत् च तृट् च त्रिधातवः वातपित्तश्लेष्माणः च तैः शीतोष्णवातवर्षैः, इतरेतराच्च परस्परात् च, सुदुर्भरेण सुदुःसहेन कामाग्निना, अच्युतरुषा अच्युतया रुषा अविच्छिन्नक्रोधेन च मुहुः अर्द्दमानाः पीड्यमानाः इमाः प्रजाः संपश्यतः मे मम मनः सीदते सीदति अवसन्नं भवति।

२०। न खलु प्रीतिरुपचारादिकमाकाङ्क्षति किन्तर्हि स्वानुरू-

२१ । श्रुतस्य पुंसां सुचिरश्रमस्य
नन्वञ्जसा सूरिभिरीड़ितोऽर्थः ।
तत्तद्गुणानुश्रवणं मुकुन्द-
पादारविन्दं हृदयेषु येषाम् ॥३।१३।४ ।

२२ । वरान् विभो त्वद्वरदेश्वराद्बुधः
कथं वृणीते गुणविक्रियात्मनाम् ।
ये नारकाणामपि सन्ति देहिनां
तानीश कैवल्यपते वृणे न च ॥

प्यम् । तदेव भगवद्दृष्टान्तेन प्रतिपादयति नेति । नानाजनेषु पृथग्-जनेषु अकिञ्चिनेष्विति यावत् अवहितः कृतावधानः सुहृत् अन्तरात्मा एकः भगवान् यत् यथा असदलभ्यया असताम् अभक्तानाम् अलभ्यया दयया अतिप्रसीदति, न तथा हृदिबद्धकामैः सुरगणैः विद्वद्-गणैः उपचितोपचारैः उपचितैः ऊर्ज्जितैः उपचारैः आराधितः अति-प्रसीदति ।

२१ । भगवति प्रीतिस्तद्भक्तेषु प्रीतिमुद्दीपयति, अतस्तेषां गुणानुवादश्रवणे हर्षं उत्पद्यते विपरीते पुनरसूयेति । एतदेव सूचयति श्रुतस्येति । येषां हृदयेषु मुकुन्दपादारविन्दं मुक्तिदातुः भगवतः पादपद्मं तत्तद्गुणानुश्रवणं तेषां तेषां भक्तानां गुणानुश्रवणं पुंसां जनानां सुचिरश्रमस्य सुचिरं श्रमो यस्मिन् तस्य श्रुतस्य शास्त्राद्यध्ययनस्य अर्थः प्रयोजनं ननु सूरिभिः पण्डितैः अञ्जसा साक्षात्सम्बन्धेन ईड़ितः स्तुतः प्रशंसितः ।

२२ । प्रीतेर्निष्कामत्वं दर्शयति पृथुवाक्येन वरानिति । हे विभो, वरदेश्वरात् वरदानां देवानाम् ईश्वरात् वरदात् त्वत् त्वत्तः बुधः कथं गुणविक्रियात्मनां गुणैः विक्रियत इति गुणविक्रियः अहङ्कारः स एव

२३ । न कामये नाथ तदप्यहं क्वचि-
न्न यत्र युष्मच्चरणाम्बुजासवः ।
महत्तमान्तर्हृदयान्मुखच्युतो
विधत्स्व कर्णायुतमेष मे वरः ॥
२४ । स उत्तमश्लोक महन्मुखच्युतो
भवत्पदाम्भोजसुधाकणानिलः ।
स्मृतिं पुनर्विस्मृततत्त्ववर्त्मनां
कुयोगिनां नो वितरत्यलं वरैः ॥
२५ । यशः शिवं सुश्रव आर्य्यसङ्गमे
यदृच्छया चोपशृणोति ते सकृत् ।

आत्मा स्वरूपं येषां देहाभिमानिनां देवानां वरान् भोग्यान् वृणीते । ये भोग्याः नारकाणाम् अपि देहिनां सन्ति, हे कैवल्यपते, तान् न वृणे ।

२३ । न कामयइति । तत्—कैवल्यपते इति सम्बोधनात्—कैवल्यम् अपि न क्वचित् कदाचित् कामये, यत्र कैवल्ये महत्तमान्तर्हृदयात् महत्तमानाम् अन्तर्हृदयात् मुखच्युतः मुखद्वारा निर्गतः युष्मच्चरणाम्बुजासवः भवत्पदाम्भोजमकरन्दः यशःश्रवणादिसुखं न अस्ति । यशःश्रवणाय कर्णानाम् अयुतम् एव विधत्स्व इति मम वरः प्रार्थितव्यः ।

२४ । स उत्तमश्लोकेति । हे उत्तमश्लोक, स महन्मुखच्युतः महतां सतां मुखात् च्युतः निर्गतः भवत्पदाम्भोजसुधाकणानिलः भवत्पदाम्भोजसुधायाः कणालेशः तत्सम्बन्धी यः अनिलः स एव—दूरादपि किञ्चित् यशःश्रवणमित्यर्थः—विस्मृततत्त्ववर्त्मनां कुयोगिनां स्मृतिं वितरति, अतः नः अस्माकं वरैः अलं निष्प्रयोजनम् ।

२५ । यशइति । हे सुश्रवः मङ्गलकीर्त्ते, आर्य्यसङ्गमे सतां

कथं गुणज्ञो विरमेद्विना पशुं
श्रीर्यत् प्रवव्रे गुणसंग्रहेच्छया ॥४।२०।२३—२६

२६ । तं दुराराध्यमाराध्य सतामपि दुरापया ।
एकान्तभक्त्या को वाञ्छेत् पादमूलं विना बहिः ॥
४।२४।५५ ।

२७ । पारिजातेऽञ्जसा लब्धे सारङ्गोऽन्यन्न सेवते ।
त्वदङ्घ्रिमूलमासाद्य साक्षात् किं किं वृणीमहि ॥
४।३०।३२ ।

२८ । श्रियमनुचरतीं तदर्थिनश्च
द्विपदपतीन् विबुधांश्च यः स्वपूर्णः ।

सङ्गमे यः सकृत् अपि यदृच्छया च यदृच्छाक्रमेण च ते तव शिवं कल्याणमयं यशः उपशृणोति, पशुम् विना गुणज्ञः कथं विरमेत् ततो विरतो भवेत् ; यत् यशः गुणसंग्रहेच्छया गुणानां सर्व्वपुरुषाणां संग्रहः स्वस्मिन् समाहारः तदिच्छया श्रीः ऐश्वर्य्यरूपेण प्रकाशमाना भगवच्छक्तिः प्रवव्रे प्रकर्षेण वृतवती ।

२६ । भगवति प्रीतिरन्याकाङ्क्षां निवर्त्तयत इत्याह तमिति । सतां साधूनां पवित्रचरितानां—'ज्ञानिनां'—श्रीमज्जीवः—दुराराध्यं तं भगवन्तं दुरापया दुर्ल्लभया एकान्तभक्त्या आराध्य कः तस्य पादमूलं विना बहिः स्वर्गादिकं वाञ्छेत् ।

२७ । तदेव प्रचेतोवाक्येन समर्थयति पारिजाते इति । पारिजाते अञ्जसा सुखेन लब्धे सारङ्गः भ्रमरः अन्यत् वृक्षान्तरं न सेवते । साक्षात् तदङ्घ्रिमूलं तव सर्व्वान्तर्यामिणः पादमूलं आसाद्य प्राप्य किं किं वृणीमहे प्रार्थयामः न किञ्चिदित्यर्थः ।

२८ । प्रीतिमतां यथा भगवद्वश्यत्वं तथा भगवतोऽपि प्रीतिम-

न भजति निजभृत्यवर्गतन्त्रः

कथममुमुद्विसृजेत् पुमान् कृतज्ञः ॥४।३१।२२।

२९। तयेत्थमविरतपुरुषपरिचर्य्यया भगवति प्रवर्द्धमानानुरागभरद्रुतहृदयशैथिल्यः प्रहर्षवेगेनात्मन्युद्भिद्यमानरोमपुलककुलक औत्कण्ठ्यप्रवृत्तप्रणयवाष्पनिरुद्धावलोकनयन एवं निजरमणारुणचरणारविन्दानुध्यानपरिचितभक्तियोगेन परिप्लुतपरमाह्लादगम्भीरहृदयह्रदावगाढ़धिषणास्तामपि क्रियमाणां भगवत्सपर्य्यां न सस्मार।

५।७।११।

इश्यत्वमित्याह श्रियमिति। स पूर्णः स्वेनैव पूर्णः अथच निजभृत्यवर्गतन्त्रः स्वभृत्यवर्गानुरक्तः यः अनुचरतीम् अनुवर्त्तमानां श्रियम् ऐश्वर्य्यम्, तदर्थिनः श्रीप्रार्थिनः द्विपदपतीन् नरेन्द्रान् विबुधान् देवान् अपि न भजति, कृतज्ञः पुमान् कथम् असुम् तत् ईषदपि विसृजेत् परित्यजेत्।

२९। प्रीतेश्चित्तापहरणत्वं वर्णयति भरतानुभवेन तयेति। इत्थं तया अविरतपुरुषपरिचर्य्यया भगवति प्रवर्द्धमानानुरागभरद्रुतहृदयशैथिल्यः प्रवर्द्धमानानुरागस्य भरेण द्रुतं द्रवीभूतं यत् हृदयं तस्य शैथिल्यम् अनुद्यमः स्तम्भितभावः यस्य, प्रहर्षवेगेन आत्मनि उद्भिद्यमानरोमपुलककुलकः आत्मनि देहे उद्भिद्यमानं रोमपुलककुलं रोमाञ्चवृन्दं यस्य—ककारः समासान्तः—; औत्कण्ठ्यप्रवृत्तप्रणयवाष्पनिरुद्धावलोकनयनः औत्कण्ठ्यात् प्रवृत्तेन प्रणयवाष्पेण निरुद्धः अवलोकः ययोः ते नयने यस्य सः, एवं निजरमणारुणचरणारविन्दानुध्यानपरिचितभक्तियोगेन निजरमणस्य स्वप्रीतिदातुः यत् अरुणं चरणारविन्दं तस्य अनुध्यानेन परिचितः प्रसिद्धः यः भक्तियोगः तेन परिप्लुतपरमा-

३० । मागारदारात्मजवित्तबन्धुषु
सङ्गो यदि स्याद्भगवत्प्रियेषु नः ।
यः प्राणवृत्त्या परितुष्ट आत्मवान्
सिद्धत्यदूरान्न तथेन्द्रियप्रियः ॥

३१ । यत्सङ्गलब्धं निजवीर्य्यवैभवं
तीर्थं मुहुः संस्पृशतां हि मानसम् ।
हरत्यजोऽन्तःश्रुतिभिर्गतोऽङ्गजं
को वै न सेवेत मुकुन्दविक्रमम् ॥

५।१८।१०।११ ।

ह्लादगम्भीरहृदयह्रदावगाढ़धिषणः परिप्लुतः सर्व्वतोव्याप्तः परमाह्लादः परमानन्दः यस्मिन् तस्मिन् गम्भीरहृदयह्रदे अवगाढ़ा निमग्ना धिषणा यस्य स ताम् अपि क्रियमाणां भगवत्सपर्य्यां न सस्मार न स्मृतवान् ।

३०।३१ । न खलु प्रीतिर्भगवत्प्रियाणां सङ्गं विनान्येभ्यः स्पृहयति तत्सङ्गाद्भवद्यशःश्रवणलाभादित्याह भद्रश्रवोवाक्येन मागारेति यदिति । आगारदारात्मजवित्तबन्धुषु मा सङ्गः स्यात्, यदि स्यात् भगवत्प्रियेषु नः सङ्गः स्यात् । यः आत्मवान् प्राणवृत्त्या परितुष्टः स अदूरात् सिद्ध्यति, न तथा इन्द्रियप्रियः स्पृहाव्यासक्तः । यत् सङ्गलब्धं येषां भगवत्प्रियाणां सङ्गात् लब्धं निजवीर्य्यवैभवं निजम् असाधारणं वीर्य्यवैभवं प्रभावातिशयो यस्य तं मुकुन्दविक्रमं मुक्तिदातुः भगवतः विक्रमं शक्त्याविष्कारं को वै एव न सेवेत, यः मुकुन्दविक्रमः श्रुतिभिः अन्तर्गतं मानसम् अजः मलं हरति—तीर्थन्तु मुहुः संस्पृशतां हि अङ्गजम् अजः मलं हरति ।

३२ । हरिर्हि साक्षाद्भगवान् शरीरिणा-
मात्मा झषाणामिव तोयमीप्सितम् ।
हित्वा महांस्तं यदि सज्जते गृहे
तदा महत्त्वं वयसा दम्पतीनाम् ॥५।१८।१३ ।

३३ । स वै पतिः स्यादकुतोभयः स्वयं
समन्ततः पाति भयातुरं जनम् ।
स एक एवेतरथा मिथोभयं
नैवात्मलाभादधिमन्यते परम् ॥

३४ । या तस्य ते पादसरोरुहार्हणां
निकामयेत् साखिलकामलम्पटा ।

३२ । भगवति प्रीतिमान् न तं महान्तं मन्यते यो भगवन्तं परिहाय गृहेऽनुरक्त इत्याह हरिरिति । भगवान् हरिः हि—झषाणां मत्स्यानाम् ईप्सितम् तोयं जलम् इव—शरीरिणां देहिनाम् आत्मा । तं भगवन्तं हित्वा महान् जनः यदि गृहे सज्जते आसक्तो भवति तदा तस्य महत्त्वं दम्पतीनां वयसा—न तु ज्ञानादिना—यथा तथा ।

३३ । भगवदतुलसौन्दर्य्यविमुग्धानां प्रीतिं दर्शयितुं तस्मिन्निबद्धचित्ताया भगवदैश्वर्य्यशक्तेर्भावाविष्कारानुदाहरणत्वेन गृह्णाति स वै इति । स वै एव पतिः स्यात्, स्वयं यः अकुतोभयः सन् समन्ततः सर्व्वतः भयातुरं जनं पाति, स एक एव नान्यः, यः आत्मलाभात् परम् अन्यत् अधिकं न मन्यते, इतरथा अन्याधीनसुखस्य अस्वतन्त्राणां मण्डलेश्वराणामिव मिथः भयं स्यात् । अत्र पतित्वेन भगवन्तं गृह्णीयादिति वचनेन प्रीतिः सर्व्वोत्कर्षः ।

३४ । येति । या नारी तस्य तादृशस्य ते तव पादसरोरुहार्हणां पादपद्मस्य पूजां निकामयेत् कामयेत, तस्य अखिलकामलम्पटा सर्व्वा-

तदेव रासीप्सितमीप्सितोऽर्च्चितो
यद्भग्नयाञ्चा भगवन् प्रतप्यते ॥
३५ । मत्प्राप्तयेऽजेशसुरासुरादय-
स्तप्यन्त उग्रं तप ऐन्द्रियेधियः ।
ऋते भवत्पादपरायणान्न मां
विन्दन्त्यहं त्वद्धृदया यतोऽजित ॥
३६ । स त्वं ममाप्यच्युत शीर्ष्णि वन्दितं
कराम्बुजं यत्त्वदधायि सात्वताम् ।
विभर्षि मा लक्ष्म वरेण्य मायया
कईश्वरस्येहितमूहितुं विभुः ॥५।१८।२०—२३

नन्यान् कामान् परिहायापि भगवतः सर्व्वस्य कामस्य परिपूरकत्वा-देकस्मिन् तस्मिन् सर्व्वकामावाप्त्या तेषु रमणशीलानां सर्व्वान् कामा-नाप्नोतीत्यर्थः । कथमेवं भवति तत्कारणमाह—ईप्सितं प्रति ईप्सितः फलान्तरम् आप्तुमपेक्षितः सन् अर्च्चितः तत् फलान्तरम् एव रासि ददासि ; हे भगवन्, यत् यतः फलभोगानन्तरं भग्नयाञ्चा भग्ना विनष्टा याञ्चा याचितः अर्थः यस्याः सा प्रतप्यते दुःखं प्राप्नोति ।

३५ । मदिति । मत्प्राप्तये मम ऐश्वर्य्यशक्तेः प्राप्तये प्राप्त्यर्थम् ऐन्द्रियेधियः इन्द्रियसुखे धीः येषां ते अजेशसुरासुरादयः ब्रह्मादयः उग्रं तपः तप्यन्ते । भवत्पादपरायणात् ऋते विना न मां विन्दन्ति प्राप्नुवन्ति । कथम् ? हे अजित, यतः अहं त्वद्धृदया त्वय्येव हृदयं यस्याः । न खलु भगवदैश्वर्य्यशक्तिः ततो भिन्ना, अतएवैकहृदयत्वमेक-त्वमेव तत्त्वम् । प्रीत्यैकहृदयत्वं भगवता प्रार्थनीयन्तच्चरणाकाङ्क्षिणां, न त्वन्यत् किञ्चिदित्याशयः । ततो हि स्वयमेवैश्वर्य्यं तं भजते ।

३६ । स त्वमिति । हे अच्युत, सात्वतां भक्तानां शीर्ष्णि मस्तके

३७। तन्नः प्रभो त्वं कुकलेवरार्पितां
त्वन्माययाहंममतामधोक्षज।
भिन्द्याम येनाशु वयं सुदुर्भिदां
विधेहि योगं त्वयि नः स्वभावम् ॥५।१८।१५।

३८। सत्यं दिशत्यर्थितमर्थितोनृणां
नैवार्थदो यत् पुनरर्थिता यतः।

वन्दितं सर्व्वकामवर्षित्वेन सद्भिः स्तुतं यत् कराम्बुजं त्वत् त्वया अधायि, स त्वं तत् कराम्बुजं ममापि शीर्ष्णि निधेहीति शेषः। हे वरेण्य, मायया ज्ञानशक्त्या मा माम् ऐश्वर्य्यरूपां लक्ष्म चिह्नरूपत्वेन प्रकाश-भूमित्वेन विभर्षि धारयसि। ईश्वरस्य तव ईहितं क्रियां कः ऊहितुं विभुः समर्थः। अत्रेदं विवेच्यम्—

देवतीर्य्यङ्मनुष्यादौ पुंनाम्नि भगवान् हरिः।
स्त्रीनाम्नि लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम्॥

इति स्मरणात् सर्व्वासु नारीषु प्रकाशमाना देवशक्तिर्लक्ष्मीत्वेन वैष्णव-शास्त्रे गृह्यते। अतएव भगवदैश्वर्य्यशक्तिमेव सर्व्वासां तासां प्रतिनिधि-त्वेन प्रकल्प्य भगवति नार्य्युचितं भावविकाशं निबध्नाति संहितैषा पद्यैरेतैरिति।

३७। भगवति प्रीतिमतां प्रार्थनमाह तन्न इति।

अथैहिकामुष्मिककामलम्पटः सुतेषु दारेषु धनेषु चिन्तयन्।
शङ्केत विद्वान् कुकलेवरात्ययाद्यस्तस्य यत्नः श्रमएव केवलम्॥

इति यद्विदुषोऽपि इयमेव दशा तत् तस्मात्, हे प्रभो, अधोक्षज, त्वन्मा-यया कुकलेवरार्पितां कुत्सितकलेवरे अर्पितां सुदुर्भिदां त्यक्तुमशक्यां नः अस्माकम् अहंममतां येन योगेन आशु वयं भिन्द्याम, त्वयि स्वभावं सहजवासनारूपं तं योगंनः अस्मभ्यं विधेहि।

३८। न खलु भगवान् स्मृते स्वजनानन्यप्रार्थितानि ददातीति

स्वयं विधत्ते भजतामनिच्छता-

मिच्छापिधानं निजपादपल्लवम् ॥५।१९।२७।

३९। न नाकपृष्ठं न च पारमेष्ठ्य

न सार्व्वभौमं न रसाधिपत्यम्।

न योगसिद्धीरपुनर्भवं वा

समञ्जस त्वा विरहय्य काङ्क्षे ॥

४०। अजातपक्षा इव मातरं खगाः

स्तन्यं यथा वत्सतराः क्षुधार्त्ताः।

प्रियं प्रियेव व्युषितं विषण्णा

मनोरविन्दाक्ष दिदृक्षते त्वाम् ॥

सकारणमाह सत्यमिति। अर्थितः प्रार्थितः सन् भगवान् नृणाम् अर्थितं प्रार्थितं दिशति ददाति इति सत्यं किन्तु तथापि यत् यस्मात् पुनः अर्थिता भोगान्ते याच्ञा उपतिष्ठते, ततः न स अर्थदः स्वजनान् न स अर्थान् ददाति। किन्तर्हि दीयते ? अनिच्छताम् अपि भजतां भजनशीलानां इच्छापिधानं सर्व्वकामाच्छादकं निजपादपल्लवं स्वयं विधत्ते ददाति।

३९। प्रीतिमतामर्थिताभावं दर्शयति वृत्रवाक्येन न नाकेति। हे समञ्जस निखिलसौभाग्यनिधे, त्वा त्वां विरहय्य पृथक्कृत्य न नाकपृष्ठं ध्रुवलोकं, न च पारमेष्ठ्यं ब्रह्मलोकं, न सार्व्वभौमं महाराज्यम्, न रसाधिपत्यं रसातलाधिपत्यं, न योगसिद्धीः अपुनर्भवं वा काङ्क्षे इच्छामि।

४०। तेषां भगवद्दर्शनव्याकुलतां वर्णयति तद्वाक्येन अजातेति। अजातपक्षाः खगाः मातरम् इव, क्षुधार्त्ताः वत्सतराः स्तन्यं यथा,

४१ । ममोत्तमश्लोकजनेषु सख्यं
संसारचक्रे भ्रमतः स्वकर्म्मभिः ।
त्वन्माययात्मात्मजदारगेहे-
ष्वासक्तचित्तस्य न नाथ भूयात् ॥६।११।२५–२७

४२ । प्रायेण देव मुनयः स्वविमुक्तिकामा
मौनं चरन्ति विजने न परार्थनिष्ठाः ।
नैतान् विहाय कृपणान् विमुमुक्ष एको
नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥
७।९।४४ ।

४३ । यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् ।
आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः ।
न स्वामी भृत्यतः स्वाम्यमिच्छन् यो राति चाशिषः ॥

विषण्णा विपद्ग्रस्ता प्रिया व्युषितं दूरदेशगतं प्रियम् इव, हे अरविन्दाक्ष, मनः त्वां दिदृक्षते द्रष्टुमिच्छति ।

४१ । ममेति । हे नाथ, त्वन्मायया त्वज्ज्ञानशक्त्या स्वकर्म्मभिः संसारचक्रे भ्रमतः मम उत्तमश्लोकजनेषु सख्यं भूयात्, आसक्तचित्तस्य मम आत्मात्मजदारगेहेषु देहसुतकलत्रगृहेषु सख्यं न भूयात् ।

४२ । भगवत्यनुरक्तानां परात्मतां दर्शयति प्रह्लादवाक्येन प्रायेणेति । हे देव, स्वविमुक्तिकामाः मुनयः मननशीलाः प्रायेण विजने मौनं चरन्ति, न ते परार्थनिष्ठाः परप्रयोजननिष्ठाः, एकः अहं कृपणान् कृपापात्राणि एतान् मत्सङ्गिनः विहाय न विमुमुक्षे विमुक्तिं नेच्छामि । भ्रमतः नानावस्थासु विचरणशीलस्य अस्य जनस्य त्वत् अन्यं शरणम् आश्रयं न अनुपश्ये ।

४३ । सकाङ्क्षत्वे वणिक्त्वम्, अतोऽनुरक्तानां भगवद्दासानां तं

४४ । अहं त्वकामस्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः ।
नान्यथेहावयोरर्थो राजसेवकयोरिव ॥७।१०।४।५ ॥

४५ । यत्पादपद्ममकरन्दनिषेवणेन
ब्रह्मादयः शरणदाश्नुवते विभूतीः ।
कस्माद्वयं कुसृतयः खलयोनयस्ते
दाक्षिण्यदृष्टिपदवीं भवतः प्रणीताः ॥८।२३।७

४६ । न कामयेऽहं गतिमीश्वरात् परा-
मष्टर्द्धियुक्तामपुनर्भवं वा ।

विना न किमप्याकाङ्क्षणीयमस्तीति तद्वाक्येन दर्शयति यस्त इति । यः ते तव आशिषः आशास्ते, न स भृत्यः, किन्तर्हि स वणिक् एव । स्वामिनि आत्मनः आशिषः आशसानो जनः नैव भृत्यः ; यः स्वामी भृत्यतः स्वाम्यं प्रभुत्वम् इच्छन् अभिलषन् आशिषः च राति ददाति, न स स्वामी ।

४४ । भगवद्भक्तयोरत्र विशेषत्वं दर्शयति तद्वाक्येन अहमिति । अहं तु अकामः अन्याभिलाषशून्यः त्वद्भक्तः तव भक्तः, त्वं च अनपाश्रयः निरभिसन्धिः स्वामी । राजसेवकयोः इव आवयोः इह न अन्यथा अर्थः अभिसन्धितः प्रयोजनम् ।

४५ । प्रीतिमतामात्मसौभाग्यसूचनं प्रकटयति तद्वाक्येन यदिति । हे शरणद आश्रयप्रद, ब्रह्मादयः यत्पादपद्ममकरन्दनिषेवणेन यस्य तव पादपद्ममकरन्दस्य निषेवणेन विभूतीः सम्पदः अश्नुवते, ते वयं कुसृतयः दुर्वृत्ताः विमार्गगाः खलयोनयः उग्रजातयः सन्तः कस्मात् हेतोः भवतः दाक्षिण्यदृष्टिपदवीं बहुमानेन चित्तानुवर्त्तनं दाक्षिण्यं तेन या दृष्टिः तस्याः पदवीं विषयतां प्रणीताः प्रापिताः ।

४६ । परार्थदुःखवहनमेव भगवत्प्रीतिमतां स्वभाव इति रन्ति-

आर्त्तिं प्रपद्येऽखिलदेहभाजा-
मन्तःस्थितो येन भवन्त्यदुःखाः ॥९।२१।१२ ।

देवस्य प्रार्थनेन विवृणोति न कामये इति। अहम् ईश्वरात् पराम् अष्टर्द्धियुक्ताम् अणिमाद्यष्टसमृद्धियुक्तां गतिम् अपुनर्भवम् अपुनरावृत्तिं वा न कामये। तर्हि किं कामयसे? अखिलदेहभाजाम् आर्त्तिं दुःखं तद्भोक्तृरूपेण अन्तःस्थितः सन् अहं प्रपद्ये प्राप्नोमि येन ते सर्व्वे अदुःखाः भवन्ति। अत्रेदमितिवृत्तम्—

रन्तिदेवस्य महिमा इहामुत्र च गीयते ।
वियद्वित्तस्य ददतो लब्धं लब्धं बुभुक्षतः ॥
निष्किञ्चनस्य धीरस्य सकुटुम्बस्य सीदतः ।
व्यतीयुरष्टचत्वारिंशदहान्यपि ततः किल ॥
घृतपायससंयावं तोयं प्रातरुपस्थितम् ।
कृच्छ्रप्राप्तकुटुम्बस्य क्षुत्तृड्भ्यां जातवेपथोः ॥
अतिथिर्ब्राह्मणः काले भोक्तुकामस्य चागमत् ।
तस्मै संव्यभजत् सोऽन्नमादृत्य श्रद्धयान्वितः ॥
हरिं सर्व्वत्र संपश्यन् स भुक्त्वा प्रययौ द्विजः ॥
अथान्यो भोक्ष्यमाणस्य विभक्तस्य महीपतेः ।
विभक्तं व्यभजत्तस्मै वृषलाय हरिं स्मरन् ॥
याते शूद्रे तमभ्यागादतिथिः श्वभिरावृतः ।
राजन्मे दीयतामन्नं सगणाय बुभुक्षवे ॥
स आदृत्यावशिष्टं यद् बहुमानपुरस्कृतम् ।
तच्च दत्त्वा नमश्चक्रे श्वभ्यः श्वपतये विभुः ॥
पानीयमात्रमुच्छेषं तच्चैकपरितर्पणम् ।
पास्यतः पुल्कसोऽभ्यागादपो देह्यशुभाय मे ॥
तस्य तां करुणां वाचं निशम्य विपुलश्रमम् ।
कृपया भृशसन्तप्त इदमाहामृतं वचः ॥
न कामयेऽहं गतिमीश्वरात् परामष्टर्द्धियुक्तामपुनर्भवं वा ।
आर्त्तिं प्रपद्येऽखिलदेहभाजामन्तःस्थितो येन भवन्त्यदुःखाः ॥
क्षुत्तृट्श्रमो गात्रपरिभ्रमश्च दैन्यं क्लमः शोकविषादमोहाः ।
सर्व्वे निवृत्ताः कृपणस्य जन्तोर्जिजीविषोर्जीवजलार्पणान्मे ॥

४७। नाहन्तु सख्यो भजतोऽपि जन्तून्
भजाम्यमीषामनुवृत्तिवृत्तये ।
यथाधनो लब्धधने विनष्टे
तच्चिन्तयान्यन्निभृतो न वेद ॥१०।३१।२०।

४८। यथाबुधो जलं हित्वा प्रतिच्छन्नं तदुद्भवैः ।
अभ्येति मृगतृष्णां वै तद्वत्त्वाहं पराङ्मुखः ॥१०।४०।२६

एवं प्रभाष्य पानीयं म्रियमाणः पिपासया ।
पुक्कशायाददाद्धीरो निसर्गकरुणो नृपः ॥ इति ।

४७। प्रीतेरुच्चतमावस्थां गोपीः प्रति श्रीकृष्णवाक्येनाविष्करोति नाहमिति। हे सख्यः, अनुवृत्तिवृत्तये निरन्तरानुध्यानप्रवृत्तये अहं भजतः अपि जन्तून् जीवान् न भजामि बहिः सेवानिरतो भवामि। कथमेवं करोषीति जिज्ञासायां तन्निवृत्तये दृष्टान्तेन तत्कारणं प्रतिपादयति।—यथा अधनः दरिद्रः जनः लब्धधने विनष्टे सति तच्चिन्तया तस्य धनस्य चिन्तया निभृतः पूर्णः अन्यत् क्षुधापिपासादिकं न वेद न अनुभवति। अन्तःसम्भोगरूपनिरन्तरानुध्यानमेव प्रीतेरुच्चावस्था, तस्यां बाह्यसाधनजातं विलुप्तप्रायं भवति, भवति च तदा साधकस्य निन्दा संसारिलमासोऽयं जनइति। वस्तुतो निमग्नस्य स्याच्चेद् व्युत्थानं तेन स्यादन्यचेष्टा। शरीररक्षणादिव्यापारस्यापि भगवत्प्रेमाभिनिवेशवशात् तत्र तत्र प्रेमस्फूर्त्तौ सुखदलेऽपि न तस्मिन्नभिनिवेश इति ज्ञेयम्। एवं सिद्ध्यति तं विनान्यविस्मरणम्।

४८। अनुरागवतां दैन्यं दर्शयति यथेति। अबुधः यथा तदुद्भवैः जलजातैः शैवालादिभिः प्रतिच्छन्नं जलं हित्वा मृगतृष्णां मरीचिकां वै एव अभ्येति, तद्वत् अहं त्वा त्वां हित्वा पराङ्मुखः देहाद्यभिमुखः वर्त्ते इति शेषः।

४९। सोऽहं तवाङ्घ्र्युपगतोऽस्म्यसतां दुरापं
तच्चाप्यहं भवदनुग्रह ईश मन्ये।
पुंसो भवेद्यर्हि संसरणापवर्ग-
स्त्वय्यब्जनाभ सदुपासनया मतिः स्यात्॥

१०।४०।२८।

५०। यदनुचरितलीलाकर्णपीयूषविप्रुट्-
सकृददनविधूतद्वन्द्वधर्म्मा विनष्टाः।
सपदि गृहकुटुम्बं दीनमुत्सृज्य दीना
बहव इव विहङ्गा भिक्षुचर्य्यां चरन्ति॥

१०।४७।१८।

४९। सोऽहमिति। सोऽहं तव अङ्घ्र्युपगतः अङ्घ्रिम् उपगतः शरणं प्राप्तः अस्मि, तत् अङ्घ्र्युपगमनञ्च असतां दुरापं दुष्प्रापम्। अतः हे ईश, तत् अपि भवदनुग्रहः तव अनुग्रहः इति मन्ये। यर्हि यदा पुंसः सदुपासनया सत्सेवया संसरणापवर्गः संसारपरिसमाप्तिः स्यात्, तदा, हे अब्जनाभ विश्वाधार, त्वयि मतिः स्यात्।

५०। भगवद्गुणैराकृष्टचेतसां प्रीतिमतां सर्व्वस्वत्यागः स्वभावएव भवतीति गोपीनां दीनवाक्येनोपवर्णयति यदिति। यदनुचरितलीला-कर्णपीयूषविप्रुट्सकृददनविधूतद्वन्द्वधर्म्माः यस्य अनुचरितं लीला तदेव कर्णपीयूषं तस्य विप्रुट् कणिका तस्याः सकृत् अदनं सेवनं तेन विधूताः निरस्ताः द्वन्द्वधर्म्माः रागादयो येषां, अतएव विनष्टाः असत्तुल्याः देहेऽविद्यमानसङ्गाः दीनं दुःखितं गृहकुटुम्बम् उत्सृज्य दीनाः भोग-विमुखाः बहवः विहङ्गा इव भिक्षुचर्य्यां प्राणवृत्तिमात्रं चरन्ति।

५१ । अहो यूयं स्म पूर्णार्था भवत्यो लोकपूजिताः ।
वासुदेवे भगवति यासामित्यर्पितं मनः ॥

५२ । दानव्रततपोहोमजपस्वाध्यायसंयमैः ।
श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥

५३ । भगवत्युत्तमश्लोके भवतीभिरनुत्तमा ।
भक्तिः प्रवर्त्तिता दिष्ट्या मुनीनामपि दुर्लभा ॥

५४ । दिष्ट्या पुत्रान् पतीन् देहान् स्वजनान् भवनानि च ।
हित्वा वृणीत यूयं यत् कृष्णाख्यं पुरुषं परम् ॥

४०।४३।२३—२६ ।

५१ । भगवत्प्रीतिदृष्टान्तत्वेन वृन्दावनवासिनीनां गोपीनां प्रेमा कथमुपस्थापितोऽनया तन्मूलं स्वयं दर्शयति उद्धववाक्येन अहो इति । अहो भवत्यः लोकपूजिताः स्म निश्चितं यूयं पूर्णार्थाः कृतार्थाः, यासाम् इति एवम्प्रकारेण भगवति वासुदेवे मनः अर्पितम् ।

५२ । दानेति । दान-व्रत-तपो-होम-जप-स्वाध्याय-संयमैः विविधैश्च अन्यैः श्रेयोभिः कृष्णे चित्ताकर्षणे भगवति भक्तिः हि साध्यते सिद्धा भवति ।

५३ । भगवतीति । दिष्ट्या भाग्यतः भवतीभिः उत्तमश्लोके भगवति मुनीनां मननशीलानाम् अपि दुर्लभा अनुत्तमा भक्तिः प्रवर्त्तिता— तासां दृष्टान्तेनान्यैः शिक्षिता ।

५४ । कथं ता दृष्टान्तत्वमागतास्तदाह दिष्ट्येति । दिष्ट्या भाग्यतः यत् यूयं पुत्रान् पतीन् देहान् स्वजनान् भवनानि च हित्वा तत्तन्ममतां परिहाय कृष्णाख्यं चित्ताकर्षणाख्यं परं परमपुरुषम् अवृणीत वृतवत्यः । नासीत् तासु कामवैगुण्यमिति परानुरक्तेर्दृष्टान्तत्वं तासाम् ।

५५ । मनसोवृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः ।
वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वनादिषु ॥
१०।४७।६७ ।

५६ । कः पण्डितस्त्वदपरं शरणं समीया-
द्भक्तप्रियादृतगिरः सुहृदः कृतज्ञात् ।
सर्व्वान् ददाति सुहृदोभजतोऽभिकामा-
नात्मानमप्युपचयापचयौ न यस्य ॥१०।४८।२६

५७ । लब्ध्वा जनोदुर्लभमत्र मानुषं
कथञ्चिदव्यङ्गमयत्नतोऽनघ ।
पादारविन्दं न भजत्यसन्मति-
र्गृहान्धकूपे पतितो यथा पशुः ॥

५८ । ममैष कालोऽजित निष्फलोगतो
राज्यश्रियोन्नद्धमदस्य भूपतेः ।

५५ । गोपानां भगवति प्रीतिं विवृणोति मनसइति । नः अस्माकं नन्दादीनां मनसोवृत्तयः कृष्णपादाम्बुजाश्रयाः स्युः, वाचः नाम्नाम् अभिधायिनीः अभिधायिन्यः, कायः तत्प्रह्वनादिषु तद्वन्दनादिषु ।

५६ । अक्रूरस्य प्रीत्यनुभावानाविष्करोति कइति । कः पण्डितः भक्ताश्रयात् ऋतगिरः सत्यवाचः, सुहृदः हितकारिणः, कृतज्ञात् कृतस्मरणशीलात्—'कदाचित् कमपि यत्किञ्चिदपि भक्तेन विस्मृतमपि तद्भजनं कृतं त्वं जानास्येवेत्यर्थः' इति श्रीमद्विश्वनाथः,—त्वत् त्वत्तः अपरं शरणं समीयात्, यस्य तव उपचयापचयौ न स्तः, स भवान् भजतः सुहृदः सेवमानाय सुहृदे सर्व्वान् अभिकामान् आत्मानम् अपि ददाति ।

५७।५८ । मुचुकुन्दस्य दैन्येन प्रीत्यनुभावं दर्शयति लब्ध्वेति ममेति ।

मर्त्त्यात्मबुद्धेः सुतदारकोषभू-

ष्वासज्जमानस्य दुरन्तचिन्तया ॥१०।५१।४८।४९

५९ । न कामयेऽन्यं तव पादसेवना-

दकिञ्चनप्रार्थ्यतमाद्वरं विभो ।

आराध्य कस्त्वां ह्यपवर्गदं हरे

वृणीत आर्य्यौवरमात्मबन्धनम् ॥१०।५१।५७ ।

६० । चिरमिह वृजिनार्त्तस्तप्यमानोऽनुतापै-

रवितृषषड़मित्रोऽलब्धशान्तिः कथञ्चित् ।

शरणद समुपेतस्त्वत्पदाब्जं परात्म-

न्नभयमृतमशोकं पाहि मापन्नमीश ॥१०।५१।५८

हे अनघ, अत्र अयत्नतः कथञ्चित् अव्यङ्गम् अविकलाङ्गं दुर्लभं मानुषं मनुष्यत्वं लब्ध्वा असन्मतिः असति विषयसुखे मतिः यस्य स जनः पादारविन्दं तव न भजति पशुः यथा तथा स गृहान्धकूपे गृहमेव अन्धकूपः तस्मिन् पतितः । हे अजित, राज्यश्रिया उन्नद्धमदस्य मर्त्त्यात्मबुद्धेः मर्त्त्ये मरणशीले शरीरे आत्मबुद्धिर्यस्य, अतएव दुरन्तचिन्तया सुतदारकोषभूषु आसज्जमानस्य आसक्तस्य भूपतेः मम एष कालः निष्फलः गतः ।

५९ । न कामये इति । हे विभो, अकिञ्चनप्रार्थ्यतमात् तव पादसेवनात् अन्यं वरं न कामये, हे हरे, अपवर्गदं त्वाम् आराध्य कः आर्य्यः विवेकी आत्मबन्धनं वरं वृणीत ।

६० । चिरमिति । इह वृजिनार्त्तः पापैः क्लिष्टः, अनुतापैः तप्यमानः अवितृषषड़मित्रः अनपगताः तृष्णाः षड् अमित्राः शत्रवः इन्द्रियलक्षणाः यस्य स, अतएव कथञ्चित् अलब्धशान्तिः अहं, हे शरणद, हे परात्मन्, अभयम् ऋतं सत्यं अशोकं त्वत्पदाब्जं समुपेतः, हे ईश, आपन्नं मा मां पाहि ।

६१ । त्वं वै समस्तपुरुषार्थमयः फलात्मा
यद्वाञ्छया सुमतयो विसृजन्ति कृत्स्नम् ।
तेषां विभो समुचितो भवतः समाजः
पुंसः स्त्रियाश्च रतयोः सुखदुःखिनोर्न ॥

६२ । त्वं न्यस्तदण्डमुनिभिर्गदितानुभाव-
आत्मात्मदश्च जगतामिति मे वृतोऽसि ।
हित्वा भवद्भ्रुव उदीरितकालवेग-
ध्वस्ताशिषोऽब्जभवनाकपतीन् कुतोऽन्ये ॥

१०।६०।३८।३९ ।

६१ । रुक्मिण्याः प्रीत्यनुभावमाविष्करोति त्वं वै इति । त्वम् एव समस्तपुरुषार्थमयः फलात्मा फलस्वरूपः—'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति श्रुतेः ; यद्वाञ्छया यस्य तव वाञ्छया सुमतयः कृत्स्नं विसृजन्ति परित्यजन्ति । हे विभो, तेषां त्वदर्थपरित्यागिनां भवतः समाजः सेव्यसेवकलक्षणसम्बन्धः समुचितः ; रतयोः परस्परानुरक्तयोः सुखदुःखिनोः पुंसः स्त्रियाश्च न भवतः समाजः समुचित इति शेषः ।

६२ । त्वमिति । न्यस्तदण्डमुनिभिः न्यस्तदण्डैः परित्यक्तलिङ्गैः मुनिभिः मननशीलैः गदितानुभावः गदितः उक्तः अनुभावः प्रभावविशेषः यस्य, जगताम् आत्मा, आत्मदः आत्मानं ददातीति आत्मप्रदः त्वम् इति मे मया भवद्भ्रुवः भवतः भ्रूविक्षेपात् उदीरितकालवेगध्वस्ताशिषः उदीरितः उद्भूतः यः कालः तस्य वेगः तेन ध्वस्ताः आशिषः येषां तान् अब्जभवनाकपतीन् ब्रह्मादीन् हित्वा परिहाय मे मया वृतः असि । कुतः ? अन्ये वराका इत्यर्थः ।

६३ । त्वक्श्मश्रुरोमनखकेशपिनद्धमन्त-
मांसास्थिरक्तकृमिविट्कफपित्तवातम् ।
जीवच्छवं भजति कान्तमतिर्विमूढ़ा
या ते पदाब्जमकरन्दमजिघ्रती स्त्री ॥

१०।६०।४५ ।

६४ । त्वत्पादुके अविरतं परि ये चरन्ति
ध्यायन्त्यभद्रनशने शुचयो गृणन्ति ।
विन्दति ते कमलनाभ भवापवर्ग-
माशासते यदि त आशिष ईश नान्ये ॥

६५ । तद्देवदेव भवतश्चरणारविन्द-
सेवानुभावमिह पश्यतु लोकएषः ।

६३ । त्वगिति । या स्त्री ते तव पादाब्जमकरन्दं पादपद्ममधु अजिघ्रती विमूढ़ा सा कान्तमतिः सती त्वक्-श्मश्रु-रोम-नख-केश पिनद्धं त्वगादिभिराच्छादितम् अन्तमांसास्थि-रक्त-कृमि-विट्-कफ-वात-पित्तम् अन्तमांसादिमयं जीवच्छवं भजति ।

६४ । युधिष्ठिरस्य प्रोत्यनुभावं विवृणोति त्वदिति । हे कमल-नाभ हे विश्वाधार, हे ईश, ये जनाः शुचयः शुद्धाः—'बहिरन्तर्भक्ति-विघातकाभद्ररहिताः'—श्रीमत्सनातनः—सन्तः अभद्रनशने त्वत्पादुके त्वदुपानहौ अविरतं परिचरन्ति परिचर्य्याविषये कुर्व्वन्ति, ध्यायन्ति मनसा चिन्तयन्ति, गृणन्ति वाचा कीर्त्तयन्ति, ते भवापवर्गं मोक्षं विन्दन्ति, यदि ते आशासते आशिषः अपि विन्दन्ति, अन्ये भजनविर-हिताः न विन्दन्ति ।

६५ । यदिति । हे देवदेव, तत् तस्मात् भवतः चरणारविन्द-

ये त्वां भजन्ति न भजन्त्युत वोभयेषां
निष्ठां प्रदर्शय विभो कुरुसृञ्जयानाम् ॥

१०।७२।४।५।

६६। वयं पुरा श्रीमदनष्टदृष्टयो
जिगीषयास्या इतरेतरस्पृधः।
घ्नन्तः प्रजाः स्वा अतिनिर्घृणाः प्रभो
मृत्युं पुरस्त्वाविगणय्य दुर्म्मदाः ॥

६७। तएव कृष्णाद्य गभीररंहसा
दुरन्तवीर्य्येण विचालिताः श्रियः।
कालेन तन्वा भवतोऽनुकम्पया
विनष्टदर्पाश्चरणौ स्मराम ते ॥

सेवानुभावं पादपद्मसेवायाः प्रभावम् इह एष लोकः पश्यतु। ये त्वां भजन्ति उत वा ये न त्वां भजन्ति, उभयेषां तादृशां कुरुसृञ्जयानां, हे विभो, निष्ठां स्थितिं प्रदर्शय।

६६।६७। दीनदशापन्नानां सम्पत्तिमतां प्रीत्युपस्थापितानुभावान् दर्शयति वयमिति तद्वति। हे प्रभो, ये वयं पुरा श्रीमदनष्टबुद्धयः श्रीमदेन नष्टा बुद्धिर्येषाम्, अस्याः पृथिव्याः जिगीषया जयेच्छया इतरेतरस्पृधः परस्परं स्पर्द्धमानाः अतिनिर्घृणाः अतिनिष्ठुराः स्वाः प्रजाः घ्नन्तः पुरः पुरतः त्वा त्वां मृत्युम् अविगणय्य दुर्म्मदाः अभवाम, ते एव वयं, हे कृष्ण चित्ताकर्षक, अद्य गभीररंहसा गभीरवेगेन दुरन्तवीर्य्येण भवतः तन्वा मूर्त्या कालेन श्रियः सम्पदः विचलिताः भ्रंशिताः सन्तः ते तव अनुकम्पया विनष्टदर्पाः चरणौ तव स्मरामः स्मर्त्तुमाशास्महे।

६८। अथो न राज्यं मृगतृष्णिरूपितं
देहेन शश्वत् पतता रुजां भुवा ।
उपासितव्यं स्पृहयामहे विभो
क्रियाफलं प्रेत्य च कर्णरोचनम् ॥१०।७२।१२—१४

६९। अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न मां स्मरेत् ।
इति कारुणिको नूनं धनं मे भूरि नाददात् ॥
१०।८१।२० ।

७०। तस्यैव मे सौहृदसख्यमैत्री-
दास्यं पुनर्जन्मनि जन्मनि स्यात् ।
महानुभावेन गुणालयेन
विषज्जतस्तत्पुरुषप्रसङ्गः ॥

६८। अथो इति। अथो अतएव शश्वत् पतता प्रतिक्षणं क्षीयमाणेन रुजां रोगाणां भुवा जन्मक्षेत्रेण देहेन उपासितव्यं सेव्यं मृगतृष्णिरूपितं मृगतृष्णिकया रूपितं सदृशं प्रेत्य च कर्णरोचनं क्रियाफलं स्वर्गादिभोगं न स्पृहयामहे ।

६९। प्रीतिमतो दरिद्रस्येप्सितालाभेऽपि विश्रब्धिं विवृणोति दरिद्रब्राह्मणवाक्येन अधन इति। अयम् अधनः धनं प्राप्य उच्चैः माद्यन् प्रमत्तः सन् मां सर्व्वान्तर्यामिणं न स्मरेत्, इति नूनं कारुणिकः करुणासम्पन्नः भूरि धनं मे मह्यं न अददात् ।

७०। अप्राप्ते विश्रब्धिमतः प्राप्ते कृतज्ञता दर्शयति तद्वाक्येन तस्येति। मम पुनः जन्मनि जन्मनि तस्य एव तत्सम्बन्धि एव सौहृदसख्यमैत्रीदास्यं सौहृदं प्रेम च सख्यं हिताशंसनं च, मैत्री मित्रभावापन्नत्वं च, दास्यं सेवकत्वं च स्यात्। गुणालयेन महानुभावेन विषज्जतः विशेषतः सङ्गं प्राप्नुवतः मम तत्पुरुषप्रसङ्गः तद्भक्तानां प्रकृष्टः सङ्गः स्यात् ।

७१। भक्ताय चित्रा भगवान् हि सम्पदो
राज्यं विभूतीर्न समर्द्धयत्यजः।
अदीर्घबोधाय विचक्षणः स्वयं
पश्यन्निपातं धनिनां मदोद्भवम् ॥१०।८१।३६।३७

७२। आहुश्च ते नलिननाभपदारविन्दं
योगेश्वरैर्हृदि विचिन्त्यमगाधबोधैः।
संसारकूपपतितोत्तरणावलम्बं
गेहं जुषामपि मनस्युदियात् सदा नः॥
१०।८२।४८।

७३। तन्नः प्रसीद निरपेक्षविमृग्ययुष्मत्-
पादारविन्दधिषणान्यगृहान्धकूपात्।

७१। सम्पल्लाभेऽपि न तत्र भगवत्प्रीतिमतः प्रसङ्ग इति दर्शयति तद्वाक्येनैव भक्तायेति। स्वयं धनिनः मदोद्भवं निपातं पतनं पश्यन् विचक्षणः सर्व्वज्ञः भगवान् हि अदीर्घबोधाय अल्पबोधाय अविवेकिने भक्ताय चित्राः विचित्राः बहुविधाः सम्पदः कोषादीन्, राज्यम् ऐश्वर्य्यं, विभूतीः कलत्रपुत्रादीन् न समर्द्धयति न ददाति।

७२। अध्यात्मशिक्षया विध्वस्तसंसारवासनानां गोपीनां निष्काम-प्रीतिं विवृणोति आहुरिति। हे नलिननाभ विश्वाधार, अगाधबोधैः गभीरज्ञानसम्पन्नैः योगेश्वरैः हृदि विचिन्त्यं चिन्तनीयं ते तव पदारविन्दं संसारकूपपतितोत्तरणावलम्बं संसारकूपे पतितानाम् उत्तरणाय उद्धरणाय अवलम्बम् आहुः, गेहं जुषाम् अपि नः अस्माकं मनसि सदा तत् उदियात् इति प्रार्थनम्।

७३। बलेः प्रीतेरनुभावमाह तदिति। तत् तथा नः प्रसीद यथा निरपेक्षविमृग्ययुष्मत्पादारविन्दधिषणान्यगृहान्धकूपात् निर-

निष्क्रम्य विश्वशरणांघ्र्युपलब्धवृत्तिः
शान्तो यथैक उत सर्व्वसखैश्चरामि ॥

१०।८५।४५ ।

७४ । कोनु त्वच्चरणाम्भोजमेवंविद् विसृजेत् पुमान् ।
निष्किञ्चनानां शान्तानां मुनीनां यस्त्वमात्मदः ॥

१०।८६।३३ ।

७५ । यो वा अनन्तस्य गुणाननन्ता-
ननुक्रमिष्यन् स तु बालबुद्धिः ।
रजांसि भूमेर्गणयेत् कथञ्चित्
कालेन नैवाखिलशक्तिधाम्नः ॥११।४।२ ।

पेचैः आप्तकामैः विमृग्यम् अन्वेष्यं युष्मत्पदारविन्दं धिषणम् आश्रयः तस्मात् अन्यत् यत् गृहं तदेव अन्धकूपः तस्मात् निष्क्रम्य निर्गत्य विश्व-शरणाङ्घ्र्युपलब्धवृत्तिः विश्वस्य शरणं रक्षितारः वृक्षाः तेषां अङ्घ्रिषु मूलेषु उपलब्धवृत्तिः गलितफलादिभिः उपलब्धा प्राप्ता वृत्तिः जीविका येन सोऽहं शान्तः सन् एकः असहायः एव चरामि, उत अथवा सर्व्व-सखैः त्वद्भक्तैः साधुभिः चरामि ।

७४ । मिथिलाधिपतेर्बहुलाश्वस्य प्रीतेराविष्कारं दर्शयति कोन्विति । एवंवित् सर्व्वजीवानां साक्षी आत्मा इत्याद्यभिज्ञः कः नु पुमान् जनः त्वच्चरणाम्भोजं विसृजेत् त्यजेत्, यः त्वं निष्किञ्चनानां शान्तानां मुनीनां मननशीलानाम् आत्मदः ।

७५ । प्रीत्या मुग्धानां तल्लीलामाधुर्य्यानुभवात् तत्सन्निधौ भगवतोऽनन्तभावो विलुप्तप्रायो भवतीति सर्व्वदैव भगवतोऽनन्तत्वं ज्ञाने जाग्रत्तया रक्षणीयमित्यभिप्रायेणाह रजांसीति

यानि यानीह कर्म्माणि यैर्यैः स्वच्छन्दजन्मभिः ।
चक्रे करोति कर्त्ता वा हरिस्तानि ब्रुवन्तु नः ॥

इति प्रश्नस्योत्तरभूतेन श्रीद्रविड़वाक्येन। अनन्तस्य अनन्तान् गुणान् अनुक्रमिष्यन् गणयितुमिच्छति यः स तु बालबुद्धिः बालानामिव बुद्धिर्यस्य स मन्दमतिः। कोऽपि महामतिः कालेन भूमेः रजांसि कथञ्चित् गणयेत् अखिलशक्तिधाम्नः गुणान् तु नैव गणयेत्।

श्रीमद्बोपदेवो मुक्ताफले भगवत्प्रीतेरन्तर्भूततया सर्व्वान् तदुचितरसान् संहितापद्यैः स्थापितवान्। रसत्वमस्याः श्रीमच्चैतन्यदेवेन पूर्णतामापादयत् तेन च श्रीमद्भागवतप्रपूर्त्तिरुदैत्। उद्धृतेषु संहितापद्येषु कुत्रकुत्रचिन्निदर्शनं तेषां सुधीभिर्विभाव्यम्।

इति श्रीसात्त्वतसंहितोत्थायां व्याख्यानसहितायां श्रीमद्गीताप्रपूर्त्तौ प्रीतिनिर्द्देशो नाम एकादशोऽध्यायः।

---

# द्वादशोऽध्यायः।

## पारमहंस्यधर्म्मनिर्द्देशः।

उपक्रमभूते वस्तुनिर्द्देशे

श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं गीयते।
यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्म्यमाविष्कृतं तच्छृण्वन् विपठन् विचारणपरो भक्त्या विमुच्येन्नरः॥

इति (१।४) पद्येन पारमहंस्यधर्म्मनिर्द्देशएव संहिताया अस्या लक्ष्यमिति प्राक् प्रदर्शितम्; सम्प्रत्युपसंहारे स एव कीदृगिति निर्णयाय पारमहंस्यधर्म्मनिर्द्देशनामाध्याय आरभ्यते। अत्रेदं विवेच्यम्—दृश्यतेऽत्र सर्व्वत्र भक्तितएव ज्ञानवैराग्ययोरभ्युदयनिर्णयः कर्म्म तूपेक्षितमेव। अतएव पञ्चमे पारमहंस्यधर्म्मनिर्द्देशे 'भक्तिज्ञानवैराग्यलक्षणं पारमहंस्यधर्म्मम्' इत्युक्तम्, तत् कथं

य एतान् मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान्।

इत्येकादशोक्तक्रियायाश्चानादरः। अवश्यमत्र समुच्चयमनभिनन्द्य तत्तद्विभिन्नमार्गेषु स्वेच्छया कमपि पन्थानमवलम्बितुं प्रोत्साहयत्याचार्य्य इत्यायाति। यतएव तृतीये प्रोक्तं श्रीमत्कपिलेन—

भक्तियोगश्च योगश्च मया मानव्युदीरित.।
ययोरेकतरेणैव पुरुषः पुरुषं व्रजेत्॥ (३।२९।३५) इति।

यद्येवमेव सिद्धान्तोऽत्रानुमोद्यते तर्हि द्वादशस्य चरमवाक्यं 'ज्ञानविरागभक्तिसहितं नैष्कर्म्म्यम्' इति प्रलापत्वेन परिणमते।

य एतान् मत्पथो हित्वा भक्तिज्ञानक्रियात्मकान्।

इत्यस्यान्ते 'क्षुद्रान् कामान् चलैः प्राणैर्जुषन्तः' इत्युक्तत्वात् क्रियया च वैदिकक्षुद्रकामसम्भूतकर्म्म नैवाभिप्रेतम्, किन्तर्हि नैष्कर्म्म्याख्यभगवद्भक्तियुक्ततत्परितोषणरूपैव। कर्म्मशब्देन भगवद्भाववर्ज्जितं वैदिकं कर्म्मैव द्योतते; अतः भक्ताविव भगवत्परितोषणं कर्म्मान्तर्भूय प्रायस्त-

१ । वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
जनयत्याशु वैराग्यं ज्ञानञ्च यदहैतुकम् ॥१।२।७ ।

२ । तच्छ्रद्दधाना मुनयो ज्ञानवैराग्ययुक्तया ।
पश्यन्त्यात्मनि चात्मानं भक्त्या श्रुतगृहीतया ॥
१।२।१२ ।

स्यानुक्तेव इति तत्त्वम् । यत्तु श्रीमत्कपिलेन 'भक्तियोगोयोगोवा' इति विकल्पोऽनुमोद्यते तत् पुनरेकस्यान्यस्मिन् चरमे प्रवेशोऽवश्यम्भावीत्येकत्वप्रदर्शनायेति गीतासमन्वयभाष्ये सिद्धान्तितमस्माभिः। ज्ञानपक्षपातिन आचार्य्या ज्ञानं, भक्तिपक्षपातिनश्च भक्तिं प्रधानत्वेन गृह्णन्ति। तयोरुच्चतमभूमावेकत्वं सामञ्जस्यञ्चेति संचिन्त्य न पुनः संहिताया अस्या अभिप्रायसङ्कोचं विधातुं वयमुत्सहामहे। अतएवैनया निर्द्दिष्टेन भक्त्यावन्तर्भूतनैष्कर्म्म्येण पारमहंस्यधर्म्मेण श्रीमद्गीताप्रपूर्त्तेरुपसंहारः ।

१ । न खलु समजातित्वं विनैकस्मादन्यस्य सम्भवः, अतएव ज्ञानवैराग्ययोर्भक्तितोऽभ्युदयमभिधाय पारमहंस्यधर्म्मनिर्द्देशः प्रारभ्यते वासुदेव इति । भगवति वासुदेवे सर्व्वान्तर्यामिणि भक्तियोगः प्रयोजितः वैराग्यं यत् ज्ञानं च अहैतुकं शुष्कज्ञानाद्यगोचरम् औपनिषदं तत् आशु शीघ्रं जनयति ।

२ । केवलया भक्त्या साधनरूपया न भवति भगवत्साक्षात्कारः किन्तर्हि ज्ञानवैराग्ययुक्तया परमया भक्त्येति निर्द्दिशति तदिति ।

वदन्ति तत् तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम् ।
ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ॥ (१।२३) ।

इति त्रिधा शब्दितमेकं तत् तत्त्वम् आत्मानं परमात्मानं—'स्वरूपाख्य-जीवाख्य-मायाख्यशक्तीनामाश्रयम्'—श्रीमज्जीवः, 'अन्तर्यामिणं'—श्रीमच्चक्रवर्त्ती—श्रुतगृहीतया वेदान्तश्रवणेन गृहीतया ज्ञानवैराग्ययुक्तया भक्त्या आत्मनि क्षेत्रज्ञे—'शुद्धे चेतसि'—श्रीमज्जीवः—मुनयः पश्यन्ति ।

३ । ज्ञानं यदा प्रतिनिवृत्तगुणोर्म्मिचक्र-
मात्मप्रसाद उभयत्र गुणेष्वसङ्गः ।
कैवल्यसम्मतपथस्त्वथ भक्तियोगः
को निर्वृतो हरिकथासु रतिं न कुर्य्यात् ॥
२।३।१२ ।

तत् तत्त्वं ब्रह्मपरमात्मभगवद्वाच्यम् आत्मनि पश्यन्ति आत्मानं जीवञ्च तदाश्रितत्वेनेति व्याख्यानस्य रुचिरत्वमेव । अतएव 'आत्मनि च तत्-पदार्थे ईश्वरे आत्मानं त्वम्पदार्थं जीवं पश्यन्ति अनुभवन्ती'ति श्रीम-च्चक्रवर्त्तिव्याख्यानुमोदनीया भक्तवत्सले भक्तानां दर्शनमेव पारमहंस्य-धर्म्मस्य विशेषलक्षणम् । ऋषीणां महर्षीणां योगिनां महाजनानां भक्तानामावासो भवति भगवत्साक्षात्कारकृतार्थहृदयमिति

यस्यास्ति भक्तिर्भगवत्यकिञ्चना सर्व्वैर्गुणैस्तत्र समासते सुराः (१०।२४) ।

इत्यनेन प्रोद्भासितम् ।

३ । पारमहंस्यधर्म्मानुरक्तानां भगवत्साक्षात्कारकृतकृत्यतायां तस्मिन्नेव स्यान्नियतवासः, तत् कथं भगवत्कथाश्रवणे स्यात्तेषामादर इति न मन्तव्यं प्रेमास्पदस्य तत्सहवासाविच्छेदेऽपि गुणश्रवणे स्वभावत एव रतिर्भवति । तादृशानां भगवति नित्यतृप्तानां भवत्येव सेति निर्द्धा-रयति ज्ञानमिति । यत् यत्र पारमहंस्ये धर्म्मे आ प्रतिनिवृत्तगुणोर्म्मि-चक्रम् आ सर्व्वतः प्रतिनिवृत्तम् उपरतं गुणोर्म्मीणां चक्रं समूहो यस्मात् तत् ज्ञानम्, आत्मप्रसादः, उभयत्र इहामुत्र च गुणेषु विषयेषु असङ्गः अनासक्तिः वैराग्यम्, अथ अपिच कैवल्ये स्वरूपैक्ये सम्मतः अभिमतः पन्थाः भक्तियोगः विद्यन्ते तत्र निर्वृतः भगवत्साक्षात्कारानन्दकृतकृत्यः सन् कः हरिकथासु रतिं न कुर्य्यात् । साधनाध्यायेऽस्य सन्निवेशः निवृत्तस्यापि हरिकथासुधापानं नित्यकालं साधनाकारेण तिष्ठतीति प्रदर्शनार्थम् ।

४ । तत्साधुवर्य्यादिश वर्त्म शं नः
संराधितोभगवान् येन पुंसाम् ।
हृदि स्थितो यच्छति भक्तिपूते
ज्ञानं सतत्त्वाधिगमं पुराणम् ॥३।५।४ ।

५ । सा श्रद्दधानस्य विवर्द्धमाना
विरक्तिमन्यत्र करोति पुंसः ।
हरेः पदानुस्मृतिनिर्वृतस्य
समस्तदुःखाप्ययमाशु धत्ते ॥३।५।१३ ।

४ । भगवद्भक्तस्य विदुरस्य पारमहंस्ये धर्म्मे निष्ठाप्राप्तिप्रार्थनं तद्धर्म्मस्य श्रेष्ठत्वप्रदर्शनायोदाह्रियते तदिति । हे साधुवर्य्य मैत्रेय, नः अस्माकं शं सुखकरं वर्त्म पारमहंस्यधर्म्मलाभोपयोगिनं मार्गम् आदिश उपदिश, येन वर्त्मना आराधितः स भगवान् पुंसां भक्तिपूते भक्त्या पवित्रीकृते हृदि स्थितः सत्त्वाधिगमं तत्त्वस्य ब्रह्मपरमात्मभगवत्स्वरूपस्य अधिगमः प्राप्तिः यस्मात् तत् पुराणं नित्यप्रसिद्धं ज्ञानं यच्छति । स्वयं भगवतात्मसम्पर्कीयज्ञानदानस्योल्लेखात् पारमहंस्यधर्म्मनिष्ठाप्रार्थनपरमिदं पद्यमिति स्फुटम् ।

५ । पारमहंस्यधर्म्मे प्रवेशस्य सोपानमाह सेति ।

यस्मिन् नृणां ग्राम्यसुखानुवादैर्मतिर्गृहीतानु हरेः कथायाम् ।

इत्यतः सा मतिः श्रद्दधानस्य पुंसः जनस्य विवर्द्धमाना हरेः कथायाः अन्यत्र विरक्तिं करोति ; हरेः पदानुस्मृतिनिर्वृतस्य हरेः पदस्य स्वरूपस्य अनुस्मृतिः प्रतिक्षणमेव अनुभूतिः तया निर्वृतस्य लब्धपरानन्दस्य तस्य आशु शीघ्रं समस्तदुःखाप्ययं समस्तस्य दुःखस्य अप्ययं नाशं धत्ते विदधाति ।

६ । यच्छ्रद्धया श्रुतवत्या च भक्त्या
संमृज्यमाने हृदयेऽवधाय ।
ज्ञानेन वैराग्यबलेन धीरा
व्रजेम तत्तेऽङ्घ्रिसरोजपीठम् ॥३।५।४१ ।

७ । पानेन ते देव कथासुधायाः
प्रवृद्धभक्त्या विशदाशया ये ।
वैराग्यसारं प्रतिलभ्य बोधं
यथाञ्जसान्वीयुरकुण्ठधिष्ण्यम् ॥३।५।४५ ।

८ । ज्ञानविज्ञानयुक्तेन भक्तियुक्तेन चात्मना ।
परिपश्यत्युदासीनं प्रकृतिञ्च हतौजसम् ॥३।२५।१८

६ । ज्ञानवैराग्यभक्तिलक्षणेन पारमहंस्यधर्म्मेण भगवत्साक्षात्कारमाह यदिति । श्रद्धया श्रुतवत्या श्रवणपूर्व्विकया भक्त्या च संमृज्यमाने संशोध्यमाने हृदये यत् अङ्घ्रिसरोजम् अवधाय ध्यात्वा वैराग्यबलेन वैराग्यं बलं यस्य तेन वैराग्यपरिपुष्टेन ज्ञानेन धीराः धृतिमन्तः भवन्ति, ते तव तत् अङ्घ्रिसरोजपीठं व्रजेम वयं देवाः ।

७ । पानेनेति । हे देव, ते तव कथासुधायाः पानेन प्रवृद्धभक्त्या ये विशदाशयाः निर्म्मलाशयाः—'प्रोज्झितकैतवाः'— श्रीमज्जीवः, ते वैराग्यसारं वैराग्यं सारोबलं यस्य तं बोधं साक्षाज्ज्ञानं प्रतिलभ्य प्राप्य यथा अञ्जसा अविलम्बेनैव अकुण्ठधिष्ण्यं वैकुण्ठलोकम् अन्वीयुः प्राप्नुयुः ।

८ । पारमहंस्यधर्म्मेण प्रकृतेरावरकत्वं न तिष्ठतीत्याह ज्ञानेति । ज्ञानविज्ञानयुक्तेन परोक्षापरोक्षज्ञानयुक्तेन भक्तियुक्तेन च आत्मना आत्मानम् उदासीनं विषयैः अनभिभूयमानम् अनासक्तं प्रकृतिं च हतौजसं क्षीणबलां किञ्चिदपि कर्त्तुम् अशक्तां परिपश्यति ।

९ । भक्त्या पुमान् जातविराग ऐन्द्रियात्
दृष्टश्रुतान्मद्रचनानुचिन्तया ।
चित्तस्य यत्तो ग्रहणे योगयुक्तो
यतिष्यते ऋजुभिर्योगमार्गैः ॥
१० । असेवयायं प्रकृतेर्गुणानां
ज्ञानेन वैराग्यविजृम्भितेन ।
योगेन मय्यर्पितया च भक्त्या
मां प्रत्यगात्मानमिहावरुन्धे ॥३।२५।२६।२७ ।
११ । ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः ।
क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम् ॥
३।२५।४३ ।

९।१० । पारमहंस्यधर्म्मस्य सोपानप्रदर्शनानन्तरं भगवता साक्षात्-सम्बन्धञ्च तेन दर्शयति भक्त्येति असेवयेति । मद्रचनानुचिन्तया मम सर्व्वनियन्तुः रचनायाः विचित्रनिर्म्माणस्य अनुचिन्तनं यस्यां तया भक्त्या दृष्टश्रुतात् ऐहिकामुष्मिकात् ऐन्द्रियात् भोगसुखात् जातविरागः योग-युक्तः कर्म्मयोगयुक्तः पुमान् यत्तः यत्नवान् सन् ऋजुभिः अनायासैः स्वाभाविकैः योगमार्गैः ध्यानधारणादिभिः चित्तस्य ग्रहणे वशीकारे यतिष्यते । अयं पुमान् प्रकृतेः गुणानाम् असेवया वैराग्यविजृम्भितेन ज्ञानेन योगेन कर्म्मयोगेन मयि सर्व्वान्तर्यामिणि अर्पितया मदनन्य-विषयया च भक्त्या मां प्रत्यगात्मानं परमात्मानम् इह अवरुन्धे प्राप्नोति ।

११ । पारमहंस्येन धर्म्मेण भगवति नित्यस्थितिमाह ज्ञानेति । ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिनः कर्म्मार्पणवन्तः क्षेमाय नित्य-कल्याणाय मे मम सर्व्वान्तर्यामिणः अकुतोभयं भयनिवर्त्तकं पादमूलं विशन्ति ।

१२ । एतद्वै श्रद्धया भक्त्या योगाभ्यासेन नित्यशः ।
समाहितात्मा निःसङ्गो विरक्तः परिपश्यति ॥
३।३१।३० ।

१३ । यदा रतिर्ब्रह्मणि नैष्ठिकी पुमा-
नाचार्य्यवान् ज्ञानविरागरंहसा ।
दहत्यवीर्य्यं हृदयं जीवकोषं
पञ्चात्मकं योनिमिवोत्थितोऽग्निः ॥

१४ । दग्धाशयो मुक्तसमस्ततद्गुणो
नैवात्मतो बहिरन्तर्विचष्टे ।
परात्मनोर्यद्व्यवधानं पुरस्तात्
स्वप्ने यथा पुरुषस्तद्विनाशे ॥४।२२।२६।२७ ।

१२ । तेन च साक्षात्कारमाह एतदिति । एतत् ज्ञानस्वरूपं ब्रह्म श्रद्धया भक्त्या नित्यशः योगाभ्यासेन समाहितात्मा समाहितचित्तः निःसङ्गः अनासक्तः विरक्तः वैराग्ययुक्तः जनः परिपश्यति साक्षात्करोति ।

१३।१४ । पारमहंस्येन धर्म्मेण परमात्मतोभेदसाधकमज्ञानता-व्यावरणं तिरोधत्ते भवति च तेन जीवात्मनोऽव्यवहितसम्बन्ध इत्याह यदिति दग्धेति । यदा ब्रह्मणि नैष्ठिकी निष्ठां प्राप्ता रतिः प्रेमा भवति तदा आचार्य्यवान् आचार्य्ये शास्तरि सर्व्वान्तरात्मनि भक्तिमान् ज्ञान-विरागरंहसा ज्ञानवैराग्ययोः वेगेन बलेन पञ्चात्मकम् अविद्यास्मिता-रागद्वेषाभिनिवेशाः पञ्च तदात्मकं जीवकोषं जीवस्यावरकं हृदयम् अहङ्कारम् अहंममेति भावाधिष्ठानम् अन्तःकरणम् अवीर्य्यम् निर्व्वासनं यथा स्यात् तथा—उत्थितः प्रज्वलितः अग्निः योनिं स्वप्रभवस्थानम् इव—दहति । दग्धाशयः दग्धः आशयः हृदयं यस्य, मुक्तसमस्ततद्गुणः मुक्ताः समस्ताः तस्य आशयस्य गुणाः अहंममेत्यादिभावः यस्य स

१५। वासुदेवे भगवति भक्तियोगः समाहितः।
सध्रीचीनेन वैराग्यं ज्ञानञ्च जनयिष्यति॥
४।२९।३७।

१६। भयं प्रमत्तस्य वनेष्वपि स्यात्
यतः स आस्ते सह षट्सपत्नः।
जितेन्द्रियस्यात्मरतेर्बुधस्य
गृहाश्रमः किं नु करोत्यवद्यम्॥

आत्मनः वहिः दृश्यम् अन्तः अन्तःकरणधर्म्मं सुखदुःखादि न विचष्टे पश्यति एव। कथमेवं भवति? पुरस्तात् पूर्व्वं परमात्मनोः पर-मात्मजीवात्मनोः यत् व्यवधानम् आसीत् तद्विनाशे तस्य निराशे स्वप्ने दृष्टं यथा स्वप्ननाशे पुरुषः न पश्यति तद्वत्।

१५। भगवत्यनुरागाज्ज्ञानवैराग्योदय इत्याह वासुदेव इति। सध्रीचीनेन समीचीनेन प्रकारेण भगवति वासुदेवे सर्व्वान्तर्यामिणि समाहितः सम्यक् आहितः भक्तियोगः वैराग्यं ज्ञानञ्च जनयिष्यति।

१६। पारमहंस्यधर्म्मे निविष्टानां गृहे स्थितिः गार्हस्थ्यजीवनाति-पातश्च न सम्भवति गृहस्य ब्रह्मणि स्थितेर्विरोधित्वादिति विप्रतिपत्ते-र्निरसनाय प्रियव्रतस्यात्मारामस्य कथं गृहे स्थितिरभवत् तत्प्रदर्शने-नास्मिन् धर्म्मे भगवदाज्ञया गार्हस्थ्यजीवनातिपातो न ब्रह्मसाक्षात्-कारं तस्मिन् वासञ्च व्याहन्तीत्याह भयमिति। प्रमत्तस्य अजितेन्द्रि-यस्य वनेषु अपि भयं स्यात्, यतः स सहषट्सपत्नः सहैव षट् सपत्नाः शत्रवः मनोबुद्धीन्द्रियाणि च यस्य स तथाभूतः तत्र आस्ते। जिते-न्द्रियस्य आत्मरतेः आत्मारामस्य बुधस्य विवेकिनः—'वनगृहयोस्तार-तम्याभावं बुध्यमानस्य'—श्रीमच्चक्रवर्त्ती—गृहाश्रमः किं नु अवद्यं रागादिदोषं करोति।

१७ । यः षट् सपत्नान् विजिगीषमाणो
गृहेषु निर्व्विश्य यतेत पूर्व्वम् ।
अत्येति दुर्गाश्रित ऊर्ज्जितारीन्
क्षीणेषु कामं विचरेद्विपश्चित् ॥
१८ । त्वं त्वब्जनाभाङ्घ्रिसरोजकोष-
दुर्गाश्रितो निर्ज्जितषट्सपत्नः ।
भुङ्क्ष्वेह भोगान् पुरुषातिदिष्टान्
विमुक्तसङ्गः प्रकृतिं भजस्व ॥५।१।१७—१८ ।

१७ । य इति । यः षट् सपत्नान् शत्रून् विजिगीषमाणः स पूर्व्वं गृहेषु निर्व्विश्य स्थित्वा जेतुं यतेत । कथमेवं कुर्य्यात् ? ऊर्ज्जितारीन् बलिष्ठशत्रून् दुर्गाश्रितः अत्येति जयति । क्षीणेषु अरिषु विपश्चित् विद्वान् कामं विचरेत् गृहेषु अन्यत्र वा ।

१८ । त्वमिति । तु शब्दः—गृहदुर्गाश्रयतः पारमहंस्यधर्म्माश्रयिणां वैशिष्ट्यं दर्शयति । त्वं तु अब्जनाभाङ्घ्रिसरोजकोषदुर्गाश्रितः अब्जनाभस्य विश्वाधारस्य अङ्घ्रिसरोजकोषएव दुर्गं तदाश्रितः अतएव निर्ज्जितषट्सपत्नः निर्ज्जिताः अभिभूताः षट् सपत्नाः शत्रवः येन सः । यद्येवं किं मया कर्त्तव्यम् ? पुरुषातिदिष्टान् पुरुषेण ईश्वरेण अतिदिष्टान् दत्तान् भोगान् इह भुक्त्वा विमुक्तसङ्गः आसक्तिविरहितः प्रकृतिं प्रजावर्गं भजस्व सेवस्व परिपालय । आत्मनिष्ठस्य प्रियव्रतस्य 'भोगान् तावद् भुङ्क्ष्व पश्चाद्विमुक्तसङ्गः सन् प्रकृतिं स्वरूपं भजस्व आत्मनिष्ठोभव' इति पश्चादात्मनिष्ठत्वप्राप्तिसम्भावना कुतः ? प्रजादीन् सर्व्वाननपेक्ष्य परमपुरुषे स्थितिरेवात्राभिप्रेता, अन्यथा 'स जगतीपतिरीश्वरेच्छयाऽधिनिवेशितकर्म्माधिकारोऽखिलजगद्बन्धध्वंसनपरानुभावस्य भगवत आदिपुरुषस्याङ्घ्रियुगलानवरतध्यानानुभावेन परिरन्धितकषायाशयोऽवदातो-

१९। एवमनुशास्यात्मजान् स्वयमनुशिष्टानपि लोकानुशासनार्थं महानुभावः परमसुहृद्भगवान् ऋषभापदेश उपशमशीलानामुपरतकर्म्मणां महामुनीनां भक्तिज्ञानवैराग्यलक्षणं पारमहंस्यधर्म्ममुपशिक्षमाणः स्वतनयशतज्येष्ठं परमभागवतं भगवज्जनपरायणं भरतं धरणिपालनायाभिषिच्य स्वयम्भवनएवोर्व्वरितशरीरमात्रपरिग्रह उन्मत्त इव गगनपरिधानः प्रकीर्णकेश आत्मन्यारोपिताहवनीयो ब्रह्मावर्त्तात् प्रवव्राज।५।५।२८।

ऽपि मानवर्द्धनो महतां महीतलमनुशशास' (५।१) इत्यादिपुरुषनियोगग्रहणान्तरोदीरितवाक्यानुक्रमवाक्यानि च मध्यगतैरेतैर्न सामञ्जस्यं भजन्ते। 'अनवरतध्यानानुभावो' दर्शयति नियतं भगवति समवस्थाय तस्मिन्नेव प्रजादीन् पश्यन् स तेषां पालनमकरोदिति। पारमहंस्यधर्म्मस्यैतदेवासाधारणं लक्षणम्।

१९। पारमहंस्यधर्म्मान्तरङ्गत्वं परिव्राजकधर्म्मस्य दर्शयति एवमिति। लोकानुशासनार्थम् एवम् स्वयमनुशिष्टान् अपि आत्मजान् पुत्रान् अनुशास्य उपदिश्य महानुभावः परमसुहृत् जीवानामकारणबन्धुः ऋषभापदेशः ऋषभनामा भगवान् आविर्भूतस्वरूपः उपशमशीलानाम् उपरतकर्म्मणां निवृत्तकर्म्मणां महामुनीनां भक्तिज्ञानवैराग्यलक्षणं पारमहंस्यं धर्म्मम् उपशिक्षमाणः स्वयमाचरन् अन्यानुपशिक्षयन्—'गृहमेधिनां धर्म्माननुशिक्षमाणः' इत्यत्रानुशिक्षयन्निति व्याख्यायात्र 'उपशिक्षयिष्यन्' इति व्याख्या न रुचिरा; पूर्व्वतएव तस्य तस्मिन् धर्म्मे स्थितिर्व्याख्यायास्याः प्रतिरोधिनी—स्वतनयशतज्येष्ठं परमभागवतं भगवज्जनपरायणं भरतं धरणिपालनाय अभिषिच्य स्वयम्भवनएव आत्मनि वर्त्तमान

२० । वासुदेवे भगवति भक्तिमुद्वहतां नृणाम् ।
ज्ञानवैराग्यवीर्य्याणां नेह कश्चिद्व्यपाश्रयः ॥
६।१७।३१ ।

२१ । संतन्वन्तः प्रजातन्तून् सुखं दुःखं भवाभवौ ।
प्राप्तं प्राप्तं च सेवन्तो मच्चित्ता विचरिष्यथ ॥

२२ । उदासीनाश्च देहादावात्मारामा धृतव्रताः ।
मय्यावेश्य मनः सम्यङ् मामन्ते ब्रह्म यास्यथ ॥
१०।७३।२२।२३ ।

एव उर्व्वरितशरीरमात्रपरिग्रहः उर्व्वरितः अवशिष्टः शरीरमात्रं परिग्रहो यस्य, उन्मत्तः इव गगनपरिधानः दिग्वासाः प्रकीर्णकेशः आत्मनि आरोपिताहवनीयः आरोपितः निविष्टः आहवनीयः होमाग्निः येन स ब्रह्मावर्त्तात् स्वदेशात् प्रवव्राज प्रव्रज्यामकरोत् ।

२० । पारमहंस्यधर्म्मनिरता जना नान्यत्किञ्चनापेक्षन्त इत्याह वासुदेव इति । ज्ञानवैराग्यवीर्य्याणां ज्ञानवैराग्ययोः वीर्य्यं बलं येषां तेषां भगवति वासुदेवे सर्व्वान्तर्यामिणि भक्तिम् उद्वहतां नृणां कश्चित् व्यपाश्रयः विशिष्टबुद्ध्या आश्रयणीयः अर्थः न इह अस्ति ।

२१।२२ । गृहस्थानां पारमहंस्यधर्म्माचरणप्रक्रममाह राज्ञः प्रत्याचार्य्यवाक्येन संतन्वन्त इति उदासीना इति । प्रजातन्तून् पुत्रादिसन्ततीः संतन्वन्तः सम्यक् तन्वन्तः, सुखं दुःखं, भवाभवौ सम्पद्विपदौ, प्राप्तं प्राप्तं यत् यत् प्राप्तं तत् तत् समत्वेन सेवन्तः सेवमानाः मच्चित्ताः मयि सर्व्वान्तर्यामिणि बद्धहृदयाः विचरिष्यथ गृहस्थाचारं करिष्यथ । देहादौ उदासीनाः अनासक्ताः, आत्मारामाः आत्मरतयः—'आत्मा मन एव आरामः मत्क्रीड़ावनं येषां तथाभूताः आत्मनो मम आरामरूपा वा सन्तः'—श्रीमज्जीवः, धृतव्रताः धृतं दृढ़ं गृहीतं व्रतं यैः ते ययं मयि

२३। य एतान् मत्पथोहित्वा भक्तिज्ञानक्रियात्मकान्।
क्षुद्रान् कामान् चलैः प्राणैर्जुषन्तः संसरन्ति ते॥
११।२१।१।

२४। अत्र संकीर्त्तितः साक्षात् सर्व्वपापहरो हरिः।
नारायणो हृषीकेशो भगवान् सात्त्वतां पतिः॥

२५। अत्र ब्रह्म परं गुह्यं जगतः प्रभावप्ययम्।
ज्ञानञ्च तदुपाख्यानं प्रोक्तं विज्ञानसंयुतम्॥

२६। भक्तियोगः समाख्यातो वैराग्यञ्च तदाश्रयम्।
१२।१२।३—५।

मनः आवेश्य—'सम्यक् सदा सामीप्यादि यथा स्यात् तथा'—श्रीमज्जीवः, अन्ते सम्यगावेशनानन्तरं ब्रह्म यास्यथ प्राप्स्यथ, अथवा अन्ते जीवनान्ते ब्रह्म यास्यथ 'एषोऽस्य परमोलोकः' इति मयि ब्रह्मणि एव निवत्स्यथ।

२३। भक्तिज्ञाननैष्कर्म्यात्मकं पारमहंस्यधर्म्मं विसृष्टं विद्वणोत्याचार्य्यवाक्येन यद्दति। य: जनः भक्तिज्ञानक्रियात्मकान् भक्तिः च ज्ञानं च क्रिया क्षुद्रकामवर्ज्जितं भगवद्भावयुक्तं कर्म्म च आत्मा स्वरूपं येषां तान् एतान् मत्पथः मदुक्तमार्गान्—'मत्प्रापकमार्गान्'—श्रीमच्चक्रवर्त्ती—हित्वा परित्यज्य चलैः अस्थिरैः प्राणैः देहवायुभिः इन्द्रियैः वा जुषन्तः सेवमानाः क्षुद्रकर्म्माचरणपरायणाः भवन्ति ते संसरन्ति।

२४—२६। संहिता स्वस्याःपारमहंस्यधर्म्मपरत्वमुपसंहारवाक्यैर्द्दर्शयति, अत्रेति, अत्रेति, भक्तियोगइति। अत्र संहितायां पापहरः हरिः, नारायणः नरसमूहानामाश्रयः अन्तर्यामिपुरुषः 'सर्व्वजीवाश्रयः'—श्रीमज्जीवः, हृषीकेशः इन्द्रियाणामधीश्वरः सर्व्वजीवेन्द्रियप्रवर्त्तकः—

२७ । अविस्मृतिः कृष्णपदारविन्दयोः
क्षीणोत्यभद्राणि शमं तनोति च ।
सत्त्वस्य शुद्धिं परमात्मभक्तिं
ज्ञानञ्च विज्ञानविरागयुक्तम् ॥१२।१२।५४ ।

'परमात्मा' श्रीमज्जीवः, भगवान् सर्व्वैश्वर्य्यपूर्णः, सात्त्वतां पतिः भक्तानां स्वामी साक्षात् साक्षात्सम्बन्धेन संकीर्त्तितः । अत्र संहितायां विश्वस्य जगतः प्रभवाप्ययं प्रभवत्यस्मादिति प्रभवम् अप्येत्यस्मिन्निति अप्ययं परं गुह्यं रहस्यं ब्रह्म, तदुपाख्यानं तज्ज्ञानम् उपाख्यायते प्रकाश्यते येन तत्, विज्ञानसंयुक्तम् अपरोक्षज्ञानसमन्वितं ज्ञानं प्रोक्तम् । भक्तियोगः समाख्यातः कथितः, तदाश्रयं भक्तियोगेन निष्पादितं वैराग्यं च समाख्यातम् ।

२७ । भगवत्सौन्दर्य्याकर्षणेन परिहृतचित्ता निवृत्तियोगिनो ज्ञानवैराग्यसम्पन्ना भक्तिं श्रयन्ते, ततएव पारमहंस्यधर्म्मस्याभ्युदय इति तद्वर्णयन्नाह अविस्मृतिरिति । कृष्णपदारविन्दयोः कृष्णस्य चित्ताकर्षणस्य पदारविन्दयोः अविस्मृतिः चिन्तापथे नियतस्थितिः अभद्राणि क्षिणोति नाशयति, शमं शान्तिं, सत्त्वस्य चित्तस्य शुद्धिं, परमात्मभक्तिं, विज्ञानविरागयुक्तं विज्ञानम् अपरोक्षानुभवः विरागः वैराग्यं ताभ्यां युक्तं ज्ञानञ्च तनोति ।

पद्येऽस्मिन्नुपक्रमोपसंहारयोरैक्यं विद्वद्भिरेवमवधारयितव्यम् । उपक्रमेऽविच्छेदध्यानरूपः प्रवृत्तियोगः—'सत्यं परं धीमहि' इत्यनेन प्रदर्शितः, अत्रोपसंहारे—'अविस्मृतिः कृष्णपदारविन्दयोः' इत्यनेन तेनैक्यम् ; उपक्रमे भगवत्प्रेरणया निवृत्तियोगतः प्रवृत्तियोगे प्रवेशः—'तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरयः' इत्यनेन ध्वनितः ; अत्रोपसंहारे 'कृष्णपदारविन्दयोः' इत्यनेन निवृत्तियोगिनां चित्ताकर्ष

